The Department of Public Instruction, Bombay

# AṆU-BHĀSHYA

OF

# VALLABHĀCHĀRYA

EDITED

WITH A NEW COMMENTARY, THE BĀLBODHINĪ,

BY

PANDIT SHRIDHAR TRYAMBAK PĀTHAK,
Shāstri, Deccan College, Poona.

PART I TEXT




First Edition; 1000 Copies.

1921.

Price Three Rupees and Four Annas.

शब्दबलविचारेण मयटो विकारार्थत्वं निवारितम् । अर्थबल-
विचारेणापि निराकारोति ।

## तद्धेतुव्यपदेशाच्च ॥१।१।१३॥

हेतुत्वेन व्यपदेशो हेतुव्यपदेशः । तस्य हेतुव्यपदेशस्तद्धेतुव्यप-
५ देशस्तस्मात् । एष ह्येवानन्दयाति । आनन्दयतीत्यर्थः । सर्वस्यापि
विकारभूतस्यानन्दस्यायमेवानन्दमयः कारणं यथा विकृतस्य जगतः
कारणं ब्रह्माविकृतं सच्चिद्रूपमेवमेवानन्दमयोपि कारणत्वादविकृतोन्यथा
तद्वाक्यं व्यर्थमेव स्यात् । तस्मान्नानन्दमयो विकारार्थः । चकारः समु-
च्चयं वदन् सूत्रद्वयेनैकोर्थो मध्ये प्रतिपादित इत्याह ॥१।१।१३॥

१० ननु किमिति निर्बन्धेन सूत्रत्रयेणैवं वर्ण्यते । अन्नमयादिवदु-
पासनापरत्वेनापि श्रुत्युपपत्तेः । पक्षपुच्छादित्वेन मोदप्रमोदादीनामुक्त-
त्वाच्च । तस्माद्ब्रह्मत्वेन साधितमपि आवश्यकोपपत्त्यभावान्न ब्रह्मपरत्व-
मिति प्राप्तेभिधीयते ।

## मान्त्रवर्णिकमेव च गम्यते ॥ १।१।१४ ॥

१५ सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् ।
सोश्नुते सर्वान्कामान्सह । ब्रह्मणा विपश्चिता ( तै. २।१ ) इति मन्त्रः ।
मन्त्रेणाभिधया वृत्त्या प्रतिपाद्यं मान्त्रवर्णिकं तदुपपादनग्रन्थे तदेव मुख्य-
तया ज्ञायते । तत्र यदुद्दिष्टं तदेव मुख्यतया ज्ञातव्यम् । उपपादनीयं च
संदिग्धम् । तत्र ब्रह्मणा विपश्चितेति संदिग्धं सर्वज्ञं तस्य हि फलत्वं
२० वाक्ये नोपपाद्यते । फलं तु सर्वैः स्तुत आनन्दः । अभ्यासात्स्तुतत्वमित्य-
वोचाम । शिरःपाण्यादिकं तु स्तुत्यर्थमेव । पुरुषविधत्वाय । लोके ह्यन्तर्भूतं
बहिर्वेष्टितं च तदाकारं भवति ।

जीवोत्र मुख्यः । कर्तृत्वेन व्यपदेशात् । स च वस्तुतो हंस-
रूपः । पुरुषाधिकारकं हि शास्त्रम् । तेन पुरुषशरीरे तदाकारः सर्वं
२५ फलं प्राप्नोति । अतः पुरुषं हंसरूपेणानुवर्णयति । पञ्चस्वपि शारीर आत्मा

॥ श्रीः ॥

श्रीमद्वल्लभाचार्यप्रणीतं

# श्रीमदणुभाष्यम् ।



पाठकोपाह्वश्रीधरशर्मविरचितया
बालबोधिन्याख्यटीकया समेतम् ।

तच्च


मुम्बापुरस्थराजकीयग्रन्थशालाधिकारिणा प्रकाशितम् ।

शाके १८४३
ख्रिस्ताब्दे १९२१

प्रथमयमङ्कनावृत्तिः

मूल्यं सपादं रूप्यकत्रयम

# अनुक्रमणिका.







# PREFACE.

This volume, which is the first part of my edition of the Aṇubhāshya contains only the text, along with the various readings found in the books and manuscripts mentioned below. I have also given, in the beginning, a very brief summary of the contents of every Sūtra, so that the reader can have at a glance a general view of the whole.

The names of the Adhikaraṇas are taken from the Vadāntādhikaraṇa-mālā in all cases except those for which that work mentions no names. To these latter I have given suitable new names, pointing out all such cases in foot notes. At the close of the text, again, I have given all the Kārikās of the two Āchāryas, with references to the pages where they occur, for the convenience of the reader. As some Kārikas consist of one and some of three, instead of two, lines as usual, the references are given for each line of a Kārika A list of the Adhikaraṇas and another, of the Sutras is also appended, the latter being arranged in alphabetical order.

These are followed by an Index in alphabetical order of all those quotations cited by the author of which the origin could be traced, along with references to the original works where they occur. Another index gives the quotations of which the source could not be ascertained. A few of these quotations, although stated by Prakās'a and other commentaries to belong to certain works, could not be found there in the available editions of these works. In their case I have only mentioned against them the names of the works and other details as given by the commentators.

Finally, I have given an index of the works and authors referred to in the course of the Bhashya.

In preparing this edition, the following manuscripts and books have been consulted for the verification of the text of the Aṇubhāshya:

*a.* A manuscript in the Manuscript Library of the Deccan College No. 302 of 1879-80. This Ms. is in a torn condition, one page of it is lost, and sentences and words are often missing.

*b.* The Edition in the Chaukhamba series 1907.

*c.* The Edition in the Bibliotheca Indica series together with the various readings given therein, 1897.

*m.* A manuscript in the library of the temple of Shri Balkrishna in Poona. This was kindly given to me by Mr. M. G. Shastri M. A of the Deccan College

*d.* A manuscript in the Deccan College Library No. 1 of 1869-70. Nine pages are wanting; written in 1855 of the Vikrama Era.

*e.* A manuscript of only the first Adhyaya from the same library No. 303 of 1879-80.

*f.* A manuscript of only the second Adhyaya from the same library, No. 303 of 1879-80.

*s.* Bhāshya-Pradīpa with the various readings, Edited by Mr. M. G. Shastri M. A.

( वि. मू. ) The text of the Commentary called Vivarana.

( वि. ) The various readings suggested in the same.

In accepting the various readings special care was taken in selecting them. All the incorrect readings have been discarded and all the correct readings, though some of them are of the same import, are accepted.

My hearty thanks are due to those gentlemen who were kind enough to allow me the use of the various books and manuscripts.

The second part of this work, which will be shortly published, will contain the Balabodhini, a commentary on the text prepared by me. It will also contain a critical introduction, with an exhaustive discussion of various important points regarding the S'uddhadvaita system of Vallabhacharya and other connected matters, so that I shall not refer to them in this preface. I shall also reserve till then my acknowledgment of thanks for the help I have received in the preparations of this work from many of my friends.

In conclusion, I beg that my learned readers will treat with indulgence any defects and mistakes that may have here crept in, in spite of the pains I have taken and the vigilance I have exercised in the performance of my task. I can only assure them that I shall take care to remove all such defects as may be pointed out to me in the next edition. In the meanwhile, I shall conclude with the prayer that this my humble service may prove acceptable to Bhagvan Shrikrishna Chandra.

Poona,
October 1921.

**S. T. Pathak.**

# संक्षिप्तसंज्ञानां विवरणम् ।

| संज्ञा | विवरणम् |
|---|---|
| अथर्वब्र. | अथर्वब्रह्मसूक्तम् । |
| अ. वे. | अथर्ववेदः । |
| आ. हृ. | आदित्यहृदयम् । |
| आ. ध. सू. | आपस्तम्बधर्मसूत्रम् । |
| आ. सू. | आपस्तम्बश्रौतसूत्रम् । |
| ई. | ईशावास्योपनिषत् । |
| ऋ. सं. | ऋक्संहिता । |
| ऐ. | ऐतरेयोपनिषद् । |
| ऐ. ब्रा. | ऐतरेयब्राह्मणम् । |
| क. | कठोपनिषत् । |
| कालाग्नि. | कालाग्निरुद्रोपनिषत् । |
| के. | केनोपनिषत् । |
| कै. | कैवल्योपनिषत् । |
| कौ. | कौषीतक्युपनिषत् । |
| गो. उ. ता. | गोपालोत्तरतापनीयोपनिषद् । |
| गो. पू. ता. | गोपालपूर्वतापनीयोपनिषत् । |
| गो. सू. | गौतमसूत्रम् । |
| छां. | छान्दोग्योपनिषत् । |
| जा. | जाबालोपनिषद् । |
| जै. सू. | जैमिनीयसूत्रम् । |
| तै. आ. | तैत्तिरीयारण्यकम् । |
| तै. | तैत्तिरीयोपनिषत् । |
| तै. ब्रा. | तैत्तिरीयब्राह्मणम् । |
| तै. सं. | तैत्तिरीयसंहिता । |
| तां. ब्रा. | ताण्ड्यब्राह्मणम् । |
| तै. ना. | नारायणोपनिषद् । |
| नि. | निरुक्तम् । |
| नृ. पू. ता. | नृसिंहपूर्वतापनीयोपनिषत् । |
| नृ. ता. | नृसिंहोत्तरतापनीयोपनिषत् । |
| प. पु. | पद्मपुराणम् । |
| पा. धा. पा. दि. | पाणिनीयधातुपाठः । दिवादिः । |
| पा. शि. | पाणिनीयशिक्षा । |
| पा. सू. | पाणिनीयसूत्रम् । |
| पा. स्मृ. | पाराशरस्मृतिः । |
| प्र. | प्रश्नोपनिषद् । |
| बौ. स्मृ. | बौधायनस्मृतिः । |
| बृ. जा. शा. | बृहज्जाबालशाखा । |
| बृ. | बृहदारण्यकोपनिषद् |
| बृ. वा. शा. | बृहदारण्यकवाजसनेयी शाखा । |
| बृ. ना. | बृहन्नारायणीयोपनिषत् । |
| ब्र. बि. | ब्रह्मबिन्दूपनिषद् । |
| ब्र. | ब्रह्मोपनिषद् । |
| ब्र. सू. | ब्रह्मसूत्रम् । |
| भ. गी. | भगवद्गीता । |
| भा. | भागवतम् । |
| भी. | भीष्मपर्व । |
| म. ना. | महानारायणोपनिषत् । |
| म. स्मृ. | मनुस्मृतिः । |
| म. भा. | महाभारतम् । |
| म. पु. | मत्स्यपुराणम् । |
| मा. पु. दे. मा. | मार्कण्डेयपुराणम् । देवीमाहात्म्यम् । |
| मुं. | मुण्डकोपनिषत् । |
| मै. | मैत्रेय्युपनिषत् । |
| या. स्मृ. | याज्ञवल्क्यस्मृतिः । |
| यो. सू. | योगसूत्रम् । |
| रा. ता. | रामोत्तरतापनीयोपनिषत् । |
| वा. पु. | वाराहपुराणम् । |
| व. स्मृ. | वसिष्ठस्मृतिः । |
| श. ब्रा. | शतपथब्राह्मणम् । |
| शां. | शान्तिपर्व । |
| शु. य. सं. | शुक्लयजुर्वेदसंहिता । |
| श्वे. | श्वेताश्वतरोपनिषत् । |
| समान्त्रब्रा. | समान्त्रब्राह्मणम् । |
| स. सा. | सर्वसारोपनिषत् । |
| सां. का. | सांख्यकारिका । |




श्री.

# प्रतिसूत्रं श्रीमदणुभाष्यतात्पर्यम् ।

## प्रथमाध्यायस्य प्रथमपादः १।१ ॥

सूत्राङ्काः पृष्ठाङ्काः ।

### १ जिज्ञासाधिकरणम् ।

१ षडङ्गैरेव वेदार्थनिश्चयस्य संभवादत्यन्तनिश्चयस्य तपःप्रभृतिभिरेव संभवात्तदर्थं किं वेदान्तविचारेणेत्याशङ्क्य ऋषिभिर्नानाशास्त्राणां कृतत्वात्तच्छ्रवणेन बुद्धिदोषान्मन्दानां संदेहसंभवे तन्निर्धारणार्थं विचारशास्त्रं कर्तव्यम् । तत्र यद्यपि सर्वे वेदा यत्पदमामनन्तीति वेदैश्च सर्वैरहमेव वेद्य इत्यादिश्रुतिस्मृतिभिर्ब्रह्मैव सर्ववेदार्थस्तथापीदं वाक्यं वेदान्ते श्रुतं तं त्वौपनिषदं पुरुषं पृच्छामीति पुरुषरूपता च तत्रैव श्रुता वेदान्तविज्ञानसुनिश्चितार्था इति वाक्येन वेदान्तानामर्थनिश्चायकत्वं च तत्रैव श्रुतमत इदानीं तपःप्रभृतीनामसंभवाद्वेदान्तविचारेणैव वेदार्थरूपब्रह्मस्वरूपानिश्चय इत्यभिसंधाय ब्रह्मसंबन्धिविचारः प्रस्तुतः ॥ १

### २ जन्माद्यधिकरणम् ।

२ ब्रह्म किंलक्षणकं किंप्रमाणं चेत्याकाङ्क्षायां जगदुत्पत्तिस्थितिकारणं ब्रह्मेति सूत्रांशेन लक्षितम् । ततोंशान्तरेण वेदरूपशास्त्रप्रमाणकं ब्रह्मेत्युक्तं तेन कर्तृरूपं निमित्ततया सिध्यति ॥ ८

### ३ समन्वयाधिकरणम् ।

३ ब्रह्म जगतः कर्तृ निमित्तं चेति चेत्किं जगतः समवायीत्याशङ्कायामनारोपितानागन्तुकरूपेण समनुगमाद्ब्रह्मैव जगतः समवायीति निर्णीतम् ॥ १२

सूत्राङ्काः पृष्ठाङ्काः ।

### ४ ईक्षत्यधिकरणम् ।



### ५ आनन्दमयाधिकरणम् ।

सूत्राङ्काः पृष्ठाङ्काः ।

समाधानायास्मिन् प्रकरणे ब्रह्मसंबन्ध एव भूयानुपलभ्यते तस्मादत्र प्रतिपाद्यः प्राणः परमात्मा ।

२९ यदि ब्रह्मैवात्र प्रतिपाद्यं तदा मामेव विजानीहीति स्वात्मोपदेशस्य का गतिरित्याशङ्कायामुपदेशः शास्त्रदृष्ट्या न तु लोकदृष्ट्या । शास्त्रे च ब्रह्मज्ञाने सति ज्ञातुर्ब्रह्माभेदेन सर्वभाव उच्यते यथा श्रुत्यन्तरे वामदेवस्य सर्वात्मभाव उच्यते तद्धैतत्पश्यन्नृषिर्वामदेव इत्यादिना । तद्वदत्रापि ज्ञानेन ब्रह्मभावात्स्वस्योपास्यत्वेनोपदेशः । ४८

३० नन्वास्मिन्प्रकरणे जीवधर्मा मुख्यप्राणधर्माश्च भूयांस उपदिश्यन्त इति नास्य ब्रह्मप्रकरणत्वमिति सूत्रांशेनाशङ्क्यांशान्तरेण समाधानमाह । यदि जीवप्राणब्रह्मणां धर्मदर्शनात्त्रयाणां मुख्यत्वं स्वीक्रियेत तथा सत्युपासनात्रयप्रसंगाद्वाक्यभेद आपद्येत स तु दुष्ट इति न युक्तः । तथा सति योत्र जीवधर्माणां प्राणधर्माणां चोपदेशः सोत्र जीवस्य ब्रह्माश्रितत्वात्प्राणस्य तु तद्योगात् । तस्मात् ते सर्वे ब्रह्मधर्मा एवेति प्राणो ब्रह्मैवेति प्रतिपादितम् ॥ ४९

---

## प्रथमाध्यायस्य द्वितीयः पादः १।२॥

### १ सर्वत्र प्रसिद्धोपदेशाधिकरणम् ।

१ छान्दोग्यस्थशाण्डिल्यविद्यायां मनोमयः प्राणशरीर इत्यनेन विज्ञानमयस्य जीवस्य मनोमयत्वादिधर्मवैशिष्ट्यात्तैरेव च धर्मैः कर्तृत्वनिर्वाहाद्ब्रह्मणो जगत्कर्तृत्वमपि नोपपद्यत इत्याशङ्कायां जीवस्य ब्रह्मत्वेनोपासनं निवार्य सर्ववेदान्तप्रसिद्धब्रह्मण एवोपदेशाद्ब्रह्मैवात्रोच्यते । ५१

२ पूर्वोक्तविद्यायां फलत्वेन विवक्षिता ये गुणास्तेषां प्राप्तिर्भगवत्स्वरूपलाभात्तत्सारूप्यलाभाद्वोपपद्येतातोऽपि तथा । ५४

## ४ गुहां प्रविष्टावित्यधिकरणम् ।



## ५ अन्तर उपपत्तेरित्यधिकरणम् ।



## ६ अन्तर्याम्यधिकरणम् ।

---

## प्रथमाध्यायस्य तृतीयः पादः १।३॥

### १ द्युभ्वाद्यायतनाधिकरणम् ।

सूत्राङ्काः पृष्ठाङ्काः।



## २ भूमाधिकरणम्।

उपविष्टवान् । अतो न तत्र जीवः प्रकरणार्थः । अतस्तदनुरोधेनात्र जीवस्य ब्रह्माभिन्नत्वं न वक्तुं शक्यं तस्माद् दहरः परमात्मैव ।

२० पूर्वप्रकरणे सत्यनामकस्य ब्रह्मणो ज्ञानासंभवात्तदर्थं शब्दोक्तस्य नियम्यस्य जीवस्य स्वरूपज्ञानाय जीवपरामर्शो नतु प्रकरणित्वेन । ८४

२१ भवत्वेवं तथाप्यल्पे हृदयपुण्डरीक आकाशरूपस्य ज्यायसो ब्रह्मणः स्थितिर्न संभवत्यतो जीव एवोच्यतामित्याशङ्कायां निचाय्यत्वादेवं व्योमवच्चेत्यत्र विरुद्धधर्माश्रयत्वेन ब्रह्मणः स्थितिर्वक्तुं शक्येत्युक्तम् । तादृशत्वस्यात्राप्यनुसंधेयत्वात्तेन तत्समाधानसिद्धिरिति दहरः परमात्मैव ॥ ८५

## ६ अनुकृत्यधिकरणम् ।

२२ न तत्र सूर्यो भातीति वाक्यं विषयत्वेनोदाहृत्य लोकप्रकाशकानां सूर्यादीनां दहरान्तःस्थत्वकथनादुक्तवाक्यं तद्विरुद्धमित्याशङ्क्य तेषां स्वतो न प्रकाशकत्वं किंतु भगवदनुकारित्वाद्भगवत्प्रकाशेनैव प्रकाशकत्वं सर्वत्र सर्वदेति निर्णीतम् । ८५

२३ उक्तार्थे स्मृतेरपि संमतिः ॥ ८६

## ७ शब्दादेव प्रमिताधिकरणम् ।

२४ अङ्गुष्ठमात्रस्य भूतभव्येशानत्वं शब्दादेव प्रतीयते । ८६

२५ तस्य तत्र स्थितिर्मनुष्याणामधिकारार्थेति निर्णीतम् ॥ ८७

## ८ तदुपर्यपीत्यधिकरणम् ।

२६ मनुष्येषु त्रैवर्णिकानामुपनयनादिसंस्कारवतां कर्माधिकाराद् ब्रह्मविद्यायामप्यधिकार इति पूर्वतन्त्रादेव सिध्यति । ततो मनुष्याद्धीनजातीयानां तु योग्यताभावादेव नाधिकारः । अतः परं मनुष्यादुत्कृष्टानां ब्रह्मविद्यायामधिकारः संभवादुक्तः । यद्यपि देवादीनामुपनयनादिकं न प्रसिद्धं तथापि यज्ञो- ८७

पवीतमग्ने प्रजापतेर्यत्सहजं पुरस्तादिति श्रवणात्तन्न्यायेनान्यत्रापि जन्मानुग्रहविशेषतपःप्रभृतिभिर्मतङ्गविश्वामित्रादीनामिवाधिकारः संभवति ।

२७ पूर्वसूत्रोक्तस्य देवादीनामधिकारस्य विप्रतिपन्नतया तद्बलेन तेषु ब्राह्मण्यादेर्वक्तुमशक्यत्वात्तेषां स्वर्गस्थत्वेन पृथिव्यादिरूपदेशस्य व्रीह्यादिरूपद्रव्यस्य तत्र सूर्यगत्यभावेन दर्शादिरूपकालस्य च तद्व्यतिरिक्तदेवाभावेनोद्देश्यदेवतान्तरस्यापि वक्तुमशक्यतया तदभावेपि कर्मकरणे श्रुतिविरोध इत्याशङ्क्य प्रजापतिन्यायाद्वर्णसत्तायाः साधितप्रायत्वात् इन्द्रब्रह्मचर्यश्रावणादाश्रमसत्तायाः देवा वै सत्रमासतेत्यादौ भूमावागत्य ऋषीन् वृत्वा यज्ञकरणश्रावणाच्च बहुधोपयोगो देवानां वेदे दृश्यते भगवदवयवरूपा ये देवास्ते तेषामुद्देश्या अपि भवन्ति । उभौ वै देवाना शमिताराविति श्रुतौ ऋत्विजोपि श्राव्यन्ते । तस्मान्न श्रुतिविरोधः । ८८

२८ ननु जन्यानां देवानां वृत्तान्तं वदन्वेदः स्वयं कथं नित्यो भवेदतो वेदानित्यत्वबोधकत्वादयं देवाधिकारपक्षो न संगत इत्याशङ्क्य शब्दोक्ताः पदार्थाः सर्व एवाधिदैविका भगवदवयवरूपाः शब्दैकसमधिगम्या एवंविधास्ते नित्यास्तैः सह पदानां संबन्धोपि नित्य इति न वेदस्यानित्यत्वम् । न च वैदिकपदार्थानामतिरिक्तत्वाङ्गीकारे प्रत्यक्षविरोधः शङ्क्यः । इदानीमपि यजमानर्त्विक्प्रभृतीनां वेदादेव सपरिकरकर्मावगतेर्वृद्धव्यवहारादिना दर्शनेन वैदिकपदार्थान्तरेष्वपि तेनैवावगतिसंभवात् । अतो यैर्भगवान् दृष्टस्तेषां तु तत्रैव सर्वपदार्थदर्शनात्तेष्वेव संकेतग्रहस्ततोर्वाचीनानामिदानींतनपर्यन्तानां तूपमानात्तेषु संकेतग्रहो भगवतः सर्वानुकारित्वात् । किंच यथा जमदग्नीनां पञ्चावत्तमित्यत्र स्वस्मिन् जामदग्न्य इति ८९

ङ्काः — पृष्ठाङ्काः ।

प्रत्यक्षज्ञानाभावेपि परोक्षानुभवो भवति तथा वैदिकप्रपञ्च-स्यापि परोक्षानुभवो भवत्येव ।

९ अस्मादेव हेतोर्वेदस्य नित्यत्वम् । — १०

० लोकदृष्ट्या प्रपञ्चस्य देवादीनां चानित्यत्वाङ्गीकारे तत्प्रवाह एव शब्दसंबन्धः । लोकेपि शरीरगङ्गाप्रभृतिषु प्रवाह एव शब्दसंबन्धदर्शनात् । अतो देवादीनां तत्कर्मणां चानित्य-त्वेपि तत्प्रवाहस्य नित्यत्वात्तद्बोधके वेदेपि नानित्यत्वं शङ्कितुं शक्यते । — १०

११ कर्मण्युपासने च प्रतिपादितेपि देवानामधिकारो मधुवि-द्यायां न संगच्छते तत्र मधुत्वेनोपवर्ण्यमानस्यादित्यस्य विद्याविषयत्वात्कमन्यमादित्यमुपासीत । एवं संवर्गविद्यादिष्वा-दित्यादीनां विषयतया देवानामधिकारो बोध्यः । — ११

१२ अग्निः पुच्छस्य प्रथमं काण्डमित्यादिश्रुतिष्वग्न्यादीनां देवानां ज्योतिर्गणे विद्यमानत्वकथनात्तेषां च तत्र महाभोग-कथनात्प्राप्तफलत्वेनोपासनायामधिकारोसंगत इति शङ्का । — १२

१३ वेदे यथा प्राजापत्यादीनां कर्माधिकारो निरूप्यते तथा तद्यो यो देवानाम् इत्यादिना ज्ञानेपि श्रूयते । अतः कर्मणि ज्ञाने चाधिकारोवश्यमभ्युपेयः ॥ — १२

## ९ शुगस्येत्यधिकरणम् ।

१४ छान्दोग्यसंवर्गविद्यायां जानश्रुतिं हा शूद्रेत्येव संबोध्य संवर्ग-विद्योपदिष्टा । तस्माज् जातिशूद्रस्याधिकार इत्याशङ्क्य नात्र शूद्रशब्दो जातिवाची किंतु शुचा आद्रवतीति शूद्र इति यौगिकः । अतो योगेन जानश्रुतेर्मत्सरित्वं बोधयति तेन पूर्वं स्वीकारः । पश्चात्तापमरणेन मत्सरत्यागे विद्योपदेश इति नात्र जातिशूद्रस्याप्यधिकारः । — १३

## प्रथमाध्यायस्य चतुर्थः पादः १।४ ॥

### १ आनुमानिकाधिकरणम् ।

इन्द्रियेभ्यः परा इति काठकवाक्ये सांख्यमतसिद्धाः पदार्था उच्यन्त इत्याशङ्क्य समाधीयते नात्र तन्मतसिद्धाः पदार्था उच्यन्ते किंतु पूर्वमात्मानं रथिनं विद्धीत्यादिना शरीररूपकं यदुक्तं तत्रत्या ये रथादिभावेन पदार्था निविष्टास्त एवात्रास्मिन्वाक्ये गृह्यन्ते । एतद्धि जीवप्रकरणम् । अत्र च तस्य मुक्त्युपायो निरूप्यते । शरीरं रथ इत्यादिरूपोत्र ब्रह्मवाद एव सिध्यति न सांख्यमतं यतोग्र एष सर्वेषु भूतेष्विति मन्त्रेणात्मदर्शनपरिकरतयैव बुध्यादीनामुक्तिः ।   १००

अव्यक्तशब्देन सूक्ष्ममुच्यते तद्ब्रह्मैव । धर्मधर्मिणोश्चाविनाभावेन स्थितत्वादभेद इति तदभिन्ना भगवत्कृपैवात्रोच्यते ।   १०२

कृपाया ब्रह्माभिन्नत्वेपि ब्रह्माधीनत्वाद्ब्रह्मभिन्नत्वं ब्रह्माभिन्नत्वाद्ब्रह्मनियम्यत्वम् । अतो यथैकरूप्येण ग्रहणमभेदे युक्तिस्तथा नियम्यनियामकभावोपि भेदे युक्तिरित्युभयथाप्युपपन्नम् । न चाभेदेनैकत्वे नियम्यनियामकभावानुपपत्तिरिति शङ्क्यम् । ब्रह्मविदाप्नोति परमित्यत्रैकस्यैव ब्रह्मणः सच्चिद्रूपेण विषयत्वमानन्दरूपेण फलत्वमितिवदुपपत्तेः । तथाच कृपाविष्टः साधनमानन्दरूपः फलम् । अथवाव्यक्तं सच्चिद्रूपमक्षरमानन्दरूपः पुरुष इति तयोरभेदेपि परापरभावो युक्तः ।   १०२

४ अस्मिन्वाक्येव्यक्तं ज्ञेयत्वेनोच्यते । कापिलमते तथावचनाभावान्न तन्मतसिद्धिः ।   १०३

५ प्रकरणस्य नियामकत्वादशब्दवाक्यमपि भगवत्परमेव ।   १०३

६ अत्र हि त्रयः प्रश्ना अग्निजीवब्रह्मविषयकास्तेषामुत्तराणि त्रीणि । यदि सांख्यमतमिन्द्रियेभ्यः परा इत्यादि स्यात्तदा चतुर्थे प्रश्नोत्तरे स्यातां ते तु न स्तोतो नात्र तन्मतसिद्धिः ।   १०३

सूत्राङ्काः पृष्ठाङ्काः।

७ यथा महच्छब्दो महान्तं विभुमित्यादौ ब्रह्मपरस्तथाव्यक्तशब्दो- १०५
व्यक्षरपरस्तस्मादिन्द्रियादिवाक्ये न सांख्यमतसिद्धिः ॥

## २ चमसवदित्यधिकरणम् ।

८ अजामेकामितिवाक्येजादिशब्दैः प्रकृतिः परामृश्यते । अग्रे १०५
च कपिलस्य नाम पठ्यते । यद्यपि किंकारणेत्युपक्रमाद्ब्रह्म-
विद्यात्वेनोपनिषत्प्रतीयते तथापि पूर्वकाण्डे यथा प्रणवादि-
मन्त्राणां नानास्थले विनियोगात्र प्रकरणानुरोधस्तथैतेष्वपि म-
न्त्रेषु कापिलमतप्रत्यभिज्ञानान्नोपक्रमाद्यनुरोध इति सांख्यमत-
मपि वैदिकमित्याशङ्क्य समाधीयते । यथार्वाग्बिलश्चमस इति-
बृहदारण्यकमन्त्रस्थकर्मविशेषेर्वाग्बिले चमसे यशोरूपं सोमं सप्त
होतारो भक्षयेयुरिति कल्पयितुं न शक्यते तथा प्रकृते लोहित-
शुक्लादिशब्दैः रजःसत्त्वादि कल्पयित्वा तद्द्वारेण सर्वं मतं
कल्पयितुं न शक्यते । विशेषाभावात्। कपिलवाक्येपि कपि-
लशब्देन ब्रह्मैवोच्यते न त्वनित्यर्षिः ।

९ अत्राजाशब्देन ज्योतिरुच्यते प्रथमकार्यरूपत्वाच्चतुर्मुखाजत्व- १०५
न्यायेन । यथा ह्यजाल्पदोग्ध्री तथेयं नश्वरसुखदात्री ।
चतुष्कलब्रह्मपादरूपत्वाज्ज्योतीरूपा । अत्रोपक्रमे ब्रह्मणः
प्रकृतत्वात्तदेवाग्निरिति कथनाच्च । सा च चेतनाधिष्ठिताथे
द्वा सुपर्णेति कथनात् अजद्वयं च जीवब्रह्मरूपं ताभ्याम-
धिष्ठिता । एतच्छान्दोग्यशाखायामधीयते ।

१० अत्र हि किंचित्कार्यार्थं परोक्षवादेनाजाशब्दस्तस्यां कल्पन- १०६
योपादिश्यते । यथाजा बर्करसहिता सवत्सा स्वामिहिता
तथेयं भगवल्लीलोपयोगायेति भगवतः परोक्षप्रियत्वाच्चेति ।
तथा च मध्वादिविद्यावदत्र कल्पना तस्मान्नाजामन्त्रेण
सांख्यमतसिद्धिः ॥

## ३ न संख्योपसंग्रहाधिकरणम् ।

११ यस्मिन् पञ्च पञ्चजना इति वाक्ये समासविशेषेण पञ्च- १०६
विंशतिसंख्यासंग्रहादत्र सांख्यसिद्धानि पञ्चविंशतितत्त्वानि

सूत्राङ्काः पृष्ठाङ्काः ।

तेन सांख्यमतासिद्धिरित्याशङ्क्य समाधीयते । अत्र समासविशेषेण पञ्चसमूहरूपार्थसिद्धिः । सांख्यमते तु नेदृशी संख्या ।

१२ बुद्धेः संशयाद्या पञ्च वृत्तीर्जनयन्तीति पञ्चजनाः प्राणादयः । प्राणस्य प्राणमिति वाक्यशेषस्य मन्त्रार्थनियामकत्वात् । तस्माद्ब्रह्मवाद एवात्र न सांख्यवादः । १०७

१३ काण्वपाठे तद्देवा ज्योतिषामित्यन्नस्थाने ज्योतिर्ग्राह्यम् । ततश्चार्थवादस्य निर्णायकत्वम् ॥ १०८

## ४ यथाव्यपदिष्टाधिकरणम् ।

१४ आकाशादिवाक्येषु यद्यपि क्रमादिविप्रतिपत्तिस्तथापि ब्रह्मणः कारणत्वविप्रतिपत्तिर्नास्ति । सर्वत्र सृष्टिवाक्येषु समानस्यैव ब्रह्मणः कारणत्वेनाभिप्रेतत्वात् । क्रमप्रकारादिभेदस्तु माहात्म्यस्यैव सूचकः । तस्मान्न श्रुतिविप्रतिषेधात्स्मृतिपरिग्रहः ॥ १०८

## ५ समाकर्षाधिकरणम् ।

१५ असदादिशब्देषु न निरात्मकत्वाद्यर्था उच्यन्ते किंतु ततः समाकर्ष्य सर्वैः शब्दैर्ब्रह्मैवोच्यते । सर्वेषां शब्दानां प्रणवविकृतित्वेन प्रणवार्थ एव पर्यवसानात् प्रणवस्य च ब्रह्मवाचकत्वात् । तस्मान्न श्रुतिविप्रतिषेधः ॥ १०९

## ६ जगद्वाचित्वाधिकरणम् ।

१६ यो वै बालाक इत्यजातशत्रुणा सिद्धान्तकथनोपक्रम एतच्छब्देनादित्यमण्डलादिजडोल्लेखात्पुरुषशब्देन च जीवोल्लेखाज्जीवजडात्मकं जगद्यत्कर्तृकं तस्य वेदितव्यत्वकथनेन श्रुत्यन्तरसिद्धब्रह्मण एव कर्तृत्वं न प्रकृत्यभिमानिजीवस्य । ११०

१७ जीवमुख्यप्राणदर्शनान्न ब्रह्मणः कर्तृत्वमित्याशङ्क्य जीवस्य ब्रह्माश्रितत्वान्मुख्यप्राणस्य च ब्रह्मयोगादत्र तथात्वेन कथनं न स्वेन रूपेण तस्माद्ब्रह्मैव कर्तृ । १११

सूत्राङ्काः पृष्ठाङ्काः।

१८ प्रकृतितो जीवस्य कर्तृत्वमप्यस्मिन् वाक्येनाभिमतम् । जीव-लयोद्गमयोर्ब्रह्मप्रतिपत्त्यर्थत्वात्प्रश्नव्याख्यानाभ्यां तथावसा-यात् । वाजसनेयिनामेतत्समानप्रकरणेऽपि तथावसायाद्वे-त्युक्तम् । एवमत्र जीवब्रह्मवादनिराकरणेन जीवविशिष्टप्रकृ-तिरेव कारणमिति निराकृतम् ॥ ११२

७ वाक्यान्वयाधिकरणम् ।

१९ मैत्रेयीब्राह्मणद्वये जीवस्य प्रकरणित्वं ब्रह्मणो वेति संशये वेदरूपमहावाक्यस्य ब्रह्मण्येवान्वयदर्शनात्सुखरूपभगवदन्व-येन जीवस्यैव प्रियत्वात्सर्वोपनिषदनुरोधेनास्यापि वाक्यस्य ब्रह्मण्येवान्वयादत्रापि ब्रह्मैवोच्यते । ११३

२० ब्रह्मणा स्वस्य भोगनिष्पत्त्यर्थं विस्फुलिङ्गवत्प्रकटीकृतः स्वांशो जीवस्तेन जीवेनोपक्रमस्तस्यैव प्रियत्वेन संसूचनादुप-क्रमस्य च बलिष्ठत्वाज्जीवात्मैव प्रकरणीति स एव ज्ञेयत्वे-नापदिश्यत इति शङ्कायां नात्र जीवात्मनो ज्ञेयत्वेनोपदेशः किंतु परमात्मन एव । जीवेनोपक्रमस्तु—आत्मनि वा विज्ञात इति प्रतिज्ञासिद्धेर्लिङ्गरूपः । ब्रह्मैव जीवः । अतः संसार-दशायामपि जीवो ब्रह्मैवेति ज्ञापनार्थं तदुपक्रमो न तु प्रकृति-संसृष्टस्य जीवस्य कारणत्वार्थमिति काशकृत्स्नमतमुक्तं तस्मा-द्ब्रह्मैवात्र कारणत्वेनोच्यते । ११४

२१ यदत्र जीवोपक्रमेण भगवतः श्रवणादिकमुक्तं तन्मुक्तो जीवो भगवानेव भविष्यतीति ज्ञापकम् । क्रिया विश्वासार्थं जीवो-पक्रमः कर्तव्य एवेत्यौडुलोमिराचार्यो मन्यते । ११५

२२ काशकृत्स्नस्तु मन्यते जीवोपक्रमो भगवत एवावस्थाविशेषो जीव इत्यस्य पक्षस्य लिङ्गम् । तस्मान्मैत्रेयीब्राह्मणेनापि जीवद्वारा प्रकृतिकारणवादासिद्धिः ॥ ११५

सूत्राङ्काः पृष्ठाङ्काः

## ८ प्रकृतिश्चेत्यधिकरणम् ।

२३ प्रकृतिशब्दवाच्यं ब्रह्मैव । छान्दोग्य एकविज्ञानेन सर्वविज्ञानं यत्प्रतिज्ञातं मृदादिदृष्टान्ताश्च तदनुपरोधात् । तथा च यदि मूलकारणे ब्रह्मणि समवायिकारणत्वरूपं प्रकृतित्वं न स्वीक्रियेत तदा प्रतिज्ञादिसामञ्जस्यं न स्यात् । ११६

२४ सृष्टौ भगवत्कृतमभिध्यानं स्वस्य बहुरूपत्वेनोच्चनीचभावेन च यद्विचरणं तद्धेतुत्वेनोक्तं तेन स्वयमेव तद्रूप इति सिध्यति । किंच सर्वं खल्विदमित्युपासनाप्युपदिश्यतेतोपि प्रकृतिशब्दवाच्यं ब्रह्मैव । ११७

२५ सर्वाणि ह वा इमानीति श्रुत्या ब्रह्मणः प्रपञ्चोत्पत्तिलयाधारत्वं साक्षादेवोच्यते तच्च समवायित्वस्यैव लिङ्गम् । ततोपि ब्रह्मैव प्रकृतिशब्दवाच्यम् । ११७

२६ ब्रह्मपरिणामलक्षणं कार्यमिति जगत्समवायिकारणत्वं ब्रह्मण एव । ११७

२७ सदेव सोम्येदमित्यादिषु सृष्टिबोधकश्रुतिष्ववधारणदर्शनाद् ब्रह्मैव समवायिनिमित्तेति द्वयं कारणम् । अन्यथावधारणविरोधापत्तेः । किं च कर्तारमीशमित्यादिषु योनित्वमपि ब्रह्मण एवोच्यते पुरुषत्वं च । तस्मादक्षरपुरुषभावेनोभयरूपो भगवानेव । अतः कथंचिदपि न प्रकृतिप्रवेशः । ११८

२८ यत्र ब्रह्मणः सर्वविधं कारणत्वं नोच्यते ते सर्वे स्मार्तवादा अवैदिका अनुपयुक्ताश्च ॥ ११९

इति प्रथमोध्यायः ॥

---

## द्वितीयाध्यायस्य द्वितीयः पादः २ । २॥

### १ रचनानुपपत्तेरित्यधिकरणम् ।

सूत्राङ्काः पृष्ठाङ्काः ।

## २ पुरुषाश्मवदित्यधिकरणम् ।



## ३ महद्दीर्घवद्वेत्यधिकरणम् ।

## ४ समुदाय उभयहेतुकेपीत्यधिकरणम् ।

सूत्राङ्काः पृष्ठाङ्काः

## ५ नाभाव उपलब्धेरित्यधिकरणम्



## ६ नैकस्मिन्नसंभवादित्यधिकरणम् ।



## ७ पत्युरसामञ्जस्याधिकरणम् ।

## १३ तद्गुणसारत्वादित्यधिकरणम् ।



## १४ कर्ता शास्त्रार्थवत्त्वादित्यधिकरणम् ।

---

## द्वितीयाध्यायस्य चतुर्थः पादः २ । ४ ॥

### १ तथा प्राण इत्यधिकरणम् ।

सूत्राङ्काः पृष्ठाङ्काः ।

## ६ ज्योतिराद्यधिष्ठानमित्यधिकरणम् ।



## ७ प्राणवतेरत्यधिकरणम् ।



## ८ तदिन्द्रियाणि तद्व्यपदेशादित्यधिकरणम् ।



## ९ संज्ञामूर्तिक्लृप्तिस्त्रिवृत्कुर्वत इत्यधिकरणम् ।



## १० मांसादिभौममित्यधिकरणम् ।



---

# तृतीयाध्यायस्य प्रथमः पादः ३ । १ ॥

## १ तदन्तरप्रतिपत्तावित्यधिकरणम् ।

| सूत्राङ्काः | | पृष्ठाङ्काः । |
| --- | --- | --- |
| ३ | नन्वेवं सति शाखान्तरीयधर्माणामुपसंहारः स्यात्तथावान्तरधर्मा अवतारान्तरेष्वप्युपसंहर्तव्याः स्युरिति चेन्न वेदसंबन्धिकर्मणस्तत्तच्छाखोक्तप्रकारेण करणेऽधिकारात् । यथा सवाख्यहोमा आथर्वणिकैरेव कार्या इति नियम्यन्ते । एवमेवोपासनायामपि रामकृष्णादिरूपेषु तत्तद्रूपोपासकस्य तत्तद्धर्मा एव भावनीया नावतारान्तरधर्माः । | २०१ |
| ४ | वेद्यैकत्वेन विद्यानामेकत्वं श्रुतिर्दर्शयति । तथा उपासनाप्रकारभेदेनोपास्यभेददर्शने दोषं च दर्शयति । | २१४ |
| ५ | नमस्ते रघुवर्यायेत्यादिषु यः श्रीकृष्णधर्माणामुपसंहार उक्तः स शुद्धब्रह्मोपासकैः कर्तव्यः । भगवद्रूपस्यार्थस्यार्थद्वयेऽपि समानत्वात् । यथा विधिशेषाणामग्निहोत्रत्वादिलक्षणे धर्मे समानेऽपि स्वशाखोक्तप्रकारस्यैव करणं नान्यशाखोक्तधर्मोपसंहार एवमिहापि तत्तदवतारोपासकस्य तत्तदसाधारणधर्मत्वेनैवोपासनं नान्यावतारधर्मवत्त्वेनापि । | २१४ |
| ६ | ननु धर्माणामुपसंहारे श्रुतिप्रतिपादितमेकरसं ब्रह्मान्यथा भवेत्ततश्च तदनेकरसं प्रसज्येतेति चेन्न श्रुतिप्रतिपादितत्वाविशेषात् । यथा श्रुत्या ब्रह्मण एकरसत्वेन निर्णयः कृतस्तथा विरुद्धधर्मवत्त्वेनापि । | २१५ |
| ७ | प्रकारान्तरेण समाधानम् । यथा परोवरीयस्त्वमतस्य दीक्षाप्रकरणे पठितत्वात् दीक्षासहितस्यैव परोवरीयस्त्वं न तद्रहितस्य प्रकरणभेदात् । तथा ज्ञानप्रकरणे ज्ञानिनं प्रति एकरसत्वेन निरूपणं भक्तिप्रकरणे तु भक्तानुभवानुरोधाद्भिन्नाभिन्नप्रकारेण निरूपणम् । | २१५ |
| ८ | यथोद्गीथोपासनेतिसंज्ञैक्येऽपि परोवरीयस्त्वाद्युपासनेषु धर्मभेदस्तथात्र संज्ञैक्येऽपि धर्मभेदः । | २१६ |

सूत्राङ्काः पृष्ठाङ्काः

सूत्राङ्काः पृष्ठाङ्काः ।

## १४ आदरादलोप इत्यधिकरणम् ।

४० वर्णाश्रमधर्माणां भगवद्धर्माणां च युगपत्प्रसक्तौ भगवद्धर्मे-ष्वादरश्रवणात्त एवानुष्ठेया नतु वर्णाश्रमकर्मभिस्तल्लोपः संपादनीयः । २४७

४१ भगवद्धर्मवर्णाश्रमधर्माणां युगपत्करणे भगवद्धर्माणां बलवत्त्वे-नालोपवचनाद्भगवद्धर्माः कर्माङ्गं न किंतु मुख्याः ॥ २४८

## १५ तन्निर्धारणाधिकरणम् ।

४२ कर्म कर्तव्यं न वेति भगवदिच्छाया अज्ञातत्वेनाधुनातनैः कर्म निष्कामतया कर्तव्यमेव । भगवदिच्छां ये जानन्त्यम्ब-रीषयुधिष्ठिरादयस्तेषां जीवकृतकर्मफलाञ्चित्तमीश्वरकृतकर्म-फलं लोकसंग्रहादिकं नतु स्वर्गरूपम् । निष्कामकर्मकारिणां तु कर्मजप्रतिबन्धाभावः फलम् ॥ २४८

## १६ प्रदानवदित्यधिकरणम् ।

४३ भगवतोद्धवं प्रति यः सर्वात्मभावत्वेनोपदेशः कृतः स वरदान-वदेव । नायमात्मेति श्रुतेः ॥ २४९

## १७ लिङ्गभूयस्त्वाधिकरणम् ।

४४ सर्वात्मभावस्य सर्वाधिकत्वात्तदेव कालकर्मादिभ्यो बलीयः । तस्य ज्ञानेनापि प्रतिबन्धो नेति—अन्तरा भूतग्रामवदिति सूत्रेणोक्तम् । २५१

४५ सूत्रद्वयेन पूर्वपक्षः । छान्दोग्ये वरणभूयस्त्वं नोच्यते किंतु श्वेतकेतूपाख्यानज्ञानस्यैव प्रकारभेदो निरूप्यते । आत्म-प्रकरणत्वादुभयोः प्रपाठकयोः । अत्र दृष्टान्तः । क्रियामान-सवदिति । यथा बाह्या पूजा क्रियेत्युच्यते । आन्तरी मानसमित्युच्यते । २५२

| सूत्राङ्काः | | पृष्ठाङ्काः |
|---|---|---|
| ५३ | अत एवैके शाखिनो भगवती भक्तशरीरे आविर्भावात्तेन सह कामोपभोगरूपिकां सोऽश्नुते सर्वानिति श्रुतिं पठन्ति ॥ | २५९ |

### १८ व्यतिरेकाधिकरणम् ।

| | | |
|---|---|---|
| ५४ | ज्ञानिनां हृदये परमव्योमाविर्भावो न भवति । वरणाभावेन भगवद्भावस्याभावात् । यथा ज्ञानं साधनेन साध्यं तथा वरणं साधनेन साधयितुमशक्यम् । | २६० |
| ५५ | यथा यजमानेन हौत्राद्यर्थं वृता ऋत्विजः सर्वशाखीयकर्मानुष्ठानसमर्था अपि वरणानुसारं तत्तच्छाखीयमेव कर्म कुर्वन्ति तथात्र भगवता वरणाभावाज्ज्ञानिनां हृदि परमव्योमाविर्भावो न । | २६२ |
| ५६ | शास्त्रविध्यनुसारं यथैक एव मन्त्रो बहुषु कर्मसु नियुज्यते कश्चिद् द्वयोः कश्चित्त्वेकत्रैव तथा भगवदिच्छया जीवोपि कश्चित्कर्मनिष्ठाप्राप्त्यनन्तरं वरणेन भक्तिनिष्ठां प्राप्नोति कश्चित्तु ज्ञाननिष्ठामेव प्राप्य भक्तिनिष्ठां प्राप्नोति कश्चित्तु प्रथमत एव भक्तौ व्रियत इति न विरोधः ॥ | २६२ |

### १९ भूम्न इत्यधिकरणम् ।

| | | |
|---|---|---|
| ५७ | सर्वात्मभावस्य सर्वोत्कृष्टत्वं ज्ञेयम् । किंच यथा दर्शपौर्णमासादिषु दोहनादिकर्मणां लौकिककर्मतुल्यत्वेपि लौकिकत्वं न । तद्वत्सर्वात्मभावस्यापि न लौकिकत्वम् । आत्मनः प्राणा इत्यादिश्रुतिः सर्वात्मभाववतो भक्तस्य सर्वं भगवत एवेति दर्शयति ॥ | २६३ |

### २० नाना शब्दादिभेदादित्यधिकरणम् ।

| | | |
|---|---|---|
| ५८ | सर्वावतारेषु पृथगेवोपासना विधेया । तत्तत्स्वरूपसंबन्धिनां मन्त्राणामाकाराणां चरित्राणां च भेदात् ॥ | २६५ |

सूत्राङ्कः — पृष्ठाङ्कः ।

सूत्राङ्काः पृष्ठाङ्काः ।

सूत्राङ्काः पृष्ठाङ्काः ।

स्वसंबन्धरूपभोगादेव मन्यते भक्तः । सोऽश्नुत इत्यादिश्रुतिषु [illegible]मुक्तम् ॥

### ६ बहिस्तूभयथेत्यधिकरणम् ।

४२ भगवद्भावमात्रे स्वरूपानुभवेनोभयत्रापि गृहत्यागः कार्यः । स्मृतेरुद्धवादीनामाचाराच्च । २९४

४३ गृहादित्यागस्य साधनत्वेनाङ्गीकारो न । पुष्टिमार्गीयस्य भगवत एव फलप्राप्तेरित्यात्रेयः । २९५

४४ गृहादित्यागपूर्वकं भगवन्निकटे भक्तस्य गमनमृत्विक्कर्मवज्ज्ञेयम् । यत ऋत्विक् यजमानार्थं क्रीयते । २९५

४५ भक्तिरस्य भजनमित्यादिश्रुतेरयं सिद्धान्तो ज्ञेयः ॥ २९६

### ७ सहकार्यन्तराधिकरणम् ।

४६ जीवानां भगवदङ्गीकारो द्विधा । तत्र शमदमादिसहकारिविधानं मर्यादामार्गपक्षेण । पुष्टिमार्गे तु वरणातिरिक्तसाधनाभावाद्वरणवतः कायिकादिसाधनेषु तृतीयं मानसिकं साधनमुक्तम् । तन्मानसिकसाधनमपि विध्यादिवज्ज्ञेयम् ॥ २९७

### ८ गृहिणोपसंहार इत्यधिकरणम् ।

४७ गृहस्थाश्रमे कुटुम्बसाहित्येन सेवाकरणात्सर्वेन्द्रियाणां भगवद्विनियोगः । परिजनकृतार्थता चाधिका संपद्यत इति गृहिणोपसंहारः । तुशब्देन मर्यादामार्गीयगृहस्थनिरासः । २९७

४८ मौनादयो गुणाः संन्यासिवद्गृहस्थस्यापि । एवं च गुणाधिक्याद्गृहिणोपसंहारः । २९९

४९ भगवता सह संबन्धदार्ढ्यात् वेदाध्ययनादिगृहस्थधर्मैर्भगवद्भावमप्रकटयन् भगवद्भजनं कुर्यात् । २९९

५० भगवद्भावगोपनार्थं वैदिककर्मवल्लौकिकसुतसंस्कारादिकं कर्म प्रस्तुतभगवद्भजनाप्रतिबन्धेन कर्तव्यं श्रुतौ धार्मिकपुत्रविधानदर्शनात् ॥ २९९

सूत्राङ्काः पृष्ठाङ्काः

## ९ एवं मुक्तिफलानियम इत्यधिकरणम् ।

५१ एवंभूतस्य भक्तस्य मुक्तिफलं यज्ञक्तिरसानुभवः स नियमेन भवत्येवेति न । तस्य भगवदिच्छाधीनत्वात् । न स पुनरिति श्रुत्या मुक्तेरेव नियमः क्रियते नतु तत्फलस्य ॥ २००

---

## चतुर्थाध्यायस्य प्रथमः पादः ४ । १ ॥

## १ आवृत्त्यधिकरणम् ।

१ श्रवणमननादीनामावृत्तिः कर्तव्या । छान्दोग्ये नवकृत्व उपदेशात् । २०१

२ यथा यथात्मा परिमृज्यत इत्यादिस्मृतिरपि श्रवणादीनामावृत्तिं बोधयति ॥ २०१

## २ आत्माधिकरणम् ।

३ आत्मेत्युपासनाद्भगवन्तं प्राप्नुवन्ति । उत्तमाधिकारिणमुपस्थितं तद्विषयमुपदिशन्ति च । २०१

४ प्रतीकोपासनेन मोक्षो न भवति । यतोऽन्यस्यान्यरूपेणोपासनं प्रतीकं तत्र भेदोदयात् । २०१

५ सर्वस्य ब्रह्मरूपत्वाद्ब्रह्मदृष्टिकरणं तु न प्रतीकोपासना । ज्ञानाधिक्यावस्था ब्रह्मदृष्टेः स्वत एवोदयात् ॥ २०७

## ३ आदित्याद्यधिकरणम् ।

६ भगवतः शक्तिभूतेष्वादित्यादिषु या ब्रह्मत्वोपासना उक्तास्ताः साकारव्यापकस्य ब्रह्मण एकमप्यङ्गमुपासितं तादृशफलदमिति बोधनार्थम् । उपपद्यते चैतत् । आनन्दस्वरूपकरपादोदरादेर्ब्रह्मणोऽङ्गमपि तादृशमेवेति न प्रतीकोपासनम् । २०७

७ उत्कटस्नेहात्मकसाधनसंपन्नत्वात्तादृशभक्तस्याग्रे भगवांस्तदधीनः समासीनो भवति । २०८

सूत्राङ्काः | पृष्ठाङ्काः ।

## २ भूताधिकरणम् ।

५ मर्यादाभक्तानामिन्द्रियाणि मनेषु लीयन्ते । यत्रास्येति श्रुतेः । ३१९

६ मर्यादाभक्तस्य ज्ञानिनश्चोभयोरपि मर्यादायामङ्गीकारो यतो याज्ञवल्क्यार्तभागौ तथा दर्शयतः ॥ ३२१

## ३ समानाधिकरणम् ।

७ मर्यादामार्गे जीवसंसरणमारभ्य मोक्षपर्यन्तं साधनेनैव मुक्तिरिति व्यवस्था समाना । मध्ये भेदो न भवति । पुष्टिमार्गे तु साधनमकृत्वैवामृतं नियतम् । ३२२

८ पुष्टिफलदशायां मर्यादामार्गीयमोक्षस्य संसारत्वेन कथनात् संसारतुल्यतैवातो याज्ञवल्क्यार्तभागाभ्यां मोक्षस्य कर्मत्वेन कथनम् । ३२२

९ पुष्टिमार्गीयतत्त्वं सूक्ष्मम् । यतो वाचो निवर्तन्त इति श्रुत्या तथोपलब्धेः । ३२३

१० ननु पुष्टिमार्गीयाः स्वमार्गतत्त्वं मित्रादिभ्यः कुतो नोपदिशन्ति तत्राह—ऐश्वर्यभावे ह्युपदेशः संभवति । पुष्टिमार्गीयाणां तु द्वे एवावस्थे । विरहदशा भगवत्संगमदशा चेति । तत्र विरहदशायामैश्वर्यादीनां विनाशादुपदेशो न संभवति । भगवत्संगदशायां त्वैश्वर्यादीनां सत्त्वेपि भगवदानन्दानुभवनिमग्नचित्तत्वेनोपदेशस्यासंभवः । ३२३

११ ननु रसात्मकभगवत्स्वरूपानुभवे तेषां विरहदुःखं कथमिति चेत्तत्राह—अस्यैवानन्दात्मकभगवत एव धर्मो विरहाख्यः । नन्वानन्दात्मकस्य दुःखरूपो धर्मः कथमिति चेन्न । भगवदन्तःप्राप्तिबाह्यप्राप्तिभ्यामानन्दानुभवविरहतापयोरुपपत्तेः । ३२४

१२ ननु श्रुतौ दुःखं निषिध्यत इति चेन्न तत्र श्रुतौ रोगेण सह पाठाच्छारीरदुःखस्यैव तत्र निषेधात् । एवं च शृङ्गारव्यभिचारिभावात्मकं तु दुःखं न निषिध्यते । ३२४

सूत्राङ्काः पृष्ठाङ्काः

१३ एकेषां शाखिनां मते चक्षुरवरूपवाक्यानन्तरं दुःखनिवृत्ति-रूपोऽर्थः स्पष्टः पठ्यते । २२४

१४ श्रीभागवते भगवज्ज्ञानस्य जीवनमरणहेतुत्वं दौर्लभ्यं च स्मर्यते । २२५

१५ श्रुतेस्तानि पूर्णानन्दादिवस्तूनि वैकुण्ठादप्युत्कृष्टे गोकुले श्रीगोवर्धने च सन्ति ॥ २२६

### ४ अविभागाधिकरणम् ।

१६ नित्यलीलाप्रविष्टभक्तस्य सर्वदा विभागाभाव एव । तद्विष्णो-रिति श्रुतिवचनात् ॥ २२७

### ५ तदोकोऽधिकरणम् ।

१७ इन्द्रियलयानन्तरं तस्यात्मनः स्थानस्य हृदयस्याग्रं प्रकाशते ततस्तेन प्रकाशितमार्गेणोत्क्रामति । अयं सर्वजीवसाधारणो मार्गः । विद्वांस्तु ब्रह्मविद्यासामर्थ्यात्तदङ्गभूतभजनगतिभग-वत्स्मरणसंबन्धाद् हृदयस्थितेन भगवतानुगृहीतः शतैकरात-तम्या नाड्या निष्क्रामति ॥ २२७

### ६ रश्म्यधिकरणम् ।

१८ विद्वानेव रश्मिद्वारा गच्छति ॥ २२८

### ७ निश्यधिकरणम् ।

१९ निशि विदुष उत्क्रमणं नेति चेन्न । अनुग्रहहेतुभूतस्य भक्त्यनुस्मृतिसंबन्धस्य यावद्देहपर्यन्तं स्थायित्वेनानुग्रहस्य सर्वदा सत्त्वात्कालस्याप्रयोजकत्वात् । एतमेवेति श्रुतिस्तथा दर्शयति । २२९

२० अतो दक्षिणायनज उत्क्रमणविशेषोऽपि विदुषो नास्ति । २२९

२१ अग्निर्ज्योतिरिति कालनियमो योगिनं प्रति स्मर्यते न ज्ञानिनं प्रति । यतश्चैते योगसांख्ये स्मार्ते । श्रौतज्ञानमार्गस्य तु ज्ञानेतरकालादिसापेक्षत्वं न ॥ २२९

---

सूत्राङ्काः पृष्ठाङ्काः ।

## चतुर्थाध्यायस्य तृतीयः पादः ४ । ३ ॥

### १ अर्चिराद्यधिकरणम् ।

| | | |
|---|---|---|
| १ | अर्चिरादिमार्गेण प्रायो ज्ञानमार्गीय एव गच्छति न तु मर्यादामार्गीयोपि । तद्य इत्थं विदुरिति ज्ञानमार्गीयस्यैव तत्रोत्कर्षकथनात् । | ३३० |
| २ | छान्दोग्ये मासेभ्यः संवत्सरमित्यत्र संवत्सरादुत्तरं वायुलोको निवेश्यः । अविशेषविशेषाभ्याम् । तथाहि–अर्चिरारभ्य संवत्सरान्तानां भूसंबन्धित्वेनाविशेषात्तन्मध्ये वायुर्न निवेश्यः । वायुरन्तरिक्षस्याधिपतिरिति श्रुतेः । सूर्यो दिवोधिपतिरिति श्रुतेश्च । एतयोः पौर्वापर्ये विशेषहेतुरस्तीति सूर्यलोकात्पूर्वं वायुलोको निवेश्यः । | ३३३ |
| ३ | चन्द्रमसो विद्युतमित्यत्र विद्युल्लोकात्परतो वरुणलोको निवेश्यः । तडितो जलसंबन्धित्वेन वरुणस्य जलपतित्वेन च जलीयसंबन्धस्य सत्त्वात् । | ३३५ |
| ४ | वरुणलोकात्परमिन्द्रलोकः प्रजापतिलोकश्च निवेशनीयः संबन्धादेव हेतोः ॥ | ३३५ |

### २ आतिवाहिकाधिकरणम् ।

| | | |
|---|---|---|
| ५ | एतस्मिन्नेव मार्गे प्रजापतिलोकोत्तरमातिवाहिकपुरुषा उपसंहार्याः । ब्रह्मसंबन्धित्वलिङ्गात् । | ३३५ |
| ६ | स्वकृतमार्गस्य साफल्याय भगवानेव कांश्चिज्ज्ञानिनो मर्यादामार्गीयभक्तांश्च व्यामोहयति । अतः कामनासिध्या फलभोगः । | ३३७ |
| ७ | ब्रह्मलोकसंबन्धिना वैद्युतपुरुषेणैव ब्रह्मलोकप्राप्तिः । तान् वैद्युतादिति श्रुतेः ॥ | ३३७ |

### ३ कार्याधिकरणम् ।

| | | |
|---|---|---|
| ८ | स एतानित्यत्र कार्यं ब्रह्मोच्यते । यतोस्य तत्रैव गमनमुपपद्यते न ब्रह्मणि । तस्य व्यापकत्वात् । | ३३८ |

सूत्राङ्काः पृष्ठाङ्काः

## चतुर्थाध्यायस्य चतुर्थः पादः ४ । ४ ॥

### १ संपद्याविर्भावाधिकरणम् ।

१ ब्रह्म प्राप्य स्थितस्य जीवस्य भगवदत्यन्तानुग्रहवशात्स्वरूपानन्दोनेन ग्राह्य इति भगवदिच्छायां पुनराविर्भावो भवति न जन्म । सोऽश्नुत इति श्रुतेः । ३४६

२ मुक्तं प्रतिज्ञाय सोऽश्नुत इत्यनेन निवरणकथनात्कामाशनस्य पुष्टिमार्गीयमुक्तिरूपत्वम् । ३४६

३ सह ब्रह्मणेत्यत्र मायागुणसंबन्धरहितस्य व्यापकात्मनो ग्रहणम् । ब्रह्मविदिति श्रुतेस्तत्प्रकरणत्वात् । ३४७

४ तदेषाभ्युक्तेत्यनेन ब्रह्मविदितिवाक्योक्तार्थप्रतिपादकत्वेनेयमृगुक्तेति दृष्टत्वात् पूर्ववाक्येन सह सोऽश्नुत इत्यस्याः पठितत्वेन प्रकरणैक्यम् ॥ ३४७

### २ ब्राह्माधिकरणम् ।

५ ब्रह्मसंबन्धिना सच्चिदानन्दात्मकशरीरेण ब्रह्मणा सर्वान् कामानश्नुत इति जैमिनिराचार्यो मनुते । ब्रह्मविदाप्नोतीत्युपन्यस्य सोऽश्नुत इति कथनात् । ३४७

६ स यथा सैन्धवघन इति श्रुत्युक्तचिद्रूपे ब्रह्मणि चिन्मात्ररूपेण कामान् भुङ्क्ते नत्वलौकिकदेहेन्द्रियादिना । जीवस्य तदात्मकत्वादित्यौडुलोमिराचार्यो मन्यते । ३४८

७ बादरायणोलौकिकविग्रहेणापि भोगे विरोधाभावं मनुते । ब्रह्मविदाप्नोति परमित्यस्यैवमपि विग्रहवत्त्वेनाप्युपन्यासात् । ननु विग्रहस्य जन्यत्वेन लौकिकत्वाद्ब्रह्मणा सह भोगो न संभवतीति शङ्कायामाह—भक्तस्य भगवत्प्राप्तेः पूर्वमेव भगवद्भोगानुकूलविग्रहाणां सत्त्वान्न कृत्रिमत्वम् । एवंच भगवत्स्वरूपानन्दानुभवयोग्यानि स्वरूपाणि नित्यानीति सिद्धम् । ३४८

सूत्राङ्काः पृष्ठाङ्काः ।

८ भजनानन्ददानसंकल्पादेव तदानन्दमनुभवति । यमेवैष इति श्रुतेः । २४९

९ पूर्वोक्तसंकल्पाद्धेतोः साधनात्मना फलात्मना च येषां हृदि भगवानेव स्फुरति नान्यत्तेषामाधिपत्यं स्वयमेव करोति भगवान् । अन्यत्र तु विभूतिरूपैराधिपत्यं न स्वतः । २४९

१० बादरिराचार्यो मुक्त्यवस्थायां देहाद्यभावं मनुते । यतो यत्रेति श्रुतिर्द्वैतनिषेधमाह । एवं च देहाभाववतस्य काम-भोगकथनमसंगतमिति बादरेर्मतम् । २५०

११ जैमिन्याचार्यो मुक्तस्य पुंसो देहादिसत्तामाह । विविध-श्रुतिभिर्व्यवस्थितविकल्पस्य कथनात् । २५०

१२ भगवद्रसभोगार्थं शरीररूपेणाविर्भावेन भोगायतनत्वाच्छरी-रत्वम् । ज्ञानिनां तु भौतिकत्वमात्रेण निराकारत्वेन स्वस्मिन् लयसंपादकत्वादशरीरत्वमपीति बादरायणाचार्यो मन्यते । तस्य ह वा एतस्येत्यारभ्यात्मन एवेदमित्यन्तश्रुतेः । अत्र वैदिको दृष्टान्तः । द्वादशाहवदिति । तथाहि—द्वाद-शाहस्य स द्वादशरात्रेण यजेतेति विधानाद्यागत्वं य एवं विद्वांस इति विधानात्सत्रत्वं तथेहाप्यर्थः ॥ २५१

## ३ तन्वभावाधिकरणम् ।

१३ यथा स्वप्ने निद्रामोहितः पुरुषोऽविद्यमानानेव पदार्थान् पश्यति तथा श्रीकृष्णाद्यवतारेष्वविद्यमाना एवावस्था बाल्या-दयो दृश्यन्ते भगवता विमोहितैरसुरादिभिः । २५२

१४ यथा जाग्रद्दशागतं ज्ञानं सत्यविषयकं तथा तन्वेनाप्राकृत-लीलादर्शनं सत्यविषयकम् ॥ २५३

## ४ प्रदीपाधिकरणम् ।

१५ सोऽश्नुत इत्यादिनोक्तो भोगो भक्तसामर्थ्येन न किंतु प्रदी- २५४

सूत्राङ्काः पृष्ठाङ्काः ।

पवद्भगवदावेशेन । तथाहि यथा प्रदीपः स्नेहवर्त्यन्तरसंब-द्धस्तां स्वसमानां करोति एवं भगवानपि फलदानार्थं भक्तेन संबद्धस्तं स्वसमानं करोति । तथैव भर्ता सन्निति श्रुति-र्दर्शयति ।

१६ सुषुप्तिविषया न तदश्नोतीति श्रुतिः । ब्रह्मसंपत्तिरूपपुष्टिमार्ग-मोक्षविषया सोऽश्नुत इति श्रुतिरित्येवं श्रुतिद्वयेन भिन्नविषय-कत्वमुक्तम् । अतो निर्गुणसगुणकल्पनानुपयुक्ता ॥ ३५५

## ५ जगद्व्यापाराधिकरणम् ।

१७ भगवता सह भोगकरणं लौकिकव्यापाररहितं भवति । अलौकिकस्यैव प्रकरणाल्लौकिकव्यापारस्य च प्रकृतिकाला-द्यतीतत्वेन संनिधानाभावात् । ३५६

१८ ननु छान्दोग्ये सर्वं ह पश्यतीति सर्वविषयज्ञानस्य प्रत्यक्ष-तया कथनात्कथं लौकिकव्यापारराहित्यमिति चेत्तत्राह-देशकालभेदेनानेकविधलीलाधिकृतभक्तेन तत्तल्लीलार्थं यानि नानारूपाणि गृह्यन्ते तान्याधिकारिकाणि तत्समूहघटित-पदार्थानामेव सर्वं हेति श्रुतिवाक्ये ग्रहणं न लौकिकवस्तुनः । ३५७

१९ ननु भ्वरस्त्वद्गृहमायास्य इति भगवदुक्तिस्तदाशया भक्तप्रती-क्षेत्युभे अपि न संभवतो लीलाया नित्यत्वादिति चेत्तत्राह-भगवल्लीलारूपा प्रकृतिस्तद्विरुद्धं विकारस्तदन्तर्गतमर्थाद्विरुद्धं न भवति पूर्वोक्तं वचः । एवं च यं प्रत्युच्यते त्वद्गृहमा-यास्य इति तस्य तदा भगवतः सर्वदा मद्गृहव्याप्तिरिति-ज्ञानं नोदेति । तथैव सर्वमाप्नोतीति श्रुतिर्लीलायां तस्य स्थितिमाह । अलौकिकेर्थे प्रमाणमेवानुसर्तव्यं नतु लौकिक-युक्तिरिति भावः । ३५७

॥ श्रीकृष्णाय नमः ॥

# अणुभाष्यम् ।

## श्रीमते वल्लभाचार्याय नमः ।

### १ जिज्ञासाधिकरणम् ।

**अथातो ब्रह्मजिज्ञासा ॥१।१।१॥**

इदमत्र विचार्यते । वेदान्तानां विचार आरम्भणीयो न वेति । किं तावत् प्राप्तम् । नारम्भणीय इति । कुतः ।

५ **साङ्गोऽध्येयस्तथा ज्ञेयो वेदः शब्दाश्च बोधकाः ।**
**निःसंदिग्धं तदर्थाश्च लोकवद्व्याकृतेः स्फुटाः ॥ १ ॥**

अर्थज्ञानार्थं विचार आरम्भणीयः । तस्य च ब्रह्मरूपत्वात् तज्ज्ञाने पुरुषार्थो भवतीति न मन्तव्यम् । विचारं विनापि वेदादेव साक्षादर्थ-प्रतीतेः । न चार्थज्ञानमविहितम् अविचारिताश्च शब्दा नार्थं प्रत्याय-१० न्तीति वाच्यम् । ज्ञेयश्चेति विधानात् ।

गीती शीघ्री शिरःकम्पी तथा लिखितपाठकः ।
अनर्थज्ञोऽल्पकण्ठश्च षडेते पाठकाधमाः ॥ १ ॥

(पा. शि. ३२) इति ।

बाधोपलब्धिश्च । शब्दश्चक्षुरादिवन्न संदिग्धार्थप्रतिपादकः । तदर्थश्च १५ व्याकरणादिना निर्श्चीयते । यथा लौकिकवाक्ये तथा वेदेपि । न च तद्विरुद्धं निर्णेतव्यम् । अप्रामाणिकत्वप्रसङ्गात् । तस्माद्वेदार्थज्ञानार्थं विचारो नारम्भणीयः ।

स्यादेतत् । न वेदार्थज्ञानमात्राय विचारः किंतु ब्रह्मज्ञानाय । तस्य चात्मरूपत्वात् तस्य चाविद्यावच्छिन्नत्वाद् देहात्मभावदृढप्रतीतिस्तद-

5–A reads शब्दश्च बोधकः for शब्दाश्च बोधकाः ।

तिरिक्तस्य ब्रह्मणोऽभावाच्च वेदमात्रादसंभावनाविपरीतभावनानिवर्तकं ज्ञानमुत्पद्यते प्रत्युत देहात्मभावदृढप्रतीतिः श्रुतेरुपचरितार्थत्वं स्तुतित्वं वा कल्पयिष्यतीति ॥ मैवम् ।

अलौकिको हि वेदार्थो न युक्त्या प्रतिपद्यते ।
५　तपसा वेदयुक्त्या तु प्रसादात्परमात्मनः ॥ २ ॥

न हि स्वबुद्ध्या वेदार्थं परिकल्प्य तदर्थं विचारः कर्तुं शक्यः । ब्रह्म पुनर्यादृशं वेदान्तेष्ववगतं तादृशमेव मन्तव्यम् । अणुमात्रान्यथाकल्पनेऽपि दोषः स्यात् ।

योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
१०　किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥

नैषा तर्केण मतिरापनेया ( कठ. १-२-९ ) इति श्रुतेश्च ।

न च विरुद्धवाक्यानां श्रवणात्तन्निर्धारार्थं विचारः । उभयोरपि प्रामाणिकत्वेनैकतरनिर्धारस्याशक्यत्वात् । अचिन्त्यानन्तशक्तिमति सर्वभवनसमर्थे ब्रह्मणि विरोधाभावाच्च । अत एवोपनिषत्सु तत्तदुपाख्याने बोधाभावे औपाधिकबोधे च तपस एवोपदेशः । न च तपःशब्देन विचारः । तस्य पूर्वानाधिक्यात्तप एव । न चोपाख्यानानां मिथ्यात्वम् । तथा सति सर्वत्रैव मिथ्यात्वं भवेद्विशेषाभावात् । न ह्यप्रामाणिकोक्ते विधौ चोपाख्याने वा ब्रह्मस्वरूपे वा कस्यचिदपि विश्वासो यथा लोके । तस्माद्वेदाक्षरमात्रस्याप्यसत्यार्थज्ञानस्याभावाद्वैदिकानां न सन्देहोऽपि । किं पुनर्विरुद्धार्थकल्पना । विद्यासु च तदश्रुतेः । २० यदि वेदार्थज्ञाने विचारस्योपयोगः स्यात्तदङ्गत्वेन व्याकरणस्येव विद्यासु श्रवणं स्यात् । स्वातन्त्र्ये च पुराणादेरिव मीमांसाया अपि प्रकारभेदेन प्रतिपादकत्वं स्यात् । तं त्वौपनिषदं पुरुषं पृच्छामि ( बृ. ३-९-२६ ) इति तु तेषां निषेधः । अन्यथाज्ञानं नोपनिषदुक्तं फलं समर्पयति । तस्मान्नारम्भ-

---

5–A reads युक्त्या न for युक्त्या तु ।

णीय एव ब्रह्मविचारः । अनेन धर्मविचारोऽप्याक्षिप्त एव । न ह्येतान्निराकर्तुः सोऽयमतिभार इति पूर्वः पक्षः ॥

सिद्धान्तस्तु ।

**संदेहवारकं शास्त्रं बुद्धिदोषात्तदुद्भवः ।**
**विरुद्धशास्त्रसंभेदादङ्गैश्चाशक्यनिश्चयः ॥ ३ ॥**
**तस्मात् सूत्रानुसारेण कर्तव्यः सर्वनिर्णयः ।**
**अन्यथा भ्रश्यते स्वार्थान्मध्यमश्च तथादिमः ॥ ४ ॥**

परम्परया पाठवदर्थस्यापि गुरुमुखादेव श्रवणेऽपि मन्दमध्यमयोः संदेहो भवेत् समानधर्मदर्शनात् पदादिपाठवत् । तत्र यथा लक्षणानामुपयोग एवमेव मीमांसाया अपि । तदुक्तम् ।

**असंदिग्धेऽपि वेदार्थे स्थूणाखननवन्मतः ।**
**मीमांसानिर्णयः प्राज्ञे दुर्बुद्धेस्तु ततो द्वयम् ॥ ५ ॥**

इति । तथा च निर्णये येन केनचिद्वक्तव्ये हरिः स्वयं व्यासो विचारं चिकीर्षुस्तत्कर्तव्यतां बोधयति ब्रह्मजिज्ञासा कर्तव्येति । व्यासोक्तत्वादपि कर्तव्यता ।

कर्तव्यपदाध्याहारे स्वातन्त्र्यं न भवति । अन्यथा—अथ योगानुशासनम् ( यो. सू. १-१ ) इतिवत् स्वतन्त्रता स्यात् । तथा च ज्ञानानुपयोगः । तथाहि—तं त्वौपनिषदं पुरुषं पृच्छामि ( बृ. ३-९-२६ ) इति केवलोपनिषद्वेद्यं ब्रह्म न शास्त्रान्तरवेद्यं तथापि मीमांसा स्वतन्त्रा स्यात् तज्जनितं ज्ञानं न ब्रह्मज्ञानं भवेत् ।

अथवा अध्याहारकरणापेक्षयाथशब्द एवाधिकारे व्याख्येयः । वेदाध्ययनानन्तर्यं न सिद्धमेव । न ह्यनधीत एव विचारमर्हति । तत्रैतन्न स्यात् । स्वतन्त्रतेति । तत्र प्रतिविधास्यामः । [illegible] इति ।

7–ग reads तदादिमः for तथादिमः ।
22–ग reads ब्रह्माध्ययनानन्तर्यं for वेदाध्ययनानन्तर्यं । ग and M. read ह्यनधीतवेद for ह्यनधीत ।

किमत्र युक्तम् । व्याख्यानमिति । व्याख्यानतो विशेषप्रतिपत्तेः । यथा कर्माणि दर्शपूर्णमासौ तु पूर्वं व्याख्यास्यामः । अथातो दर्शपूर्णमासौ व्याख्यास्यामः ( आ. श्रौ. सू. १-१ ) इति ।

अथैवेतर्हीमानि सिध्यन्ति प्रयोजनानि । अधिकाराकाङ्क्षा न भवे-
५ दध्याहारश्च । पुरुषार्थश्च सिध्येत् । उच्छेदश्च न भवेदिति । कथम् । अथशब्दोऽर्थचतुष्टये वर्तते । मङ्गले । अधिकारे । आनन्तर्ये । अर्थान्तरोपक्रमे च । तत्र श्रुतिमात्रेणैव मङ्गलसिद्धेरर्थान्तरस्य च पूर्वोक्तस्याभावान्न तत्कल्पनम् । अथावशिष्यत आनन्तर्ये चाधिकारे वेति । आनन्तर्ये त्वध्ययनस्य स्वतःसिद्धत्वादधिकाकाङ्क्षा भवति । तथा सति तदभावान्न
१० विचारः सिध्येत् । तथाहि न तावद्धर्मविचारानन्तर्यं विपर्ययसम्भवात् । न च पाठतो नियमः । तत्रापि तथा । न चाचाराद्व्यवस्था । तत्राप्यनियमसंभवात् । प्रत्यवायाश्रवणात् । संभवेऽपि न वक्तव्यत्वमध्ययनवत् । तथा च ततोऽप्याकाङ्क्षा भवेत् । न च वैराग्यशमदमादिः पूर्वसिद्धः । तेषामेवाभावात् । न च यदैव संभवस्तदैव तत्कर्तव्यमिति वाच्यम् । तदसंभवापत्तेः ।
१५ तथाहि ब्रह्मणः परमपुरुषार्थत्वे ज्ञाते तज्ज्ञानस्यैव साधनत्वेऽवगते तच्छेषत्वे च यागादीनामवगते तदर्थकर्मकरणे चित्तशुद्धौ सत्यां वैराग्यादि । इदं च वेदान्तविचारव्यतिरेकेण न भवतीत्यन्योन्याश्रयः ।

निर्धारिते तु वेदान्ते विचारो व्यर्थ एव । न च साक्षात्कारस्तत्फलम् । तस्य शब्दशेषत्वेन तत्कल्पनायां प्रमाणाभावात् । दशमस्त्वमसीत्यादौ
२० प्रत्यक्षसामग्र्या बलवत्त्वाद्देहादेः प्रत्यक्षत्वात् । स्वदेहमपि पश्यन् दशमोऽहमिति मन्यते । न तथा प्रकृते । मननिदिध्यासनविधीनामानर्थक्यप्रसङ्गात् ।

न चाधिकारिभेदः कल्पनीयः । शब्दज्ञाने तत्कल्पनायां प्रमाणाभावात् । अत्यन्तासत्येऽप्यर्थे शब्दस्य ज्ञानजननात् । प्रमाणसं-

---

8–B reads वाधिकारे for चाधिकारे । A reads चेति for वेति ।
9–B om. सति ।
18–ग reads फलम् for तत्फलम् ।

करापत्तिश्च । मनसा तज्जननेपि तथा । तस्मात्प्रथमं शाब्दमेव ज्ञानमिति मन्तव्यमनुभवसिद्धत्वात् । इदानींतनानामपि शमादिरहितानां निर्विचिकित्सितवेदार्थज्ञानोपलब्धेः । संन्यासानुपपत्तिश्च । किंच अध्याहारश्च कर्तव्यः स च कर्तव्यादिपदानाम् । यदि तत्स्वार्थं व्यर्थमेव वाक्यं स्यात् । परार्थत्वे ५ त्वशक्यम् । न हि तैर्विचारः कर्तुं शक्यते । स्वकृतिवैयर्थ्यं च । असंगतिश्चास्य सूत्रस्य भवेत् । किंच । अधिकारपक्षे पुरुषार्थः सिध्यति नानन्तर्यपक्षे । उक्तन्यायात् । किंच । तादृशस्याधिकारिणः श्रवणमात्रेण कृतार्थस्य समाधिनिरतस्य प्रवचनासंभवात् शास्त्रोच्छेदः । शास्त्रविरोधश्च । साधनानामग्रे स्वयमेव वक्तव्यत्वात् । अतोनेकदोषदुष्टत्वादधिकारार्थ एव श्रेयान् ।

१० नच ज्ञातुमिच्छा जिज्ञासा नाधिकर्तुं शक्येति वाच्यम् । जिज्ञासापदस्य विचारार्थत्वात् । अत एव जिज्ञासितुमिच्छेदिति पुराविदां वचनानि । जिज्ञासापदेन चैतज्ज्ञापयति । ब्रह्मज्ञानं पुरुषार्थसाधनत्वादिष्टम् । तदिच्छापूरणाय विचार आरभ्यत इति । यस्मात् कर्मादिभ्यो ज्ञानमेव पुरुषार्थसाधनमित्यतस्तज्ज्ञानाय विचारोधिक्रियत इत्यतः शब्दार्थः । १५ अधिकारी तु त्रैवर्णिक एव । न हि वेदविचारस्य वेदाधिकार्यतिरिक्तः शक्यते कल्पयितुम् । न हि मन्दमतेर्वेदो नायातीति त्रैवर्णिके मतिमत्त्वमधिकारिविशेषणं कल्प्यते । अन्धपङ्ग्वादीनामिव कर्माणि । गृहाद्यासक्तस्य मननाद्यसंभवात् साक्षात्कारो न भविष्यति ॥ न च धर्मन्यायेन गतार्थत्वमस्य । अप्रतिज्ञानादनुपलब्धेश्च । न च जगत्कारणं परमात्मा वा प्रकृतिर्वा २० परमाणवो वेति संदेहे किंचिदधिकरणमस्ति ।

स्यादेतत् । अथातो धर्मजिज्ञासा ( जै. सू. १–१–१ ) इति धर्मविचारं प्रतिज्ञाय नोदकवाक्यार्थस्य धर्मत्वमुक्त्वा प्रामाण्यपुरःसरं सर्वे संदेहा निवारिताः । तत्र ब्रह्मज्ञानस्यापि धर्मत्वम् । आत्मेत्येवोपासीत (बृ. १–४–७) आत्मानं लोकमुपासीत (बृ. १–४–१५) तद्ब्रह्मेत्युपासीत २५ (तै. ३-१०-४) आत्मा वारे द्रष्टव्यः (बृ. २–४–५) इत्यादिनोदनावाक्या-

2–A reads निर्विचिकित्स for निर्विचिकित्सित ।
19–बि reads अस्याः for अस्य ।

धत्वात्—अयं हि परमो धर्मो यद्योगेनात्मदर्शनम् ( या. स्मृ. १-८ ) इति स्मृतेश्च । स्तुत्यादिवाक्यानां त्वर्थवादत्वम् । आरोपापवादविषयधर्मप्रतिपादकत्वेन विधेयोपासनाविषयस्तावकत्वात् । न च ज्ञानादीनामविधेयत्वं प्रमाणवस्तुपरतन्त्रत्वेनाकृतिसाध्यत्वादिति वाच्यम् । न हि सर्वात्मनासाध्यं ५ प्रकारभेदस्तत्प्रयोजकः । सर्वस्यापि कारणेषु पुरुषस्याप्रवृत्तिः । तदत्र वृत्तिसंपादने प्रमाणसंपादने वा पुरुषकृतिसाध्यत्वम् । अन्यथा सिद्धान्तोपि मननादिशास्त्रवैफल्यापत्तेः । साधनप्रतिपादकश्रुतिविरोधश्च । येनापि सर्वक्रियाफलत्वं निराकार्यं तेनापि गुरूपसत्त्यादिना यतितव्यमेव ज्ञानार्थे । तस्माद्यत्रापि विध्यश्रवणं तत्रापि विधिं परिकल्प्य तत्रत्यानां १० तच्छेषत्वं कल्प्यमिति नार्थोनया मीमांसया । अन्यथा विरोधोपि ।

स्यादेतत् । ब्रह्मविचार एवारम्भणीयो न धर्मविचारः । सर्ववेदव्यासकर्त्रा वेदव्यासेनाकृतत्वात् तुच्छफलत्वाच्च । कल्पोक्तप्रकारेण निःसंदिग्धं करणसंभवाच्च । आचारपरंपरयापि करणसंभवाच्च । एतर्ह्यपि संदेहे सूत्रभाष्ययाज्ञिकानामेवानुवृत्तिः क्रियते न मीमांसकस्य १५ तस्मात् साङ्गवेदाध्येतुर्निःसंदेहकरणसंभवाच्च पूर्वयापि कृत्यम् । किंच । परमकृपालुर्वेदः संसारिणः संसारान्मोचयितुं कर्माणि चित्तशुध्यर्थं बोधितवानिति कूपेऽन्धपातनवदप्रामाणिकत्वमित्यवसीयते । विपरीतबोधिका तु पूर्वमीमांसा तस्मादपि न कर्तव्येति ।

मैवम् । किं विचारमात्रमेव न कर्तव्यं पूर्वकाण्डविचारो वा । नाद्यः । २० तुल्यत्वात् समर्थितत्वाच्च । द्वितीये सामान्यन्यायेन संदेहे निवार्ये लक्षणवत् तदुपयोगः । अनिष्टतया निरूपणं न मीमांसादोषः । किंतु विचारकाणां स्वभावभेदात् । किंच । आवश्यकत्वादपि । निवृत्तानामपि यागादिज्ञानस्यावश्यकत्वं चित्तशुध्यर्थत्वात् । परमाश्रमभेदेन प्रकारभेदः कापिलादिभेदात् ।

---

5–A reads कारणे for कारणेषु ।

19–M reads विचारमात्रं for विचारमात्रमेव ।

22–ग reads यागादिक for यागादि ।

तत्राद्यस्य वाचिको द्वितीयतृतीययोः कायिकश्चतुर्थस्य मानसिक इत्याश्रमिणाम् । तस्मादेकेनैव चरितार्थत्वात् किं द्वितीयेनेति प्राप्ते ।

उच्यते। उपासनाया धर्मत्वेपि न ब्रह्मणो धर्मत्वम्। ज्ञानरूपत्वात्। धर्मस्य च क्रियारूपत्वात् । न चार्थवादानां धर्म इव ब्रह्मण्युपयोगः कर्तुं शक्यः।
५ उत्पत्तिप्रकारे फलभेदानामभावात् । प्रकृते तु माहात्म्यज्ञानार्थं तदुपयोगः। तस्य च ज्ञानोपयोगो यथा तथा वक्ष्यते चतुर्थे। उपासनादर्शनादिपदानां मनोव्यापारत्वमेव । विचारस्यापि यथा ज्ञानोपयोगित्वं तथा वक्ष्यते। किंच। औपनिषदज्ञानस्यापि कर्मोपयोगित्वं—यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवति ( छां. १-१-१० )
१० इति । अत एव ब्रह्मविदामेव जनकादीनां कर्मणि सर्वदेवसांनिध्यम् । अन्यथाभासत्वमेव । न च ब्रह्मरूपात्मविज्ञाने देहाद्यध्यासाभावेन कर्तृत्वाभावात् कर्मानधिकार इति वाच्यम् । निरध्यस्तैरेव देहादिभिः कर्मकरणसंभवात् । अत एव जीवन्मुक्तानां सर्वे व्यापाराः। तथा च स्मृतिः।

नैव किंचित् करोमीति युक्तो मन्येत तत्त्ववित् ।
१५ पश्यञ्शृण्वन् स्पृशञ्जिघ्रन्नश्नन् गच्छन् स्वपञ्श्वसन् ॥
प्रलपन् विसृजन् गृह्णन्नुन्मिषन्निमिषन्नपि ।
इन्द्रियाणीन्द्रियार्थेषु वर्तन्त इति धारयन् ॥
ब्रह्मण्याधाय कर्माणि संगं त्यक्त्वा करोति यः ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥

२० ( भ. गी. ५-८-१० ) इति

अतो ब्रह्मविदामेव कृतं कर्म शुभफलं भवति । अतो धर्मविचारकाणामपि ब्रह्म जिज्ञास्यमेव । तस्मान्न गतार्थत्वानुपयोगौ ।

ननु फलप्रेप्सुरधिकारी । फलं च विचारस्य शाब्दज्ञानम् । तस्य मननादिद्वारानुभवः । तस्य चानर्थनिवृत्तिपूर्वकपरमानन्दावाप्तिः । तथा
२५ च विरक्तोनर्थजिहासुः परंप्रेप्सुश्चाधिकारी कस्मान्न भवति ।

---

6–B reads वक्ष्यते। चतुर्थ उपासना० । for वक्ष्यते चतुर्थे । उपासना०
8–B reads यथात्र for यथा ।

शब्दब्रह्मणि निष्णातो न निष्णायात् परे यदि ।
श्रमस्तस्य फलं मन्ये ह्यधेनुमिव रक्षतः ॥

( भा. ११-११-१८ )

इति भगवद्वचनात् केवलस्य निन्दाश्रवणादिति चेत् । न । फलकामनाया
५ अनुपयोगात् । अन्येनैव तत्समर्पणात् । निन्दनत्वादध्यर्थज्ञानस्य न फलो-
प्सुरधिकारी । निन्दार्थवादस्तु मननादिविधिशेष इति मन्तव्यम् ।

ननु ब्रह्मणो विचारे प्रतिज्ञाते विरोधनिराकरणादीनामप्रतिज्ञातार्थ-
त्वम् । न चावकल्प्यत्वं निर्विचिकित्सज्ञानानुपपत्तिप्रसंगादिति चेत् । ब्रह्मण
इति न कर्मणि षष्ठी किंतु शेषषष्ठी । तथा च ब्रह्मसंबन्धि तज्ज्ञानोपयोगि
१० सर्वमेव प्रतिज्ञातं वेदितव्यम् । न च गौणतापत्तिरजिज्ञास्यत्वं च स्यादिति
वाच्यम् । ब्रह्ममात्रे संदेहाभावात् । संदिग्धस्यैव जिज्ञास्यता । गौणत्वं तु
शब्दत एव । न त्वर्थतः । वेदप्रामाण्यं तु प्रतितन्त्रसिद्धत्वान्न विचार्यते ।
तस्माद्ब्रह्म जिज्ञासितव्यमिति सिद्धम् ॥ १।१।१ ॥

---

## २ जन्माद्यधिकरणम् ।

१५ किंच तत्र किंलक्षणं किंप्रमाणकमिति जिज्ञासायामाह सूत्रकारः ।

**जन्माद्यस्य यतः शास्त्रयोनित्वात् ॥ १।१।२ ॥**

इति । ननु कथमत्र संदेहः । यावता—सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २-१ )
इत्याह श्रुतिरेव । विरुद्धं चैतत् । स्वरूपलक्षणाकथने कार्यलक्षणस्य
वक्तुमशक्यत्वात् । विवादाध्यासितत्वाच्च । नहि ब्रह्मणो जगत्कर्तृत्वं
२० सर्वसंमतम् । न चागमोदितमिति वेदमात्रस्य ब्रह्मप्रमाणकत्वं वक्तुं
शक्यते । किंच । व्यर्थश्चैवं विचारः । लक्षणप्रमाणाभ्यां हि वस्तुज्ञानं
भवति । तच्च स्वरूपलक्षणेनैव भवतीति किमनेन । तस्मादयुक्तमुत्पश्याम इति ॥
उच्यते ।

संदेहवारकं शास्त्रं वेदप्रामाण्यवादिनाम् ।
२५ क्रियाशक्तिज्ञानशक्ती संदिह्येते परस्थिते ॥ ६ ॥

स्तद्ब्रह्मेति मन्तव्यम् । ब्रह्म तु वेदैककसमधिगम्यं यादृशं वेदे प्रतिपाद्यते तादृशमेवेत्यसकृदवोचाम । प्रकृतेपि हिरण्मय इत्यत्र यकारलोपश्छान्दसः । अतो न द्वयम् । हिरण्यशब्द आनन्दवाची । लोकेपि तस्यानन्दसाधकत्वात् । अतः केशादयोपि सर्व आनन्दमया एव तादृशमेव ५ ब्रह्मस्वरूपमिति मन्तव्यम् । अत एव ।

ध्येयः सदा सवितृमण्डलमध्यवर्ती नारायणः सरसिजासनसंनिविष्टः ।
केयूरवान्मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृतशङ्खचक्रः ॥१॥

( आ. हृदय. ५५) इत्यत्रापि वपुःस्वरूपम् । माया ह्येषा मया सृष्टा (म.भा. १२।३३९।४५) इत्यादि भगवद्वाक्यं भगवन्मायया भगवन्तमन्यथा १० पश्यतीत्याह। नतु भगवानेव मायिक इति। शरीरे सति जीवत्वमेवेति निश्चयः। अतो ब्रह्मधर्मोपदेशात्सूर्यमण्डलस्थः परमात्मैव ॥१।१।१९॥

## भेदव्यपदेशाच्चान्यः ॥ १।१। २० ॥

इतोपि सूर्यमण्डलस्थः परमात्मा। भेदव्यपदेशात्। य आदित्ये तिष्ठन्नादित्यादन्तरो यमादित्यो न वेद यस्यादित्यः शरीरं य आदि- १५ त्यमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ( बृ. ३।७।९ ) इति श्रुत्यन्तर आधिदैविकं सूर्यमण्डलाभिमानिभ्यां भेदेन निर्दिष्टम् । यद्यपि तत्राकारो न श्रूयते तथापि हिरण्मयवाक्यैनैकवाक्यत्वात् सर्वत्र साकारमेव ब्रह्मेति मन्तव्यम् ।

अन्तर्यामिब्राह्मणे चत्वारोर्था उच्यन्ते। सर्वत्र तिष्ठन् तद्धर्मैर्न २० संबध्यते । सर्वमुक्तिपरिहाराय स्वधर्मैस्तन्न बध्यते । स्वलीलासिध्यर्थं तच्छरीरमिति । तस्य नियमनं तदर्थमिति । चकाराद्धर्मा उच्यन्ते । तस्मात्सर्वविलक्षणत्वादन्य एव नाभिमानी । उपचारव्यावृत्त्यर्थमन्यपदेनोपसंहारः । ब्रह्मत्वे सिद्धे ज्ञानं वोपासना वेति नास्मत्सिद्धान्ते कश्चन विशेषः । कारणे कार्यधर्मारोपस्त्वयुक्त एव । कार्ये पुनः कारणधर्माधिक- २५ रणात्वेनोपासना अभेदात् फलायेति सर्वत्र व्यवस्थितिः ॥ १।१। २०॥६॥

---

¹ S reads भगवान for भगवन । भगवान नारद इत्यर्थः प्रदीपटीकायाम् ।

## ८ अतिदेशाधिकरणम् ।

## अत एव प्राणः ॥१।१।२२॥

प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता ( छां. १।११।४ ) इत्युपक्रम्य श्रूयते—कतमा सा देवतेति प्राण इति होवाच । सर्वाणि ह वा
५ इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्ता ( छां. १।११।५ ) इति । तत्र संशयः । आसन्यः प्राणो ब्रह्म वेति । पूर्वपक्षसिद्धान्तौ पूर्ववदेवेत्यतिदिशति । नन्वाधिकरणानां न्यायरूपत्वात्सर्वत्र गमिष्यति किमित्यतिदिश्यत इति । उच्यते । प्राणस्य मुख्यस्यापि सर्वभूतसंवेशनं स्वापादौ श्रुतावेवोपपाद्यते । यदा वै पुरुषः
१० स्वपिति प्राणं तर्हि वागप्येति ( श. ब्रा. १०।३।३।६ ) इत्यादिना । तत्र यथा प्राणविद्याया न ब्रह्मपरत्वमेवमेवास्यापि न ब्रह्मपरत्वमिति न न्यायेन प्राप्नोति । अतोऽतिदिशति । अनेन चायमतिरिक्तो न्याय आपादितः । यत्रैव प्रकरणे ब्रह्मपरत्वे कल्प्यमाने न किंचिद्बाधकं तत्रैव ब्रह्मपरत्वं कल्पनीयमिति । न त्वन्यस्मिन्संभवे तत्परत्वमिति । अत एव
१५ तल्लिङ्गात्प्राणशब्दवाच्यं ब्रह्मेति ॥ १।१।२२ ॥ ८ ॥

---

## ९ ज्योतिश्चरणाधिकरणम् ।

## ज्योतिश्चरणाभिधानात् ॥१।१।२३॥

इदमामनन्ति । अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमेषु लोकेषु । इदं तावद्यदिदमस्मिन्नन्तः
२० पुरुषे ज्योतिः ( छां ३।१३।७ ) इति । तत्र ज्योतिःशब्देन प्राकृतं ज्योतिराहोस्विद् ब्रह्मेवेति संशयः । अत्रासाधारणब्रह्मधर्माभावात् पूर्वपक्षः । सिद्धान्ते तु चरणस्य ब्रह्मधर्मत्वमिति । तावानस्य महिमातो ज्यायांश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि । ( छां. ३।१२।६ ) इति पूर्ववाक्यम् । गायत्री वा इदं सर्वं भूतं यदिदं
२५ किंच ( छां. ३।१२।१ ) इति गायत्र्याख्यब्रह्मनिर्धां वक्तुं तस्याः पाद-

---

11-A ….. अत एव तल्लिङ्गात्प्राणशब्दवाच्यं ब्रह्मेति ।

चतुष्टयं प्रतिपाद्य ब्रह्मणश्चतुष्पात्त्वमुक्तम् । पुरुषसूक्तेऽप्याश्रमचतुष्टयस्था जीवाः पादत्वेनोक्ताः । तथा प्रणवब्रह्मविद्यायामप्योकारोकारमकारनादरूपाश्चत्वारः पादा विश्वतैजसप्राज्ञतुरीया उक्ताः । तद्विष्णोः परमं पदमिति च । ब्रह्म पुच्छमिति च । सत्यकामब्राह्मणे तु स्पष्टा एव ब्रह्मण-
५ श्चत्वारः पादा निरूपिताः । अतः सच्चिदानन्दरूपस्य प्रत्येकसमुदायाभ्यां चतूरूपत्वम् । तत्र केवलानां कार्यत्वमेव । चतुर्थपादस्य तु ब्रह्मत्वम् । तत्रापि षड्विधत्वप्रतिज्ञानाद् भूतपृथिवीशरीराणां परिचायकत्वेन षड्विधत्वमनिरूप्य हृदयस्य षड्विधत्वं निरूपयन्—तस्य ह वा एतस्य ( छां. ३।१३।१ ) इत्यादिना पञ्चदेवपुरुषान्निरूप्य तेषां द्वारपाल-
१० त्वज्ञानानन्तरं—अथ यदतः परो दिवो ज्योतिर्दीप्यते ( छां. ३।१३।७ ) इति चतुर्थपादस्य पञ्चविधत्वप्रतिपादनादतश्चतुर्थपादे पञ्च पुरुषास्ततः परो दिवो ज्योतिः पञ्चस्तस्यैव सर्वत्र दीप्यमानत्वं निरूप्य तदेवान्तः पुरुष उपसंहरति । तस्मात्पूर्वं त्रिपादस्यामृतं दिवि ( छां. ३।१२।६ ) इत्युक्तत्वादस्य त्रिपात्संबन्धस्यामृतमुपरितनलोकस्थितिति । अतोऽत्र चतुर्थः
१५ पादो निरूप्यत इति सिद्धम् । अतः पादानां ब्रह्मधर्मत्वात् ज्योतिषो ब्रह्मत्वमिति । ब्रह्मधर्मनिर्णयार्थमिदमधिकरणं चरणानामौपचारिकत्वव्यावृत्त्यर्थम् । एतन्निर्णयेन प्रणवादिविद्या निर्णीता वेदितव्याः॥ १।१।२३॥

## छन्दोभिधानान्नेति चेन्न तथा चेतोऽर्पणनिगदात्तथा हि दर्शनम् ॥ १।१।२४ ॥

२० ननु नात्र ब्रह्म चतुष्पान्निरूपितं किंतु गायत्रीछन्दः । गायत्री वा इदं सर्वं यदिदं किंच ( छां. ३।१२।१ ) इत्युपक्रम्य तामेव भूतपृथिवीशरीरहृदयभेदैर्व्याख्याय सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्युक्तम्

---

4–M reads ब्राह्मणेन for ब्राह्मणे ।

8–C reads षड्विधत्वमपि निरूप्य for षड्विधत्वमनिरूप्य ।

11–C om. अतः before चतुर्थपादे ।

11–S reads ततः for अतः ।

15–A and S read धर्मपरत्वात for धर्मत्वात ।

( छां. ३।१२।५ ) तावानस्य महिमा ( छां. ३।१२।६ ) इति। तस्यामेव व्याख्यानरूपायां गायत्र्यामुदाहृतो मन्त्रः कथमकस्माद्ब्रह्म चतुष्पादभिदध्यात् । यद्वैतद्ब्रह्मेति ब्रह्मपदमपि छन्दसः प्रकृतत्वात्तत्परमेवावगन्तव्यम् । शब्दस्यापि ब्रह्मवाचकत्वसिद्धेः । ब्रह्मोपनिषदितिवच्छन्दोब्रह्मेति
५ च । तस्माच्छन्दस एव पादाभिधानान्न ब्रह्मधर्माः पादा इति चेत् । नैष दोषः । तथा चेतोर्पणनिगदात् । तथा तेन द्वारेण चेतसोर्पणं निगद्यते । गायत्री वा इदं सर्वं यदिदं किंच ( छां. ३।१२।१ ) इति । नहि वर्णसमाम्नायस्य सर्वत्वमनुपचारेण संभवति । यथा सूचीद्वारा सूत्रप्रवेशस्तथा गायत्रीद्वारा बुद्धिस्तत्प्रतिपाद्ये ब्रह्मणि प्रविशेदिति । कुत एतदेवं प्रति-
१० पाद्यत इति तत्राह । तथा हि दर्शनं तथा तेनैव प्रकारेण दर्शनं ज्ञानं भवति स्थूला बुद्धिर्नाहत्यैव ब्रह्मणि प्रविशेदिति । एतेन सर्वा मन्त्रोपासना व्याख्याताः । हि युक्तश्चायमर्थो लोके स्वतो यत्र प्रविशति तदुपायेन प्रविशतीति । न त्वदृष्टद्वारा । दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वात् । तस्मात्पादा ब्रह्मधर्माः ॥ १।१।२४ ॥

१५ **भूतादिपादव्यपदेशोपपत्तेश्चैवम् ॥ १।१।२५ ॥**

किंच । भूतादयोऽत्र पादा व्यपदिश्यन्ते । भूतपृथिवीशरीरहृदयानि चत्वारि । न चैतानि गायत्र्याः पादा भवितुमर्हन्ति । ब्रह्मपरिग्रहे तूपपद्यन्ते । यावन्मुख्यमुपपद्यते तावन्न गौणं कल्पनीयम् । अयमर्थः । पूर्वंहेतौ छन्दसोपि पादा व्यपदेशाद्भवन्ति तथापि ब्रह्मण एव युक्ता
२० इति । पुरुषसूक्ते—एतावानस्य (ऋ. सं. १०।९०।३) इत्यस्य ब्रह्मपरत्वात् । अस्मिन्वाक्ये तु गायत्र्याः पादा एव नोपदिष्टाः किन्तु ते ब्रह्मण एव पादा इति । तद्वाचकत्वेन गायत्र्यामुपचारेणोपसंहारः । चकारादर्था न शब्दस्य पादा भवन्ति किन्त्वर्थस्यैवेति । तस्माद्ब्रह्मवाक्यत्वे भूतादीनां पादत्वमुपपद्यते नान्यथेति । तस्मात्पादानां ब्रह्मधर्मत्वम् ॥ १।१।२५ ॥

२५ **उपदेशभेदान्नेति चेन्नोभयस्मिन्नप्यविरोधात् ॥ १।१।२६ ॥**

पादोऽस्य विश्वा भूतानि ( छां. ३।१२।६ ) सर्वाणि भूतात्मकः पादः । पादत्रयममृतं दिवीत्यर्थः ॥

**पादेषु सर्वभूतानि पुंसः स्थितिपदो विदुः ।**
**अमृतं क्षेममभयं त्रिमूर्ध्नोधायि मूर्धसु ॥ १५ ॥**

इत्यपरः । पुरुषसूक्तानुरोधे द्वितीय एवार्थः । प्रथमे तावत्—ननु दिवीति मन्त्रे सप्तम्या आधारत्वं प्रतिपाद्यते । अतः परमित्यत्र पञ्चम्या
५ अनाधारत्वमत उपदेशभेदात् पूर्वोक्तपरामर्शाभावाच्च ज्योतिषो ब्रह्मत्वमिति चेत् । नैष दोषः । उभयस्मिन्नप्यविरोधात् । मन्त्रे दिव्येवोक्तमस्मिन् वाक्ये सर्वत्रोच्यते । सर्वत्र विद्यमानस्य दिवि विद्यमानत्वं न विरुध्यते । अतः शब्देन न तत्राविद्यमानत्वम् । किन्तु ततोऽप्यन्यत्र सत्त्वं बोध्यते तस्मात् सप्तमीपञ्चमीनिर्देशो न विरुद्धः । द्वितीये तु—ननु मन्त्रेऽमृतपदमत्र
१० ज्योतिःपदमत उपदेशभेदादनुषंगश्च पादो हृदयम् । अतः शब्दाच्च सर्वस्माद्भेदः प्रतिपाद्यते । अत उपदेशभेदान्नैकवाक्यता । अस्मिंश्च वाक्ये चरणाभावात्स्वरूपासिद्धो हेतुरिति चेत् । नैष दोषः । उभयस्मिन्नपि ज्योतिःपदेऽमृतपदे च प्रयुज्यमान एकार्थत्वान्न विरोधः । पादत्रयमुपरितनलोकेषु चतुर्थः सर्वत्रेति । अन्यथा वैजात्यं पादानामापद्येत । परिच्छेदश्च विरो-
१५ धश्च । अतोऽमृतज्योतिःशब्दयोरेकार्थत्वेन विरोधाभावात् एकवाक्यत्वम् । अतोऽत्र चरणसद्भावात्तस्य च ब्रह्मधर्मत्वाज्ज्योतिर्ब्रह्मैव ॥ १।१।२६॥९॥

## १० अनुगमाधिकरणम् ।

### प्राणस्तथानुगमात् ॥ १।१।२७ ॥

अस्ति कौषीतकिब्राह्मणोपनिषदीन्द्रप्रतर्दनसंवादः । प्रतर्दनो ह वै
२० दैवोदासिः ( कौ. ब्रा. ३।१ ) इत्यादिना । एष लोकपाल एष लोकाधिपतिरेष लोकेशः स म आत्मेति विद्यात् स म आत्मेति विद्यात् ( कौ. ब्रा ३।८ ) इत्येतदन्तम् । तत्र वरदाने मामेव विजानीह्येतदेवाहं मनुष्याय हिततमं मन्ये इत्युपक्रम्य त्वाष्ट्रवधादिनात्मानं प्रशस्य स्वोपासनायाः पापाभावं फलत्वेन प्रतिपाद्य फलत्वमिति विवक्षायां—प्राणो वा
२५ अहमस्मि प्रज्ञात्मानं मामायुरमृतमित्युपास्स्व ( कौ. ब्रा. ३।२ ) इत्युक्त्वायुषः प्राणत्वमुपपाद्यामृतत्वं च प्राणस्योपपाद्य प्राणेन ह्येवास्मिंल्लोके-

मृतत्वमाप्नोति ( कौ. ब्रा. ३।२ ) इत्यमृतत्वं योगेन प्रतिपादयति । तत्र संदेहः । प्राणः किमासन्यो ब्रह्म वेति ।

अत एव प्राण इत्यत्र प्राणशब्दमात्रे संदेहः । अत्रार्थेपि संदेहः । बाधकं च वर्तत इति पृथगधिकरणारम्भः । तत्र साधकासाधारणधर्मस्या-
५ भावाद् बाधकानां विद्यमानत्वान्न ब्रह्मत्वमिति पूर्वपक्षः । सिद्धान्तस्तु चतुर्भिः सूत्रैः प्रतिपाद्यते । तत्र प्रथमं साधकधर्ममाह एकेन । त्रिभिर्बा-धकनिराकरणम् । प्राणः परमात्मा भवितुमर्हति । कुतः । तथानुगमात् । तथाहि । पौर्वापर्येण पर्यालोच्यमाने वाक्ये पदार्थानां समन्वयो ब्रह्म-प्रतिपादनपर उपलभ्यते । उपक्रमे तावद्वरं वृणीष्वेतीन्द्रः प्रतर्दनोक्तः
१० परमपुरुषार्थं वरमुपनिक्षेप । त्वमेव मे वृणीष्व यं त्वं मनुष्याय हिततमं मन्यसे ( कौ. ब्रा. ३।१ ) इति । तस्मै हिततमत्वेनोपदिश्यमानः प्राणः कथं परमात्मा न स्यात् । न हि परमात्मनोन्यद्धिततममस्ति । परमा-नन्दस्वरूपत्वात् । पापाभावश्च ब्रह्मविज्ञान एव । क्षीयन्ते चास्य कर्माणि तस्मिन् दृष्टे परावरे ( मुं. २।२।८ ) इति श्रुतेः । प्रज्ञात्मत्वं च तस्यैव
१५ संभवति । उपसंहारेप्यानन्दोजरोमृतः ( कौ. ब्रा. ३।९ ) इति । एष लोकाधिपतिः ( कौ. ब्रा. ३।९ ) इत्यादि च । तस्मात्सर्वत्रानुगमात्प्राणो ब्रह्म ॥ १।१।२७ ॥

## न वक्तुरात्मोपदेशादिति चेदध्यात्मसम्बन्धभूमा ह्यस्मिन् ॥ १।१।२८ ॥

२० बाधकमाह । यदुच्यते प्राणो ब्रह्मेति तन्न । कुतः । वक्तुरात्मोप-देशात् । वक्ता हीन्द्र आत्मानमुपदिशति । मामेव विजानीहीत्युपक्रम्य— प्राणो वा अहमस्मि प्रज्ञात्मानं मामायुरमृतमित्युपास्व (कौ. ब्रा. ३।२) इति । स एष प्राणो वक्त्रात्मत्वेनोपदिश्यमानः कथं ब्रह्म स्यात् । तथा च वाचो धेनुत्वोपासनवत् देवतायाः प्राणत्वेनोपासना बोध्यते । अन्ये
२५ च ब्रह्मधर्माः प्राणस्तावका इति । कथमस्य ब्रह्मोपाख्यानत्वमिति चेत् ।

24-25, M and S read प्राणत्वोपासना for प्राणत्वेनोपासना ।

न । अध्यात्मसंबन्धभूमा ह्यस्मिन् । अस्मिन्प्रकरणेऽध्यात्मसंबन्धः आत्मानमधिकृत्य यः संबन्धः । आत्मशब्दो ब्रह्मवाची वस्तुतो जीवस्य ब्रह्मत्वाय तथा वचः । तस्य संबन्धस्तद्धर्मास्तेषां बाहुल्यं प्रतीयत एष लोकपाल इत्यादि । यावदुपाकर्षनिर्धारे ब्रह्मप्रकरणत्वं सिध्यति तावद-
५ न्यप्रकरणत्वमयुक्तमिति हि शब्दार्थः । प्राणस्य प्रज्ञात्मत्वं स्वातन्त्र्येणायुर्दातृत्वम् । न वाचं विजिज्ञासीत, वक्तारं विद्यात् ( कौ. ब्रा. ३।८) इति चोपक्रम्य—तद्यथा रथस्यारेषु नेमिरर्पिता नाभावरा अर्पिता एवमेवैता भूतमात्राः प्रज्ञामात्रास्वर्पिताः प्रज्ञामात्राः प्राणेऽर्पिताः । स एष प्रज्ञात्मानन्दोऽजरोऽमृतो न साधुना कर्मणा ( कौ. ब्रा. ३।९ ) इत्यादिविषयेन्द्रिय-
१० व्यवहारैरनाभिभूतं प्रत्यगात्मानमेवोपसंहरति । स म आत्मेति विद्यात् ( कौ. ब्रा. ३।९ ) इति चोपसंहारः । तस्मादध्यात्मसंबन्धबाहुल्यात् ब्रह्मोपदेश एवायम् ॥ १।१।२८ ॥

तर्हि बाधकस्य का गतिरित्यत आह ।

**शास्त्रदृष्ट्या तूपदेशो वामदेववत् ॥ १।१।२९ ॥**

१५ पूर्वसूत्रेणापरिहृतमत्र परिहरति तुशब्दः । अयं दोषो व्यवहारदृष्ट्योपदेशे । अहं ब्रह्मेत्यार्षेण दर्शनेन तूपदेशः । ननु तत्त्वमसि (छां. ६।९।४) अयमात्मा ब्रह्म ( बृ० २।५।१९ ) इति वाक्येषु जीवस्य ब्रह्मत्वं बोध्यते । तत्र प्रत्यधिकारं शास्त्रप्रवृत्तिरिति न्यायेन स्वात्मन एव ब्रह्मत्वावगतिर्मुख्या न प्रतर्दनस्येन्द्रजीवब्रह्मत्वावगतिरुपासनं वा पुरुषा-
२० र्थाय । अतः शास्त्रदृष्टिरपि नैवंविधा । केवलस्य चैतन्यमात्रस्य तादृशो ब्रह्मण्यैक्यावगतिविरोधात् तत्त्वमस्यादिवाक्यार्थोऽध्यवसीयते । ननु ब्रह्मधर्मा जीवे वक्तुं शक्यन्त इत्याशङ्क्य परिहरति । वामदेववत् । तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च ( बृ. १।४।१० ) इति । य एवं प्रत्यबुध्यत स सर्वं भवति । तत्र सर्वेषां सर्वभावे सर्वा-

---

2-क om. आत्मानमधिकृत्य before यः ।
5-A and C read प्रज्ञानात्मत्वं for प्रज्ञात्मत्वम् ।
1-S and B read अवगतिविरोधात् for अवगतिविरोधात् ।

नन्त्यप्रसंगात्सर्वमेकमेवेति वक्तव्यम् । ततः कारणलय एव सर्वभाव इति—
मनुरभवं सूर्यश्च इत्यवयुत्यानुवादोनुपपन्नः । तत्र यथा ज्ञानावेशात्सर्व-
धर्मस्फूर्तिः एवमत्रापि ब्रह्मावेशादुपदेश इति त्वाष्ट्रवधादयो ब्रह्मधर्मा
एव तदावेशेन क्रियमाणत्वात् । नन्वेष वज्रस्तव शक्र तेजसा हरेर्दधी-
५ चेस्तपसा च तेजितः । तेनैव शत्रुं जहि विष्णुयन्त्रितः (भा. ६।११।२०)
इति वृत्रवचनं भागवते । तस्माद्युक्तं ब्रह्मधर्मवचनम् । ननु—स्वाप्ययसंप-
त्त्योरन्यतरापेक्षमाविष्कृतं हि ( ब्र. सू. ४—४—१६ ) इति सूत्रे सुषुप्तौ
ब्रह्मसंपत्तौ च ब्रह्मधर्माविर्भावो न त्वन्यदेति कथमेवमिति चेत् ।
मैवम् । उपदेशभावनादिष्वपि कदाचिदुत्तमाधिकारिविषये ब्रह्मप्राकट्य-
१० मित्यङ्गीकर्तव्यम् । मय्येव सकलं जातम्— इत्यादिवाक्यानुरोधात् ।
इहैव समवनीयन्ते प्राणाः । ब्रह्मैव सन् ब्रह्माप्येति ( बृ. ३।४।६ )
इत्यप्याविर्भावापेक्षं तस्य च प्राप्तत्वान्न सूत्रे फलत्वमाह । जीवन्मुक्ताना-
मपि परममुक्तेर्वक्तव्यत्वाच्च । असंप्रज्ञातसमाधाविवाविर्भावदशायामेव शरीर-
वियोगे वियोजकाभावाद् वागादिमात्रं लीयते । तस्य च प्राप्तत्वादेव नार्चि-
१५ रादिगतिः । तथापि प्रायिकत्वादेव न सूत्रगीतादिषु तद्वचनम् । सगुण-
निर्गुणभेदेन नियमवचनं त्वप्रामाणिकमेव । ब्रह्मवादे गुणानङ्गीकाराच्च ।
तस्माद्युक्तमुक्तं शास्त्रदृष्ट्या तूपदेश इति ॥ १।१।२९ ॥

## जीवमुख्यप्राणलिङ्गान्नेति चेन्नोपासात्रैविध्यादाश्रि-
## तत्वादिह तद्योगात् ॥ १।१।३० ॥

२० अन्यद्बाधकद्वयमाशङ्कते । ननु यद्यपि ब्रह्मधर्मा भूयांसः प्रकरणे
श्रूयन्ते । तद्वज्जीवधर्मा मुख्यप्राणधर्माश्च बाधकाः सन्ति । न वाचं विजि-
ज्ञासीत । वक्तारं विद्याद् ( कौ. ब्रा. ३।८ ) इत्यादि । अत्र हि वागा-
दिकरणाध्यक्षस्य जीवस्य विज्ञेयत्वमभिधीयते । अथ खलु प्राण एव

---

8—C and S read ब्रह्माविर्भावो for ब्रह्मधर्माविर्भावो ।
12—B om. च after तस्य and S reads and explains ( अनुग्रहमात्रा-
धीनत्वेन तादृशमर्यादामुक्तेः साधनासाध्यत्वेनानियतकालत्वात )
प्रदीपः—प्रायिकत्वात for प्राप्तत्वात ।

प्रज्ञात्मेदं शरीरं परिगृह्य ( कौ. ब्रा. ३।३ ) इति शरीरधारणं मुख्य-
प्राणधर्मः । मा मोहमापद्यथा अहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य
विधारयामि ( प्र. २।३ ) इति श्रवणात् । यो वै प्राणः सा प्रज्ञा या
प्रज्ञा स प्राणः ( कौ. ब्रा. ३।३ ) इति जीवमुख्यप्राणवाच्यत्वे प्रज्ञा-
५ प्राणयोः सहवृत्तित्वादुपचारो युज्यते । उत्क्रान्तिश्च । न तु सर्वथा विल-
क्षणस्य ब्रह्मणः । तस्माज्जीवमुख्यप्राणलिङ्गयोर्विद्यमानत्वान्न ब्रह्मप्रकरण-
मिति चेत् । न । उपासात्रैविध्यात् । अयमर्थः । किमत्र चोद्यते । जीव-
मुख्यप्राणलिङ्गाद्ब्रह्मधर्माणां जीवपरत्वम् १ । त्रयाणामपि स्वतन्त्रत्वं वा
२ । लिङ्गद्वयस्यापि ब्रह्मधर्मत्वमुच्यतामिति वा ३ । आद्यः पूर्वमेव परि-
१० हृतः । न हि ब्रह्मधर्मा अन्यपरत्वेन परिणेतुं शक्या इति ॥ द्वितीये
दूषणमाह । उपासात्रैविध्यात् । तथा सत्युपासनं त्रिविधं स्यात् । तद्वाक्य-
भेदप्रसंगान्न युक्तम् ॥ तृतीये तूपपत्तिरुच्यते । जीवधर्मा ब्रह्मणि न
विरुध्यन्ते । आश्रितत्वात् । जीवस्यापि ब्रह्माधारत्वात्तद्धर्मा अपि भगवदा-
श्रिता एव । इहेत्युभयत्र संबन्धो ब्रह्मवादे । मुख्यप्राणे तु तद्योगात् ।
१५ तेन योगस्तद्योगस्तस्मात् । प्राणधर्मा भगवति न विरुध्यन्ते । प्राणस्य
भगवत्संबन्धात्तद्धर्माणामपि भगवत्संबन्धात् ।

अथवा वक्तृत्वादयो न जीवधर्माः किन्तु ब्रह्मधर्मा एव । जीव
आश्रितत्वाद् भासन्ते । परात्तु तच्छ्रुतेः ( ब्र. सू. २।३।४१ ) इति
न्यायात् । प्राणेपि तथा । स्वाप्ययसंपत्त्योर्जीवस्य ब्रह्माश्रितत्वम् ।
२० आध्यात्मिकाधिदैविकरूपत्वान्न संयोगः । प्राणस्य तु संयोग एव । तस्मा-
त्सर्वे धर्मा ब्रह्मणि युज्यन्ते । सहोत्क्रमस्तु क्रियाज्ञानशक्त्योर्भगवदी-
ययोर्देहे सहैव स्थानं सहोत्क्रमणमिति भगवदधीनत्वं सर्वस्यापि बोध्यते।

ननु प्राणस्तथानुगमात् ( ब्र. सू. १।१।२७ ) इति प्राणशब्देन
ब्रह्मैव प्रतिपादितम् । तत्कथं धर्मयोरुत्क्रमणमिति चेत् । अत्र धर्मध-
२५ र्मिणोरेकत्वपृथक्त्वानिर्देशयोर्विद्यमानत्वात् । प्राणो वा अहमस्मि प्रज्ञात्मा

In C and S read परिमातुं for परिणेतुम् ।

( कौ. ब्रा. ३।२ ) इति । अत्र क्रियाज्ञानशक्तिमान्निर्दिष्टः । तदन्वेकैकस्य धर्मप्रशंसा । यो वै प्राणः सा प्रज्ञा या प्रज्ञा स प्राणः ( कौ. ब्रा. ३।४ ) इत्युपसंहारान्तम् । पुनस्तयोरेवोत्क्रमणप्रवेशाभ्यां—सह ह्येवास्मिन् शरीरे वसतः सहोत्क्रामतः ( कौ. ब्रा. ३।४ ) इत्युपक्रम्य सुषुप्तिमूर्च्छामरणेषु प्राणाधीनत्वं सर्वेषामिन्द्रियाणामुक्त्वासन्यव्यावृत्त्यर्थं प्रज्ञयैक्यं प्रतिपाद्योपसंहरति । पुनर्ज्ञानशक्तेरुत्कर्षं वक्तुम्—अथ खलु यथा प्रज्ञायाम् ( कौ. ब्रा. ३।३ ) इत्यारभ्य न हि प्रज्ञापेतोर्थः कश्चन सिध्येत् ( कौ. ब्रा. ३।३ ) इत्यन्तेन ज्ञानशक्त्युत्कर्षं प्रतिपाद्य धर्ममात्रत्वनिराकरणाय ज्ञानशक्तिमन्तं भगवन्तं निर्दिशति— न हि प्रज्ञातव्यमित्यारभ्य मन्तारं विद्यादित्यन्तेन । तदनु ज्ञानक्रियाशक्त्योर्विषयभूतभूतमात्रारूपजगता भगवदभेदं प्रतिपादयन्— स एष प्रज्ञात्मानन्दोजरोमृत इत्युपसंहरति ब्रह्मधर्मैः । अतः क्रियाज्ञानविषयरूपो भगवानेवेति प्रतिपाद्य न तावन्मात्रं ततोप्यधिक इत्येकोपासनैव विहिता । तस्माज्जडजीवरूपत्वात्सर्वात्मकं ब्रह्मैवेति महावाक्यार्थः सिद्धः ॥ १।१।३०॥१० ॥

॥ इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये प्रथमाध्यायस्य प्रथमः पादः ॥ १।१ ॥



# प्रथमाध्याये द्वितीयः पादः ।

## १ सर्वत्र प्रसिद्धोपदेशाधिकरणम् ।

### सर्वत्र प्रसिद्धोपदेशात् ॥ १।२।१ ॥

समन्वये प्रथमेध्याये सर्वेषां वेदान्तानां ब्रह्मणि समन्वयो वक्तव्यः । तत्रोद्गीथाद्युपासनावाक्यानां मुख्यवाक्येषु फलोपकार्यङ्गत्वम् । ब्रह्मवाक्यानां पुनर्निःसंदिग्धानां समन्वयः स्वतःसिद्धः । संदिग्धानि द्विवि-

१ अत्रोभयत्रापि स्थलयोः पाठभेदेनेदानींतनेषु सर्वपुस्तकेषु दर्शनम् । तत्र [illegible] श्रीपुरुषोत्तम[illegible] ।

पानि । शब्दतोर्थतश्च । तदर्थं चैतद्विचारितम् । ब्रह्मणि व्यवहारोस्ति कश्चिन्न वेति। तत्र प्रथमसूत्र एव व्यवहार: स्थापित:—यतो वाचो निवर्तन्ते ( तै. २।४ ) इत्यादीनां विशेषेणेद्यमित्थंतया निरूपणनिषेधनपरत्वम् । एवमेव कार्यसिद्धेः । अधीतानां ब्रह्मवाक्यानां चतुर्लक्षण्या ब्रह्म-
५ परत्वे सिद्धे श्रवणं सिध्यति । श्रुतस्य कालान्तरेप्यसंभावनाविपरीतभावनानिवृत्त्यर्थं पूर्वस्थितानामङ्गानामनपेक्षितानामुद्वापेनान्येषामपेक्षितानामावापेन तस्यैवार्थस्य निर्धारणे मननं भवति । ततोप्येवंध्यानादिसमाध्यन्तरूपनिदिध्यासनरूपमनसि सर्वतो निवृत्तव्यापारे स्वयमुपलब्धनिजसुखानुभवरूपं ब्रह्म । इदमेव ब्रह्मज्ञानमिति । अतस्तादृशस्यानुभवक-
१० वेद्यत्वायुक्तमुक्तविषयत्वं पाकभोजनतृप्तिवत् । अत: श्रवणाङ्गमीमांसायां माहात्म्यज्ञानफलायां भगवद्वाक्यानामन्यपरत्वेन्यवाक्यानां च भगवत्परत्वे दिव्यधर्मादिव्यधर्मव्यत्यासेन वैपरीत्यं फलमापद्येत । तदर्थं दिव्यधर्मनिर्धारो द्वितीयाधिकरणे विचारित: । वेदा एव वाचका अलौकिकमेव कर्मेति तत: पूर्णालौकिकत्वाय विधिनिषेधमुखेनाधिकरणद्वयं सम-
१५ न्वयेक्षातिरूपम् । तदनु प्रथमे पादे शाब्दसंदेहो निवारितो निश्चितार्थे । तत्रापि प्रथमं प्रत्ययसंदेहो निवारितो द्वयेन । प्रकृतिसंबन्धोप्यधिकरणत्रयेण । पुनरन्तिममधिकरणं संक्षेपनिराकरणाय । एवं प्रथमे पादे शब्दसंदेहो निवारित: ।

ये पुन: कश्चित्सगुणनिर्गुणभेदं प्रतिपादयन्ति ते स्वयमेव स्वस्य
२० ब्रह्मजिज्ञासानधिकारं बोधयन्ति । ब्रह्मवादे सांख्यानामिव गुणानामनङ्गीकारात् । भौतिकगुणानामसंबन्धार्थमेव द्यध्यायारम्भ: । अन्यथा सर्वस्यापि तत्कारणत्वेन तत्संबन्धस्य विद्यमानत्वात् । अन्यनिराकरणेन तत्प्रतिपादकत्वानिर्धारकाधिकरणानां वैयर्थ्यमेव ।

अर्थसंदेहनिराकरणार्थं द्वितीयाद्यारम्भ: । तत्रार्थो द्विविधो जीव-
२५ जडात्मक: प्रत्येकसमुदायाभ्यां त्रिविध: । तत्र प्रथमं जीवपुर:सरेण

---

17 ख reads संग्रह for संक्षेप ।
17–S reads वारणाय for निराकरणाय ।

संदेहा निर्णीयन्ते। इदमाम्नायते—सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत। अथ खलु क्रतुमयः पुरुषो यथाक्रतुरस्मिन् लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत (छां. ३।१४।१) मनोमयः प्राणशरीरः। छां. ( ३।१४।२ ) इत्यादि। तत्र वाक्योपक्रमे सर्वं खल्विदं ब्रह्म इति
५ सर्वस्य ब्रह्मत्वं प्रतिज्ञाय तज्जलान् इति सर्वविशेषणं हेतुत्वेनोक्त्वा तत्त्वेनोपासनमुक्तम्। न चायं शमविधिः। वाक्यार्थे लक्षणाप्रसंगात्। कारणत्वेन सामान्यत एव सिद्धत्वाच्च। अतः सर्वजगतो ब्रह्मत्वेनोपासनमुक्तम्। इदमेव पुराणादिषु विराट्त्वेनोपासनम्। अतः परमग्रिमवाक्यार्थे संदेहः। क्रतुं कुर्वीतेति। क्रतुर्धर्मो यज्ञ इति यावत्। तस्य
१० स्वरूपं मनोमयः प्राणशरीरः इति। उपासनाप्रकरणादुपासनैवैषा। तत्र मनोमय इति प्रमाणभूतो वेद उक्तः। प्राणशरीर इति कार्यकरणयोरभेदोपचारः। अग्रे सत्यसंकल्पादिधर्मवचनात्। किमयं विज्ञानमयो जीवो ब्रह्मत्वेनोपास्यः। उत ब्रह्मैवान्तर्यामी यः पुराणेषु सूक्ष्म उक्तः। तत्र पूर्ववाक्ये जडस्य जगतो ब्रह्मत्वेनोपासनस्योक्तत्वाज्जीवस्यापि ब्रह्मत्वेनो-
१५ पासनमेव युक्तं न त्वाहत्यैव ब्रह्मवाक्यं भवितुमर्हति। विज्ञानं ब्रह्म चेद्वेद। ( तै. २।५ ) इति शाखान्तरे स्पष्टत्वाच्च। तस्मात्कार्यकारणयोरभेदाज्जीव एव ब्रह्मत्वेनोपास्यः इत्येवं प्राप्त उच्यते।

सर्वत्र प्रसिद्धोपदेशात्। अथ खल्वित्यादि ब्रह्मवाक्यमेव। कुतः। सर्वत्र प्रसिद्धोपदेशात्। कुर्वीतेत्युपदेशो न तूपासना। तत्र परमशान्तस्य
२० सर्वस्य जगतो ब्रह्मत्वेनोपासनया शुद्धान्तःकरणस्य सर्ववेदान्तप्रसिद्धब्रह्मोपदेश एव युक्तो मननरूपो न तु क्वचित् सिद्धस्य जीवस्योपासना। शाखान्तरे त्वग्र आनन्दमयस्य वक्तव्यत्वात्तथा युक्तम्। न त्विह तथा। तस्मादानन्दरूपप्राणशरीररूपो वाक्यार्थः॥ १।२।१॥

---

6–A reads न चार्यं for न चायं।

17 S om. एवं after इति।

21–S reads प्रसिद्धस्य for सिद्धस्य।

ननु क्रतुमयः पुरुष इति यथासंकल्पमस्मिन्देहकथनाल्लोकान्तरभाविफलार्थमन्योपासनैव युक्ता । न तु ब्रह्मज्ञानस्य तादृशं फलमित्याशङ्क्य परिहरति

## विवक्षितगुणोपपत्तेश्च ॥ १।२।२ ॥

५ विवक्षिता लोकान्तरं तादृशरूपप्राप्तिः सा ब्रह्मण्येवोपपद्यते । भगवत्स्वरूपलाभात्सारूप्यलाभाद्वा । न च व्याप्तिरूपकल्पयमप्राप्त्युपायो युक्तः । सत्यसंकल्पादिवचनं च ब्रह्मवाक्यत्वपोषकमिति चकारार्थः ॥ १।२।२ ॥

नन्वेतावतापि नैकान्ततो ब्रह्मवाक्यत्वमुपपन्नमुभयत्रापि तुल्यत्वादित्याशङ्क्य परिहरति

१० 

## अनुपपत्तेस्तु न शारीरः ॥ १।२।३ ॥

न च प्राणशरीररूपो जीवो भवति तिरोहितानन्दत्वेन निराकारत्वात् । अभ्यासेन तथात्वे त्वनुपास्यत्वमेव । इदानीमेवोपासकस्यापि तथात्वात् । न च प्राणादेर्लौकिकत्वम् । उपदेशानर्थक्यप्रसंगात् । अत आनन्दरूपप्राणशरीररूपत्वाभावान्न वाक्यार्थो जीवः । पूर्वपक्षस्यात्रैव निवृ-
१५ त्तत्वात्तुशब्दः । विज्ञानमये तु प्राप्ताप्राप्तविवेकेन धर्मस्यैवोपासना ॥ १।२।३ ॥

ननु प्राप्स्यतादृशरूपफलाभिप्रायं भविष्यतीति परिहरति

## कर्मकर्तृव्यपदेशाच्च ॥ १।२।४ ॥

एतमितः प्रेत्याभिसंभवितास्मीति यस्य स्यादद्धा न विचिकित्सास्तीति ह स्माह शाण्डिल्यः ( छां. ३।१४।४ ) इत्ययं फलवाक्यम् । एतं
२० प्राणशरीररूपं कर्मत्वेन ध्येयत्वेन प्राप्यत्वेन च व्यपदिशति । कर्तृत्वेन च शारीरं व्यपदिशति । न च भजनीयरूपाकथने तादृशं फलं सिध्यतीति चकारार्थः । अधिकरणसंपूर्णत्वद्योतकश्च ॥ १।२।४ ॥ १ ॥

---

16 M reads फलयुक्त for फल ।

## २ शब्दविशेषाधिकरणम् ।

### शब्दविशेषात् ॥ १।२।५ ॥

इदमाम्नायते । यथा व्रीहिर्यवो वा श्यामाको वा श्यामाकतण्डुलो वैवमयमन्तरात्मन् पुरुषो हिरण्मयः ( श. ब्रा. १०।६।३।२ ) इति । ५ तत्र संदेहः । हिरण्मयः पुरुषः किं जीव उत ब्रह्मेति । उपक्रमबलीयस्त्वे जीव उपसंहारबलीयस्त्वे ब्रह्मेति । यत्रैकस्यान्यपरत्वे नैकार्थता संभवति तद्बलीयस्त्वमिति सिद्धं पूर्वतन्त्रे । तत्र चतुर्विधभूतानिरूपणार्थं जीवस्यैवाराग्रमात्रस्यान्तर्हृदये प्रतिपादकमिदं वचनं फलतो हिरण्मयत्वमिति न त्वेतादृशाभाससमानत्वं ब्रह्मणो युक्तमतो जीवप्रतिपादकमेवेदं वाक्यमिति १० प्राप्त उच्यते ।

शब्दविशेषात् । हिरण्मयः पुरुषो न जीवस्य फलमपि । तत्प्राप्तेरेव फलत्वात् । नाप्ययं नियमः—तस्यामेव मूर्तौ लय इति । अतः शब्देनैव विशेषस्योक्तत्वान्न हिरण्मयः पुरुषो जीवः ॥१।२।५॥

ननु हृदये विद्यमानत्वादभिमान्येव जीवो युक्त इति चेत्तत्राह

### १५ स्मृतेश्च ॥ १।२।६ ॥

ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ( भ. गी. १८।६१ ) इति । ननु सर्ववेदानां यन्निश्वासत्वं तस्य भगवतो वाक्यं कथं स्मृतिरिति उच्यते । तं त्वौपनिषदं पुरुषं पृच्छामि ( बृ. ३।९।२६ ) इति श्रुतेः केवलोपनिषद्वेद्यं ब्रह्म न प्रमाणान्तरवेद्यम् । ततश्चार्जुनस्य शिष्यरूपेण २० प्रपन्नस्य पूर्णभक्तत्वाभावाद्भगवद्वाक्ये निर्विचिकित्सविश्वासाभावाद् रथित्वेनैव स्थापितत्वान्न तादृशाय तादृशदेशकालयोरुपनिषदामवक्तव्याद् गुरुरूपतादृशरूपं निःश्वसितवेदोद्गमजनकं स्मृत्वा तदर्थमपि स्मृत्वा भगवान्पुरुषोत्तमो वाक्यान्युक्तवान् स्मृतिरूपाणि ।

ततो ब्रह्मविदां वाक्यमुदाहृत्य निरूप्यते । पुनश्च भगवांस्तद २५ धिकारिणं ब्रह्मविदां निरूप्य स्वकृपालुतया सर्वगुह्यतममित्यादिना भक्तिप्रपत्ती एवोक्तवान् । अतो द्वितीयेन पद्येन सर्वनिर्णया उक्ताः इत्यध्यवसेयम् ।

तथैवार्जुनविज्ञानात्—करिष्ये वचनं तव ( भ. गी. १८।७३ ) इति । चकारात्तन्मूलभूतनिःश्वासोऽप्युच्यते । व्यासस्यापि भगवज्ज्ञानांशत्वाद्-दोषः ॥ १।२।६ ॥

उपक्रमबलीयस्त्वमाशङ्क्य परिहरति

**अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेति चेन्न निचाय्यत्वादेवं व्योमवच्च ॥ १।२।७ ॥**

ननु व्यापकस्येश्वरस्य हृदयदेशस्थितिरयुक्ता व्रीह्यादिरूपत्वं च । अतोऽर्भकमल्पकमोको हृदयस्थानं यस्य तत्त्वाद् व्रीह्यादितुल्यत्वाच्च न परमात्मा वाक्यार्थ इति चेत् । न । निचाय्यत्वात् । पूर्वं प्रथमदूषणं परिहरति । हृदये ज्ञातुं शक्यत इति तदायतनत्वेन प्रतिपाद्यते निदिध्यासनानन्तरं हि साक्षात्कारस्तदन्तःकरण एवेति निचाय्यत्वम् । भक्तौ तु बहिरपीति विशेषः ॥ द्वितीयं परिहरति । एवं व्योमवत् । एवं व्रीह्यादितुल्यतया यत्प्रतिपादनं चतुर्विधभूतान्तरत्वख्यापनाय यथा चत्वार उपरवाः प्रादेशमात्रा इति तथा तद्धृदयाकाशो प्रकृतस्य सच्चिदानन्दस्वरूपसर्वतःपाणिपादान्तस्य तत्स्वरूपमिति । पूर्वपक्षसिद्धान्तयोश्चकारद्वयमेतादृशवाक्यान्तरे पूर्वपक्षसिद्धान्तयोराधिक्योपपत्तिसमुच्चयार्थं तेनात एव प्राण इतिवदधिकरणान्तरमपि सूचितमिति ॥ १।२।७ ॥

बाधकमाशङ्क्य परिहरति

**संभोगप्राप्तिरिति चेन्न वैशेष्यात् ॥ १।२।८ ॥**

यदि सर्वेषां हृदये भगवान् जीववत्तिष्ठेत्तदा जीवस्येव तस्यापि सुखदुःखसाक्षात्कारस्तत्साधनादिपरिग्रहश्च प्राप्नोतीति चेत् । न । वैशेष्यात् । विशेषस्य भावो वैशेष्यं तस्मात् । सर्वरूपत्वमानन्दरूपत्वं स्वकर्तृत्वं विशेषस्तद्भावो ब्रह्मणि वर्तते न जीव इति जीवस्यैव भोगो न ब्रह्मण इति वैशेष्यपदादयमर्थः सूचितः । अपेक्षित एव भोगो नान-

5—क om. अल्पकं before ओकः ।
10—क om. from हृदये to तदन्तःकरण एवेति before निचाय्यत्वम् ।

पेक्षित इति । न तु तस्य भोगाभाव एव । अग्रिमाधिकरणविरोधात् । यथेन्द्रियाद्यधिष्ठातृदेवतानाम् । तत्त्वमस्यादिवाक्येन जीवस्यापि तथात्वे तस्यापि तद्वदेव भविष्यति ॥ १।२।८॥२ ॥

---

## ३ अत्ता चराचराधिकरणम् ।

५ **अत्ता चराचरग्रहणात् ॥ १।२।९ ॥**

कठवल्लीषु पठ्यते । यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ।( कठ. १।२।२५ ) इति। अत्र वाक्ये ब्रह्मक्षत्रयोरोदनत्वं वदन् यच्छब्दार्थस्य भोक्तृत्वमाह । तत्र संशयः । किं जीवो ब्रह्म वेति । सच्चिदानन्दरूपत्वं सर्वोपास्यत्वं पूर्वाधि-१० करणद्वयेन सिद्धम् । सर्वभोक्तृत्वं साधयति । ब्रह्मक्षत्रयोरशक्यवधयोः सर्वमारकस्य च मृत्योर्भक्षयिता जीवो न भवत्येवेति कथं संदेह इति चेत् । उच्यते । ओदनोपसेचनरूपकत्त्वाज्जीवधर्मत्वं स्थानाज्ञानाच्च । न हि सर्वगतस्य स्वहृदयेपि प्रतिभासमानस्य क इत्था वेद यत्र स इत्य ज्ञानमुपपद्येत । अलौकिकसामर्थ्याच्च संदेहः । तत्र निषिद्धत्वाल्लौकिक-१५ भोजनवन्निरूप्यमाणत्वात् स्थानाज्ञानाच्च कश्चिदुपासनोपचिताल्लौकिक-सामर्थ्यो महादेवादिरत्ता भविष्यति । नतु तद्विरुद्धधर्मा भगवान् भवि-तुमर्हत्यक्लिष्टकर्मत्वादिधर्मवान् । तस्माज्जीव एवोपासनोपचितमहाप्रभावो वाक्यार्थ इत्येवं प्राप्तेभिधीयते ।

अत्ता चराचरग्रहणात् । अत्ता भगवानेव । कुतः । चराचरग्रह-२० णात् । चरं सर्वप्राणिवधार्थं परिभ्रमन्मृत्युः । अचरं ब्रह्मक्षत्ररूपं कस्या-प्यचाल्यं तयोरत्ता न जीवो भवितुमर्हति । यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनादिति न्यायात् । अस्मदादिप्रतिपत्त्यर्थं तु लौकिकवद्व-चनं भोक्तृत्वाय । प्रलयकर्तृत्वाच्चायुक्तत्वम् । सर्वत्र विद्यमानस्याप्यज्ञाय-मानत्वात् फलतः स्थानाज्ञानमुक्तम् । ब्रह्मक्षत्रयोरपि मोक्षापेक्षित्वात्

---

14–B and S read उपपद्यते for उपपद्येत ।

24–C and S read मोक्षापेक्षितत्वात् for मोक्षापेक्षित्वात् । वि. म. मोक्षा-पेक्षत्वात् ।

मृत्युसंबन्धमात्रेण भगवति भोक्तरि पंचगार्थं योग्यरूपमेवौदनत्वं प्राणानां तत्रैव समवलयान्मृत्युरपि तत्रैव लीनोऽपि जन्ममरणाद्यभावाय भगवत्येव प्रविशति । तस्मादस्मिन् वाक्ये ब्रह्मक्षत्रमृत्यूनां भोग्यत्वेन ग्रहणादत्ता भगवानेवेति सिद्धम् ॥ १।२।९ ॥

५ ननु किमित्येवं प्रतिपाद्यते । पूर्वपक्षन्यायेन यमोऽन्यो वा मृत्युं साधनीकृत्य स्ववशे सर्वं करोतीति जीववाक्यमेव किं न स्यादित्यत आह ।

## प्रकरणाच्च ॥ १।२।१० ॥

प्रकरणं हीदं ब्रह्मणः—न जायते ( कठ. १।२।१८ ) इत्यारभ्य-
१० आसीनो दूरं व्रजति ( कठ. १।२।२० ) इत्यादिना माहात्म्यं वदन्नन्ते—यस्य च ब्रह्म क्षत्रं च—इत्याह । अतः प्रकरणानुरोधात् पूर्वोक्तप्रकारेण ब्रह्मवाक्यत्वमिति । अन्यथा प्रकृतहानाप्रकृतकल्पने स्यातामिति चकारार्थः ॥ १।२।१० ॥ ३ ॥

---

## ४ गुहां प्रविष्टावित्यधिकरणम् ।

१५ ## गुहां प्रविष्टावात्मानौ हि तद्दर्शनात् ॥ १।२।११ ॥

तस्यैवाग्रे पठ्यते । ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे । छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः ( कठ. १।३।१ ) इति । किमिदं ब्रह्मवाक्यमाहोस्विदन्यवाक्यमिति । अस्य वाक्यस्योत्तरशेषत्वे जीवप्रकरणपतितत्वान्न ब्रह्मवाक्यत्वम् । पूर्व-
२० शेषत्वे तु ब्रह्मवाक्यमिति हि प्रकरणनिर्णयः । अन्यथा पाठादेव संदेहः । अर्थविचारे तु द्विवचननिर्देशात्पूर्वशेषत्वे बद्धमुक्तजीवौ भविष्यतः । उत्तरशेषत्वे त्विन्द्रियमनसी । उभयथापि न ब्रह्मवाक्यम् । द्वयोर्मुख्यत्वेन प्रतिपादनात् । ब्रह्मवाक्यत्वेऽपि न प्रयोजनसिद्धिः । अथ मन्यते उपनिषत्पाठादन्यत्रानिर्धाराज्जीवब्रह्मपरत्वेऽपि तयोरभेदात् ब्रह्मपरत्वेन वाक्यस्य

---

11–C and S om. यस्य after अन्ते ।

युक्तेति । तथापि कस्य निर्णायकत्वं प्रकरणस्यार्थस्य वेति । उभयोरपि संदिग्धत्वादयुक्तो विचार इति चेत् । उच्यते ।

**संदेहवारकं शास्त्रं पदशक्त्या तु निर्णयः ।**
**जीवादुत्कर्षशब्देन द्वयोर्वाक्येपि न क्षतिः ॥ १६ ॥**

५ गुहातपशब्दाभ्यामित्यर्थः । ऋतं पिबन्तावित्यत्रैवं संशयः । किं जीवद्वयं निरूपयत्याहोस्विज्जीवब्रह्मणी वेति । तत्र ब्रह्मप्रकरणस्य सामान्यत्वात् यस्त्वविज्ञानवान् भवतीत्यग्रे विद्वदविद्वतोर्वक्तव्यत्वात् तदर्थमुभयोः प्रथमनिर्देश उचितः । मन्त्रेपि ऋतं स्वर्गापवर्गलक्षणं सुखम् । मार्गद्वयस्यापि विहितत्वात्सुकृतलोकत्वम् । गुहा तत्त्वविचारो १० हृदयं वा । जात्यपेक्षया त्वेकवचनम् । परमपरार्धं सत्यलोकः । तत्रोभयोर्भोगात् । अविद्यया पिहितप्रकाशत्वादविदुषश्छायात्वम् । ब्रह्मज्ञानेनातिप्रकाशत्वादातपत्वं विदुषः । अत एव विदुषः स्वरूपं ब्रह्मविदो वदन्ति । पञ्चाग्नयस्त्रिणाचिकेताश्चेतरम् । इन्द्रियमनसोस्त्व-चेतनत्वान्न वाक्यार्थसंगतिः । वाक्यार्थयोगे हि विशेषणनिर्णयः । १५ तस्माद्बद्धमुक्तजीवपरतयोपपन्नत्वात्तत्प्रकरणपाठान्न ब्रह्मवाक्यमिति एवं प्राप्त उच्यते ।

गुहां प्रविष्टावात्मानौ । गुहा हृदयाकाशः । तत्र सकृदेकस्मि-न्प्रविष्टौ जीवपरमात्मानावेव । अनेन जीवेनात्मनानुप्रविश्येत्युभयोः प्रवेश-श्रवणात् । न ह्येकस्मिन् हृदयाकाशे जीवद्वयं प्रवेष्टुमर्हति । अर्थस्त्वेवं २० संभवति । पूर्वाधिकरणे यथाभिलषितभोगो भगवति साधितः । प्रका-रान्तरेणापि ऋतं सत्यं परं ब्रह्मेति ऋतसत्ययोर्ब्रह्मत्वप्रतिपादनात् स्वरूपा-मृतपानार्थं । सुकृतमपि ब्रह्मैव तस्मात्तत्सुकृतमुच्यते ( तै. २।७ ) इति श्रुतेः । स एव लोक उपचारात् षष्ठी । अक्षरं वा परमपरार्द्धोपरि तत्र-स्थानां परिदृश्यमानत्वात् । छायाप्रतिसारूप्यं सायुज्यं गतस्य जीवस्यापि

1–A reads चेति for वेति ।
7–S reads विद्वदविदुषोः for विद्वदविद्वतोः ।
8–A and B read प्रथमं for प्रथम ।

तथात्वाज्ञतोपि विशिष्टं ब्रह्म प्रकृतानन्दत्वात् आतपः परोक्षवादः । काण्डत्रयेपि तद्वाद इति प्रयाणां ग्रहणम् । अतो युक्त एवायमिति हि-शब्दार्थः । नन्वप्रकृतत्वात् कथमेवमिति तत्राह । तद्दर्शनात् । तयोर्दर्शनं तद्दर्शनं तस्मात् । जीवब्रह्मणोः प्रतिपादनीयत्वात्—येयं प्रेते विचि-
५ कित्सा मनुष्ये अस्तीत्येके नायमस्तीति चैके । एतद्विद्यामनुशिष्टस्त्वयाहम् ( कठ. १।१।२० ) इति जीवः पृष्टः । अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद ( कठ. १।२। १४ ) इति ब्रह्मापि पृष्टम् । तत्र ब्रह्म निरूप्य जीवं निरूपयन्नुभयोस्तुल्यत्वेन महाभोगं निरूपयन् फलार्थं भक्त्य स्वरूपं कीर्तयति । अतो
१० ब्रह्मवाक्यमेवेति सिद्धम् ॥ १।२।११ ॥

## विशेषणाच्च ॥ १।२।१२ ॥

विशेषणानि पूर्वोक्तानि जीवब्रह्मणोरेव संगतानि । अग्रिमं वा आत्मानं रथिनं विद्धि ( कठ. १।३।३ ) सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ( कठ. १।३।९ ) इति । जीवप्राप्यं ब्रह्माह । अत उभयोरेव सर्व-
१५ व्यावृत्त्या कथनादग्रिमग्रन्थपर्यालोचनयापीदं ब्रह्मवाक्यमेव । द्वा सुपर्णेति निःसंदिग्धम् । चकारः प्रकरणोक्तसर्वोपपत्तिसमुच्चयार्थः ॥ १।२।१२ ॥४॥

---

## ५ अन्तर उपपत्तेरित्यधिकरणम् ।

## अन्तर उपपत्तेः ॥ १।२।१३ ॥

य एषोऽक्षिणि पुरुषो दृश्यते । एष आत्मेति होवाचैतदमृतमभय-
२० मेतद्ब्रह्म इति । तद्यद्यप्यस्मिन्सर्पिर्वोदकं वा सिञ्चति वर्त्मनी एव गच्छति ( छां. ४।१५।१ ) इत्यादि श्रूयते । तत्र संशयः । प्रतिबिम्बपुरुषस्य ब्रह्मत्वेनोपासनापरमिदं वाक्यं ब्रह्मवाक्यमेवेति वा । विरुद्धार्थवाचकत्वात्संदेहः । तत्र दृश्यत इति वचनात्प्रतिबिम्ब एवायं ब्रह्मप्रकरणस्य च समाप्तत्वादेषा तेस्मद्विद्या आत्मविद्या चेत्युपसंहारदर्शनात् तत्सिध्यर्थ-

12-C, S and वि. मु. read अग्रिमं वाक्यम for अग्रिमं वा ।

मुपासनापरतैव वाक्यस्य युक्ता । अविरोधे हि ब्रह्मपरता । उपास्यत्वेन ब्रह्मधर्माणामन्वयो भविष्यतीत्येवं प्राप्त उच्यते ।

अन्तरोक्षिमध्ये दृश्यत इत्युक्तः परमात्मैव । कुतः उपपत्तेः । उपपद्यते हि तस्य दर्शनमार्षम् । सर्वत्र ब्रह्म पश्यन् बहिः संनिधाने तस्य ५ स्थानस्योत्कृष्टत्वात्तत्र भगवन्तमुपदिशति—लोकं वाव तेवोचन्नहं तु तद्व- क्ष्यामि ( छां. ४।१४।३ ) इति महदुपक्रमाच्च । प्रतिबिम्बमात्रस्य च न पुरुषत्वनियमः । तस्माद्विरोधाभावाद्ब्रह्मवाक्यमेव ॥ १।२।१३ ॥

## स्थानादिव्यपदेशाच्च ॥ १।२।१४ ॥

एतं संयद्वाम इत्याचक्षते । एतं हि सर्वाणि वामान्यभिसंयन्ति । १० एष उ एव वामनीरेष हि सर्वाणि वामानि नयति । एष उ एव भामनीरेष हि सर्वेषु लोकेषु भाति ( छां. ४।१५।४ ) इति । वामानि कर्मफलानि । तेषामेव मनोहरत्वेन तदर्थं कर्मकरणात् । कर्मफललयः कर्मफलदानं च यतः । इति स्वर्गापवर्गफलदातृत्वमुक्तम् । सर्वलोकेषु भानं च । एष इति तमेवाक्षिपुरुषं निर्दिश्य स्थानादि व्यपदिश्यते । न हि प्रतिबिम्बात्मनः १५ स्थानादिव्यपदेशः संभवति । चकारादेतत्तुल्यवाक्यस्याप्ययमेवार्थः । इन्द्रविरोचनप्रजापतिसंवादे—अथ योयं भगवोप्सु परिख्यायते (छां.८।७।४) इत्यासुरम् । न तु—य एषोक्षिणि पुरुषो दृश्यते ( छां. ४।१५।१ ) इत्यादि । तस्मादक्षिपुरुषो ब्रह्मैव ॥ १।२।१४ ॥

## सुखविशिष्टाभिधानादेव च ॥ १।२।१५ ॥

२० ननु किमिति निर्बन्धेन ब्रह्मवाक्यत्वं संपाद्यते । उपासनापरत्वे को दोष इत्याशङ्क्याह ।

सुखविशिष्टाभिधानात् । एतदमृतमभयमेतद् ब्रह्म ( छां. ४।१५।१ ) इति यद्यत्रोपासना विधीयेत—एष आत्मा ( छां. ८।३।४ ) इति तदामृता- दिवचनं व्यर्थं स्यात् । तद्धर्माणां पूर्वमेव प्राप्तत्वात् । तस्मादमृतमानन्दः । २५ अभयं चिद् ब्रह्म सत् सच्चिदानन्दरूप आत्मेत्युक्तं भवति । अत एष इत्यक्षिपुरुषं निर्दिश्य सुखविशिष्टमभिधीयते । सच्चितोर्न ब्रह्मख्यापकत्व-

मिति सुखमेव निर्दिष्टम् । अतः सुखविशिष्टाभिधानादेव ब्रह्मवाक्यमिति । एषा मुख्योपपत्तिरित्येवकारः । चकारात् सर्वादिभिरपि तस्मात् ब्रह्मैवाक्षिपुरुषः ॥ १।२।१५ ॥

## श्रुतोपनिषत्कगत्यभिधानाच्च ॥ १।२।१६ ॥

स्वरूपतो निर्णीय फलतो निर्णयमाह । श्रुतोपनिषत्कस्य श्रुतोपनिषद्विद्या येन तस्य प्रविदः । या गतिर्देवयानाख्या साक्षिपुरुषविदोऽप्युच्यते । अथ यदु चैवास्मिन् शव्यं कर्म कुर्वन्ति यदि च नार्चिषमेवाभियन्ति इत्युपक्रम्य चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयति । एष देवपथो ब्रह्मपथः ( छां. ४।१५।५ ) इत्येतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते ( छां. ४।१५।५ ) इति ब्रह्मविदोऽप्ययमेव मार्गः पुनरावृत्तिरहितः । चकारस्तर्कसमुच्चयेनाधिकरणपूर्णत्वबोधकः ॥ १।२।१६ ॥

## अनवस्थितेरसम्भवाच्च नेतरः ॥ १।२।१७ ॥

इदमेवाधिकरणं पुनर्निषेधमुखेन विचारयति । ननूपासनापरत्वेऽपि सर्वमुपपद्यते । तद्धर्मव्यपदेशेनैवोपासनोपपत्तेः । अतः सर्वा उपपत्तयो व्यपदेशिवद्भावेन संगच्छन्त इत्येवं प्राप्त उच्यते ।

इतरो नात्र वाक्यार्थः । अनवस्थितेरस्थिरत्वात् । उपदेशकवाक्यत्वादुपदेष्टुरेव चक्षुर्गतं भवेत् । तथा च वक्तृदर्शनाभावादनाप्तत्वं द्रष्टुरपगमे चापगच्छति सद्वितीये सद्वितीयः । उपासनाकाले च सुतरामनवस्थितिः । सद्वितीयोपासनायामपि श्रवणमननयोर्भिन्नविषयत्वादनवस्थितिः । वक्तुरेव नियमे गुरोर्निबन्धेन सुतरामनवस्थितिः ।

किं च । मनसा ह्युपासनं कर्तव्यं तत्र चासम्भव एव । तादृशधर्मवत्त्वं च न संभवति । आसुरत्वं च मर्यादेति चकारार्थः । तस्मादक्षिस्थाने सहज एव यो भगवानस्ति तत्परमेवैतद्वाक्यमिति सिद्धम् । व्यापकसर्वगतस्य सर्वतःपाणिपादान्तत्वादानन्दमूर्तिर्भगवानेव ब्रह्मवादे त्वेषैव मर्यादा । सगुणवादो ब्रह्मवादाज्ञानादिति ॥ १।२।१७।५ ॥

## ६ अन्तर्याम्यधिकरणम् ।

### अन्तर्याम्यधिदैवादिषु तद्धर्मव्यपदेशात् ॥ १।२।१८ ॥

य इमं च लोकं परं च लोकं सर्वाणि च भूतान्यन्तरो यमयति ( बृ. ३।७।१ ) इत्युपक्रम्य श्रूयते । यः पृथिव्यां तिष्ठन् पृथिव्या अन्तरो यं पृथिवी ५ न वेद यस्य पृथिवी शरीरं यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः ( बृ. ३।७।२ ) इत्यादि । तत्राधिदैवमधिलोकमधिवेदमाधियज्ञमाधिभूतमध्यात्मं च कश्चिदन्तरवस्थितो यमयितान्तर्यामीति श्रूयते । तत्र संशयः । किमन्तर्याम्यधिदैवादिषु सर्वत्रैक एव । अथाधिदैवादीनां नामभेदाद् भिद्यत इति । सामान्यतस्तु-अन्तस्तद्धर्मोपदेशात् (ब्र. सू. १।१।२०) १० इति न्यायेनात्रापि ब्रह्मत्वं सिद्धमेव । तथा शब्दभेदात्संदिह्यते । अधिदैवादिषड्भेदा आधारधर्मा भगवत्युपचर्यन्ते । अथवा संज्ञाविशिष्टा अन्य एवेति तत्र तत्तदधिकृत्य यो वर्ततेऽभिमानेन तस्य तादृशशब्दप्रयोगः । अधिलोकादयश्च शाखान्तरेऽन्यत्रैव प्रसिद्धा योगरूयापकाः । पञ्चस्वधिकरणेषु । अधिलोकमधिज्यौतिषमित्यादि । अतोऽधिदैविकादिशब्दा यौगि-१५ काः सन्तो न भगवति वर्तितुमुत्सहन्ते । नाप्यन्ये कल्पनीया यद्धर्मा उपचाराद्भगवति भवेयुः । कल्प्यमानस्य सर्वानुस्यूतस्य तादृशस्य भगवद्व्यतिरिक्तस्यासंभवात् । तस्मादन्तर्यामिब्राह्मणं कुत्राप्ययुक्तं सत् तत्तदभिमानिदेवतास्तुतिपरमेव तत्तदुपासनार्थं भविष्यति । अज्ञानं चासंदेहे संदेहवदुपपद्यते । देहासवोक्षा ( भा. ६।४।२५ ) इति न्यायाद्वा । न २० तु निषिद्धसंज्ञा भगवति कल्पयितुं शक्येति । एवं प्राप्त उच्यते ।

अन्तर्याम्यधिदैवादिषु । अन्तर्याम्यधिदैवादिषु भगवानेव नान्यस्तादृशो भवितुमर्हति । ननु नोक्तं भगवति कथं निषिद्धकल्पनमिति । तत्राह । तद्धर्मव्यपदेशात् । तेषां धर्मास्तद्धर्माः तत्प्रयुक्तिबोधकाः । ते

8 B om. नाम after °देवादीनां ।

8 बि. मु. reads अधिदेवादिनाम for अधिदेवादीनां नाम ।

21 S reads अधिदेवादिष्वन्तर्यामी for अन्तर्याम्यधिदेवादिषु ।

विशेषेण भगवत्यपदिश्यन्ते । सर्वेषां तत्तत्कार्यसामर्थ्यं च भगवतो न तु स्वतस्तेषामिति । एवं सत्यन्यत्सर्वं संगतं भवति तस्माद् ब्रह्मवाक्यमेव । अन्यथा त्वधिकरणरचना अन्तस्तद्धर्माधिकरणेन गतार्थत्वाद्व्यर्थैव ।।१।२।१८ ॥

## न च स्मार्तमतद्धर्माभिलापात् ॥ १।२।१९ ॥

ननु ब्रह्मवादेन्तर्यामी न प्रसिद्धः । जीवब्रह्मजडानामेव प्रसिद्धत्वात् । अतोन्तर्यामिणः सांख्यपरिकल्पितस्य गुणयोगात्ताहशस्य ब्रह्मत्वे वा कः पुरुषार्थो भवेत् । नहीश्वरं प्रकृतिधर्मारूढमन्तर्यामिणं मन्यन्ते ताहशस्योपनिषत्स्वभावात्पूर्वपक्षन्यायेन श्रुतिपरता तन्मतस्य चाश्रौतत्व-
१० मित्याशङ्क्य परिहरति ।

न च स्मार्तं स्मृतिप्रसिद्धं स्मार्तं सांख्यमतसिद्धमिति यावत् । ताहशमन्तर्यामिरूपमत्र भवितुं नार्हति । कुतः । अतद्धर्माभिलापात् । तद्धर्माणामनभिलापात् । तद्विरुद्धधर्माणां चाभिलापात् । न ह्यत्र सत्त्वरजस्तमोगुणास्तत्कार्यं वाभिलप्यते तद्विरुद्धाश्चैते धर्मा यस्य पृथिवी
१५ शरीरमित्यादि । तस्मात्सांख्यपरिकल्पितं नान्तर्यामिरूपमत्र भवितुमर्हतीति सिद्धम् । एवं सति ब्रह्मधर्मा एवैते भवन्तीति ब्रह्मवादः फलिष्यति ॥ १।२।१९ ॥

## शारीरश्चोभयेपि हि भेदेनैनमधीयते ॥ १।२।२० ॥

ननूक्तन्यायेन शारीर एव भवतु को दोषः किमिति ब्रह्मपरत्वं
२० कल्प्यमिति । तत्राह ।

शारीरश्च नेत्यनुवर्तते । शारीरश्च जीवो नान्तर्यामिब्राह्मणे तत्तदभिमानिरूपो यस्य पृथिवी शरीरमिति वाक्यानुरोधेन भवितुमर्हति ततोपि भिन्नतयान्तर्यामिणो वचनात् । उभयेपि काण्वमाध्यन्दिनब्राह्मण-

---

1–S reads भगवत्यपि दृश्यन्ते ( and explains अभिमानिष्विव भगवति अपि भासन्त इत्यर्थः ) for भगवत्यपदिश्यन्ते and हि. पु. reads भगवत्युपदिश्यन्ते for the same.

द्वयेपि एनं जीवं भेदेनैवाधीयते ब्राह्मणाः । निःसंदेहार्थमुभयग्रहणम् । यो विज्ञाने तिष्ठन्निति काण्वाः । य आत्मनि तिष्ठन्निति माध्यन्दिनाः । न चात्मशब्देनान्यः संभवति । अन्येषां पूर्वमेव पठितत्वादन्ते हि जीवमाह । तस्मादन्तर्यामिब्राह्मणे ब्रह्मैव वाक्यार्थ इति सिद्धम् ॥ १।२।२० ॥ ६ ॥

---

५

## ७ अदृश्यत्वाधिकरणम् ।

### अदृश्यत्वादिगुणको धर्मोक्तेः ॥ १।२।२१ ॥

मुण्डके हि श्रूयते । कस्मिन्नु भगवो विज्ञाते ( मुं. १।१।३ ) इति पृष्टे—द्वे विद्ये वेदितव्ये ( मुं. १।१।४ ) इत्युत्तरमाह ।

तत्र नामरूपात्मकजगतो विज्ञानार्थं नामांशे वेदादिरूपांशे परा १० च । तत्र वेदादिविद्यायां न संदेहः । परायां संदिह्यते किमेषा सांख्य-मतविद्या ब्रह्मविद्या वेति । सांख्यधर्माभिलापात्संदेहः । अथ परा यया तदक्षरमधिगम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णमचक्षुश्श्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययम् । यद्भूतयोनिं परिपश्यन्ति धीराः ( मुं. १।१।५-६ ) इत्यादि । अग्रे च दिव्यो ह्यमूर्तः पुरुषः सबाह्या-१५ भ्यन्तरो ह्यजः । अप्राणो ह्यमनाः शुभ्रो ह्यक्षरात्परतः परः ( मुं. २।१।२ ) इत्युक्त्वा—एतस्माज्जायते ( मुं. २।१।३ ) इति निरूप्य—अग्निर्मूर्धा चक्षुषी चन्द्रसूर्यौ ( मुं. २।१।४ ) इत्यादिना रूपमुक्त्वा पुनः पुरुषात्सृष्टिमाह । तत्रैकप्रकरणत्वादेकवाक्यता वक्तव्या । तत्राक्षरपुरुषयोर्भेदः प्रतीयते । तयो-रुभयोरपि सृष्टिः । तद् ब्रह्मवादे न संगच्छते । तस्मात्सांख्यमतमेवैतत् । २० प्रकृतिपुरुषयोः श्लिष्टत्वादन्यतरप्राधान्येनोभयोः स्रष्टृत्वम् । उभयात्मकत्वा-ज्जगतः । रूपमपि समष्टिव्यष्टीनामग्रे ह्युत्पत्तिरिति तिरोहितरूपत्वान्न ब्रह्मविद्या किंतु स्मृतिरेवेति ब्रह्मविद्या वेदाविद्योपचाराद्वेति । एवं प्राप्त उच्यते ।

अदृश्यत्वादिगुणकः परमात्मैव ब्रह्मविज्ञानेनैव सर्वविज्ञानात् । २५ तत एव विद्याया अपि परत्वम् । अक्षरस्यापि ब्रह्मत्वम् । पुरुषस्यापि तयोः परापरभावो भेदश्च । एतादृश एव हि ब्रह्मवादः । तत्र प्रथममक्षरस्य

ब्रह्मत्वमाह । अदृश्यत्वादिगुणकः परमात्मैव । कुतः । धर्मोक्तेः । तथाक्षरात्संभवतीह विश्वम् ( मुं. १।१।७ ) इति । इयं चोपनिषत् । न ह्यन्यत्र ब्रह्मव्यतिरिक्ताज्जगदुत्पत्तिरस्ति । पुरुषस्य ब्रह्मत्वं निःसंदिग्धमेव । ईषदानन्दतिरोभावेन ब्रह्माक्षरमुच्यते । प्रकटानन्दः पुरुष इति । ब्रह्मविदाप्नोति
५ परम् ( तै. २।१ ) इत्यत्रैव तथा निर्णयात् । तस्माददृश्यत्वादिगुणकः परमात्मैव ॥ १।२।२१ ॥

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ १।२।२२ ॥

ननु पूर्वपक्षन्यायेन ब्रह्मविद्याख्यायामपि स्मृतिः ब्रह्मविद्यैवास्तु । द्वे ब्रह्मणी वेदितव्ये मूर्तं चामूर्तं च ( मै. ६।२२ ) इत्यत्र विकारस्यैव
१० ब्रह्मपदवाच्यत्वम् । अतः प्रकृतिपुरुषावेव वाक्यार्थ इति परिहरति ।

इतरौ न भवतो वाक्यार्थरूपौ । कुतः । विशेषणभेदव्यपदेशाभ्याम् । विशेषणभेदो व्यपदेशश्च ताभ्यामदृश्यत्वादयो गुणा न प्रकृतेर्भवन्ति सर्वस्यापि तद्विकारत्वात् । न हि चरदर्शनेन मृत्त दृश्यत इति वदितुं युक्तम् । ब्रह्मवादे पुनः सर्वभवनसमर्थत्वाद् ब्रह्मणि विरोधाभावः । नहि
१५ नित्यं सदैकरूपं विक्रियमाणं न भवितुमर्हतीति । सर्वब्रह्मधर्मतुल्यत्वे तदेव ब्रह्मेति जितं ब्रह्मवादिभिः । यः सर्वज्ञः सर्ववित् ( मुं. १।१।९ ) इत्यादयस्तु सुतरामेव न प्रकृतिधर्माः । व्यवधानाच्च न पुरुषसंबन्धः । अक्षरनिरूपण एव पुरुषविशेषणात्त्वं । येनाक्षरं पुरुषं वेद सत्यम् ( मुं. २।१३ ) इति तस्मादक्षरविशेषणानि न प्रकृतिविशेषणानि नापि
२० पुरुषविशेषणानि सांख्यपुरुषस्य । नहि दिव्यत्वादयो गुणाः पुरुषस्य भवन्ति । न हि तन्मते पुरुषभेदा अङ्गीक्रियन्ते जीवब्रह्मवत् । न च तस्य बाह्याभ्यन्तरत्वं सर्वत्वाभावात् । न हि तस्माज्जायते प्राणादिः । तस्मात्पुरुषविशेषणान्यपि न सांख्यपुरुषविशेषणानि । अतो विशेषणभेदो व्यपदेशभेदश्च ब्रह्मविद्यैवेति । स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामित्युपक्रमे-
२५ प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ( मुं. १।२।१३ ) इति मध्ये—तेषामेवैतां ब्रह्मविद्यां वदेत्यन्ते । तस्मान्न सांख्यपरिकल्पितौ प्रकृतिपुरुषौ वाक्यार्थः । नहि ब्रह्मा ज्येष्ठपुत्राय स्मृतिरूपां विद्यां वदतीति चकारार्थः ॥ १।२।२२ ॥

## रूपोपन्यासाच्च ॥ १।२।२३ ॥

अग्निर्मूर्धा चक्षुषी ( मुं. २।१।४ ) इत्यादिरूपं न हि प्रकृतिपुरुषयोरन्यतरस्य संभवति । ब्रह्मवादे पुनर्विश्वकायस्यैतद्रूपम् । सूत्रविभागात् पुनर्विभागात्पुनर्मुख्योपपत्तिरेषेति सूचितम् । चकारेण श्रुत्य-
५ न्तराविरोध एकवाक्यता च सर्वेषां वेदान्तानामिति । तस्मादक्षरशब्देन पुरुषशब्देन च ब्रह्मैव प्रोक्तमिति ब्रह्मविद्यैवैषेति सिद्धम् ॥१।२।२३॥७॥

---

## ८ वैश्वानराधिकरणम् ।

## वैश्वानरः साधारणशब्दविशेषात् ॥ १।२।२४ ॥

अधिकरणत्रयेण भोगमुपपाद्य पूर्वाधिकरणे दृश्यत्वादिगुणानुक्त्वा
१० प्रसंगाद्रूपमुपन्यस्तम् । अधुना साकारब्रह्मतामुपपादयितुमिदमधिकरणमारभ्यते को न आत्मा किं ब्रह्मेति । आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहीति चोपक्रम्य द्युसूर्यवाय्वाकाशवारिपृथिवीनां सुतेजस्त्वादिगुणयोगमेकैकोपासननिन्दया च मूर्धादिभावमुपदिश्याम्नायते—यस्त्वेतमेवं प्रादेशमात्रमभिविमानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वे-
१५ ष्वात्मस्वन्नमत्ति तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोन्वाहार्यपचनमास्यमाहवनीयः ( छां. ५।१८।२ ) इत्यादि । तत्र संशयः । किं वैश्वानरशब्देन ब्रह्म प्रतिपादयितुं शक्यते न वेति । अर्थस्यातिसंदिग्धत्वात्संदेहः ।
२० तत्रोपक्रमे ब्रह्मात्मपदप्रयोगोस्ति नान्यत्किंचित् । उपपादने त्वतद्धर्मा एव । साकारस्य तु लोकन्यायेनाब्रह्मत्वम् । वैश्वानरो यद्यप्यग्नावेव प्रसिद्धस्तथापि पूर्वकाण्डसिद्धत्वादनतात्मपरिग्रहो युक्तः । ततश्च संवत्सरो

---

3–C reads विश्वाकारस्य for विश्वकायस्य ।

5–S and वि. पु read श्रुत्यन्तरविरोध for श्रुत्यन्तराविरोध ।

11–A and B read आरभ्यंत for आरभ्यते ।

ब्रह्मत्वमाह । अदृश्यत्वादिगुणकः परमात्मैव । कुतः । धर्मोक्तेः । तथाक्षरात्संभवतीह विश्वम् ( मुं. १।१।७ ) इति । इयं चोपनिषत् । न ह्यन्यत्र ब्रह्मव्यतिरिक्ताज्जगदुत्पत्तिरस्ति । पुरुषस्य ब्रह्मत्वं निःसंदिग्धमेव । ईषदानन्दतिरोभावेन ब्रह्माक्षरमुच्यते । प्रकटानन्दः पुरुष इति । ब्रह्मविदाप्नोति
५ परम् ( तै. २।१ ) इत्यत्रैव तथा निर्णयात् । तस्माददृश्यत्वादिगुणकः परमात्मैव ॥ १।२।२१ ॥

## विशेषणभेदव्यपदेशाभ्यां च नेतरौ ॥ १।२।२२ ॥

ननु पूर्वपक्षन्यायेन ब्रह्मविद्याख्यायामपि स्मृतिः ब्रह्मविद्यैवास्तु । द्वे ब्रह्मणी वेदितव्ये मूर्तं चामूर्तं च ( मै. ६।२२ ) इत्यत्र विकारस्यैव
१० ब्रह्मपदवाच्यत्वम् । अतः प्रकृतिपुरुषावेव वाक्यार्थ इति परिहरति ।

इतरौ न भवतो वाक्यार्थरूपौ । कुतः । विशेषणभेदव्यपदेशाभ्याम् । विशेषणभेदो व्यपदेशश्च ताभ्यामदृश्यत्वादयो गुणा न प्रकृतेर्भवन्ति सर्वस्यापि तद्विकारत्वात् । न हि घटदर्शनेन मृन्न दृश्यत इति वक्तुं युक्तम् । ब्रह्मवादे पुनः सर्वभवनसमर्थत्वात् ब्रह्मणि विरोधाभावः । नहि
१५ नित्यं सदैकरूपं विक्रियमाणं न भवितुमर्हति । सर्वब्रह्मधर्मतुल्यत्वे तदेव ब्रह्मेति जितं ब्रह्मवादिभिः । यः सर्वज्ञः सर्वविद् ( मुं. १।१।९ ) इत्यादयस्तु सुतरामेव न प्रकृतिधर्माः । व्यवधानाच्च न पुरुषसंबन्धः । अक्षरनिरूपण एव पुरुषविशेषणाच्च । येनाक्षरं पुरुषं वेद सत्यम् ( मुं. २।१३ ) इति तस्मादक्षरविशेषणानि न प्रकृतिविशेषणानि नापि
२० पुरुषविशेषणानि सांख्यपुरुषस्य । नहि दिव्यत्वादयो गुणाः पुरुषस्य भवन्ति । न हि तन्मते पुरुषभेदो ह्यङ्गीक्रियते जीवब्रह्मवत् । न च तस्य बाह्याभ्यन्तरत्वं सर्वत्वाभावात् । न हि तस्माज्जायते प्राणादिः । तस्मात्पुरुषविशेषणान्यपि न सांख्यपुरुषविशेषणानि । अतो विशेषणभेदो व्यपदेशिभेदश्च ब्रह्मविद्यैवेति । स ब्रह्मविद्यां सर्वविद्यामित्युपक्रमे-
२५ प्रोवाच तां तत्त्वतो ब्रह्मविद्याम् ( मुं. १।२।१३ ) इति मध्ये—तेषामेवैतां ब्रह्मविद्यां वदेत्यन्ते । तस्मान्न सांख्यपरिकल्पितौ प्रकृतिपुरुषौ वाक्यार्थः । नहि ब्रह्मा ज्येष्ठपुत्राय स्मृतिरूपां विद्यां वदतीति नकारार्थः ॥ १।२।२२ ॥

## रूपोपन्यासाच्च ॥ १।२।२३ ॥

अग्निर्मूर्धा चक्षुषी ( मुं. २।१।४ ) इत्यादिरूपं न हि प्रकृतिपुरुषयोरन्यतरस्य संभवति । ब्रह्मवादे पुनर्विश्वकायस्यैतद्रूपम् । सूत्रविभागात् पुनर्विभागात्पुनर्मुख्योपपत्तिरेषेति सूचितम् । चकारेण श्रुत्य-
५ न्तराविरोध एकवाक्यता च सर्वेषां वेदान्तानामिति । तस्मादक्षरशब्देन पुरुषशब्देन च ब्रह्मैव प्रोक्तमिति ब्रह्मविद्यैवैषेति सिद्धम् ॥१।२।२३॥७॥

---

## ८ वैश्वानराधिकरणम् ।

## वैश्वानरः साधारणशब्दविशेषात् ॥ १।२।२४ ॥

अधिकरणत्रयेण भोगमुपपाद्य पूर्वाधिकरणे दृश्यत्वादिगुणानुक्त्वा
१० प्रसंगाद्रूपमुपन्यस्तम् । अधुना साकारब्रह्मतामुपपादयितुमिदमधिकरणमारभ्यते को न आत्मा किं ब्रह्मेति । आत्मानमेवेमं वैश्वानरं संप्रत्यध्येषि तमेव नो ब्रूहीति चोपक्रम्य द्युसूर्यवाय्वाकाशवारिपृथिवीनां सुतेजस्त्वादिगुणयोगमेकैकोपासननिन्दया च मूर्धादिभावमुपदिश्याम्नायते—यस्त्वेतमेवं प्रादेशमात्रमभिविमानं वैश्वानरमुपास्ते स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वे-
१५ ष्वात्मस्वन्नमत्ति तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्मात्मा संदेहो बहुलो बस्तिरेव रयिः पृथिव्येव पादावुर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोन्वाहार्यपचनमास्यमाहवनीयः ( छां. ५।१८।२ ) इत्यादि । तत्र संशयः । किं वैश्वानरशब्देन ब्रह्म प्रतिपादयितुं शक्यते न वेति । अर्थस्यातिसंदिग्धत्वात्संदेहः ।
२० तत्रोपक्रमे ब्रह्मात्मपदप्रयोगोस्ति नान्यत्किंचित् । उपपादने त्वतद्धर्मा एव । साकारस्य तु लोकन्यायेनाब्रह्मत्वम् । वैश्वानरो यद्यप्यग्नावेव प्रसिद्धस्तथापि पूर्वकाण्डसिद्धत्वाद्देवतात्मपरिग्रहो युक्तः । ततश्च संवत्सरो

---

3–C reads विश्वाकारस्य for विश्वकायस्य ।

5–S and वि. मु read श्रुत्यन्तरविरोध for श्रुत्यन्तराविरोध ।

11–A and B read आरभते for आरभ्यते ।

वा अग्निर्वैश्वानरः (बृ. वा. शा. समाम्नाः. ) इति श्रुतेः । संवत्सरस्य प्रजापतित्वाच्च हिरण्यगर्भोपासनापरमिति गम्यते । ब्रह्मात्मशब्दावपि हि तत्रैव युक्ततरौ । तदुपासकस्यैवान्नभोजनत्वमपि सर्वत्र युक्तम् । प्रादेशमात्रत्वमपि मुख्यजीवत्वादस्मदाद्यपेक्षया स्थूलत्वाद्यभिप्रायम् । विराडभिमानित्वाच्च
५ लोकावयवत्वम् । वेदगर्भत्वादग्निमयात्मकत्वमिति । तस्माद्धिरण्यगर्भोपासनापरमेवैतद्वाक्यं न भगवदुपासनापरमित्येवं प्राप्त उच्यते ।

वैश्वानरः परमात्मैव । कुतः । साधारणशब्दविशेषात् । साधारणशब्दाद्विशेषः । ये पूर्वपक्षे साधारणशब्दा हिरण्यगर्भपरतया ततोपि विशेषोस्ति येन भगवानेव वैश्वानरो भवति । प्रादेशमात्रस्यैव द्युमूर्ध-
१० त्वादिधर्मः । न हि विरुद्धधर्माश्रयत्वं भगवद्व्यतिरिक्ते संभवति । सर्वभवनसामर्थ्याभावात् । साधारणाद् धर्माच्छब्द एव विशेष इति वा । विशेषादित्येव वक्तव्ये साधारणशब्दशब्दौ प्रादेशमात्रस्यैव वैश्वानरशब्दवाच्यत्वं द्युमूर्धत्वादिकं तस्यैवेति समासेन द्योतयतः । अन्यथा विरोधाभावात् । यदपि लोकात्मकं स्थूलं रूपं तदपि भगवत एव न हिरण्यगर्भस्येति ।
१५ पुरुषत्वात्तस्य । विश्वस्य जडस्य नरस्य जीवस्य च भगवदंशत्वेन देवतात्वात्—देवताद्वन्द्वे च ( पा. सू. ७।३।२१ ) इति विश्वानरौ तौ निवासो यस्येति—तस्य निवासः ( पा. सू. ४।२।६९ ) इत्यण् । तेन परमेश्वर एव वैश्वानरो भवति नान्यः । भगवदंशत्वादन्यत्रोपचारात्प्रयोगः । तस्माद्वैश्वानरः परमात्मा ॥ १।२।२४ ॥

२० **स्मर्यमाणमनुमानं स्यादिति ॥ १।२।२५ ॥**

व्याख्यानेन भगवत्परत्वाद्वाक्यस्य प्रमाणान्तरमाह ।

केचित्स्वदेहे हृदयावकाशे प्रादेशमात्रं पुरुषं वसन्तम् ।
चतुर्भुजं कञ्जरथाङ्गशङ्खगदाधरं धारणया स्मरन्ति ॥

( भा. २।२।८ ) इति ।

२५ स्मर्यमाणं रूपमनुमानं स्यात् । प्रादेशमात्रवैश्वानरस्य ब्रह्मत्वे । स्मरणं हि मननं श्रुतस्य भवति । श्रुतिवाक्येभ्य एव हि श्रवणं यदि

प्रादेशमात्रवैश्वानरप्रतिपादकजातीयानां न ब्रह्मवाक्यत्वं स्यात्तदा स्मरणं नोपपद्येत । अत इति हेतोः प्रादेशमात्रवैश्वानरो भगवानेवेति सिद्धम् ॥ १।२।२५ ॥

**शब्दादिभ्योन्तः प्रतिष्ठानाच्च नेति चेन्न तथा दृष्ट्युपदेशाद-**
५ **संभवात्पुरुषमपि चैनमधीयते ॥ १।२।२६ ॥**

किंचिदाशङ्क्य परिहरति । ननु यदि स्मर्यमाणमनुमानं स्यादिति वाक्यार्थो निर्णीयते तदा स्मृत्यन्तरेणान्यथापि व्याख्येयम् ।

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥

१० इति ( भ. गी. १५।१४ )

जाठर एवाग्निर्वैश्वानरो भवति तस्यैव भगवद्विभूतित्वाद्वाक्यार्थो यथाकथंचिद् योजयिष्यते । न तु विरुद्धधर्माणां विद्यमानत्वाद् भगवत्परत्वं वाक्यस्य । विरुद्धधर्माः शब्दादयोन्तःप्रतिष्ठानं च । अग्निर्वैश्वानर इति शब्दः केवलवैश्वानरे भवेत् । भगवत्परत्वं योगेन तदग्निसाहचर्याद-
१५ ग्निरेव भवेत् । तस्यैव च त्रेताग्निकल्पनमुपासनार्थम् । प्राणो हि देवताः— तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम् ( छां. ५।१०।१ ) इत्यादिना । तदेतेभ्यो हेतुभ्योन्तःप्रतिष्ठितत्वमपि न भगवद्धर्मः । पुरुषेन्तप्रतिष्ठितं वेद ( श. ब्रा. १०।६।१।११ ) इति भिन्नहेतुर्हेतुहेतुश्च भवतीति न चकारः । तस्माद्विरुद्धधर्माणां विद्यमानत्वान्न भगवान् वैश्वानर इति चेत् ।
२० न । तथा दृष्ट्युपदेशात् । सर्वभोक्तृत्वं भगवतो वक्तुं तथा दृष्टिरुपदिश्यते । विरुद्धधर्माणां तत्तद्भावापत्तिरित्यैश्वर्यमेव भगवतो वर्णितम् । तर्हि कार्यवाक्यमेवास्तु स्मृत्यनुरोधादिति चेत्तत्राह । असंभवात् । नहि तस्य द्युमूर्धत्वादयो धर्माः संभवन्ति । उपचारादुपासनार्थं परिकल्पनं भविष्यतीति चेत् न । पुरुषमपि चैनमधीयते वाजसनेयिनः । स एषोग्निर्वैश्वानरो
२५ यत्पुरुषः स यो हैतमेवाग्निं वैश्वानरं पुरुषविधं पुरुषेन्तः प्रतिष्ठितं वेद

( श. ब्रा. १०।६।१।११ ) इति । तस्मात्पुरुषत्वं पाठान्तरे पुरुषविधत्वं वा जाठरस्य न संभवतीति भगवानेव वैश्वानरः । भगवत्परत्वे संभवत्यन्यकल्पना न युक्तेति ॥ १।२।२६ ॥

## अत एव न देवता भूतं च ॥ १।२।२७ ॥

५ वैश्वानरो न ऊत्या ( ऋ. वे. ६।२५।१ ) इत्यादिमन्त्रैर्देवताया महाभूतस्यैवा वाक्यार्थतेति कस्यचिद्बुद्धिः स्यात्तदप्यतिदेशेनैव परिहरति। मुख्योपपत्तिर्भगवत्परत्वे संभवति नान्यकल्पना युक्तेति ॥ १।२।२७ ॥

## साक्षादप्यविरोधं जैमिनिः ॥ १।२।२८ ॥

अधुना परिमाणविशेषो विचार्यते । प्रादेशमात्रत्वं भगवतः स्वाभा-
१० विकं कृत्रिमं वेति । अस्मिन् सिद्ध एव पूर्वोक्तं सिद्धं भवेदिति विचार्यते। तत्रास्मिन्नर्थे चत्वार ऋषयो वेदार्थचिन्तकाः प्रकारभेदेन । तत्र केवलं शब्दबलविचारका आचार्याः १ । शब्दार्थयोर्जैमिनिः २ । आश्मरथ्यस्तु शब्दोपसर्जनेनार्थविचारकः ३ । केवलार्थविचारको बादरिरिति ४ । आचार्यः पुनर्विचाराविचारयोर्दोषं पश्यन् विचारमपि वदन् तेषामल्पबुद्धिख्यापनाय
१५ नामान्याह । तत्र जैमिनिरुभयबलविचारकः प्रथमं निर्दिश्यते । व्यापकस्य प्रादेशमात्रत्वे साक्षादपि कल्पनाव्यतिरेकेणापि स्वरूपविचारेणैव विरोधं मन्यते जैमिनिः । आकाशवद्व्यापकं सर्वतःपाणिपादान्तं ब्रह्म। अतएव साकारत्वमनन्तमूर्तित्वं ब्रह्मणः स्वेच्छया परेच्छया स्वभावतश्च विभक्तमिव । त्रयोपि नियतपरिमाणाः । अनियतपरिमाणास्त्वाकाशवत्प-
२० रिच्छेदनिरूप्याः । तद्वृद्धिह्रासाभ्यां तथा भवन्ति । स्मृतावप्युक्तम् ।

विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यान्यथो विदुः ।
प्रथमं महतः स्रष्टृ द्वितीयं त्वण्डसंस्थितम् ॥
तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते ॥

( इति । )

9–क reads तत्प्रादेशमात्रत्वं for प्रादेशमात्रत्वं ।

भूतेषु पञ्चधा। उदरेऽङ्गुष्ठमात्रः। हृदये प्रादेशो मूर्धनि च मनसीन्द्रियेषु चाणुः। चित्ते व्यापकः। एकस्याप्युपक्रमे सर्वेषु तथात्ववादो विभूतिरभेदाश्च। तस्माद्वैश्वानरस्य पुरुषत्वात्सच्चिदानन्दरूपेणैवं प्रादेशमात्रत्वं न विरुध्यते। अतः साकारब्रह्मवाद एव जैमिनेः ५ सिद्धान्तः॥ १।२।२८॥

## अभिव्यक्तेरित्याश्मरथ्यः॥ १।२।२९॥

निराकारमेव ब्रह्म मायाजवनिकाच्छन्नं तदपगमेन पुरुषाकारेणाधिदैविकदेवताधिष्ठितेनाभिव्यक्तः पुरुषोऽन्तर्यामी। अत एव पुरुषविध इति। अभिव्यक्तेर्हेतोः साकारत्वमपि मायापगमनकृतत्वान्न स्वाभाविकत्वं १० तथापि निर्दिश्यमानं सच्चिदानन्दरूपमेवाश्मरथ्यो मन्यते॥ १।२।२९॥

## अनुस्मृतेर्बादरिः॥ १।२।३०॥

बादरिः केवलयौक्तिकश्चिन्तनवशात् प्रादुर्भूतरूपानुवादिका श्रुतिरिति। यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय। (भा. ३।९।११) इति वाक्यानुरोधात्। अन्यथा बहुकल्पनायां बुद्धि- १५ सौकर्याभावात् तार्किकादिमतेष्वपि तथात्वायुक्त्यनुरोधेन ब्रह्मवादोऽप्यन्यथा नेय इति हि मन्यते। अस्मिन्पक्षे त्वतात्त्विकत्वम्। अथवा मायास्थानेऽनुस्मृतिः। अभिव्यक्तिस्तु तुल्या। एवं सति बादरिमतेऽपि तात्त्विकमेव रूपम्॥ १।२।३०॥

## संपत्तेरिति जैमिनिस्तथाहि दर्शयति॥ १।२।३१॥

२० जैमिनिमत आकारवादे नियतसाकारं मन्यमानस्तदेकदेशी नियतमेव प्रादेशमात्रभगवद्रूपं मन्यते। तन्निराकरणाय सर्वत्र प्रादेशत्वं संपत्तिकृतमित्याह।

तत्र का संपत्तिः कथमिति स्वयमेव श्रुत्या प्रदर्शयति। वाजसनेयिब्राह्मणे द्युप्रभृतीन् पृथिवीपर्यन्तान् वैश्वानरस्यावयवान् अध्यात्मे च

11-S reads अनुस्मृतेरिति for अनुस्मृतेः।

17-A reads स्मृतिः for अनुस्मृतिः।

मूर्धप्रभृतिषु चिबुकपर्यन्तेषु सम्पादयन् प्रादेशमात्रमिह वै देवाः सुविदिता अभिसंपन्नास्तथा तु व एतान् वक्ष्यामि यथा प्रादेशमात्रमेवाभिसंपादयिष्यामीति स होवाच मूर्धानमुपदिशन्नेष वा अतिष्ठा वैश्वानरः (बृ. जाबालश्रा.) इत्यादिना । संपत्तिनिमित्तमेव प्रादेशमात्रत्वं वैश्वानरस्याह । ननु ५ प्रादेशमात्र एव वैश्वानर इति तदेकदेशिपरिहारं जैमिनिर्मन्यते ॥ १।२।३१॥

## आमनन्ति चैनमस्मिन् ॥ १।२।३२ ॥

मुख्यं स्वसिद्धान्तमाह । व्यापक एव प्रादेश इति नहि विरुद्धमुभयं भगवत्यनवगाह्यमाहात्म्ये । तस्मात् प्रमाणमेवानुसर्तव्यम् । न युक्तिः । शब्दबलविचार एव मुख्यः । ननु प्रातीतिकविरोधादन्यथात्वकल्पनम् । १० वैश्वानरस्य पुरुषत्वं पुरुषविधत्वं पुरुषेन्तः प्रतिष्ठितत्वं च वाजसनेयिनः समामनन्ति । नहि तस्य तद्विधत्वं तस्मिन्प्रतिष्ठितत्वं च संभवति युक्त्या । अतोन्ये ऋषयो भ्रान्ता एव । येन्यथा कल्पयन्तीत्यभिप्रेत्य स्वमतमाह ।

एवं वैश्वानरमस्मिन्मूर्धचिबुकान्तराले जाबालाः समामनन्ति । एषोनन्तोव्यक्त आत्मा योविमुक्ते प्रतिष्ठित इति सोविमुक्तः कस्मिन्प्रतिष्ठितः १५ ( जा. १ ) इत्यादिना भ्रुवोः घ्राणस्य च यः सन्धिः स एष द्योर्लोकस्य परस्य च सन्धिर्भवतीति न ह्यनन्तः संकुचितस्थाने भवति विशेषणवैयर्थ्यापत्तेः । युक्तिगम्या त्वब्रह्मविदेव । अविरोधेपि वक्ष्यति । श्रुतेस्तु शब्दमूलत्वात् ( ब्र. सू. २।१।२७ ) इति । ननु तथापि काचिद्वेदानुसारिणी युक्तिर्वक्तव्या शास्त्रसाफल्यायेति चेत् । उच्यते । विरोध एव नाशङ्कनीयो २० वस्तुस्वभावात् । अयःकान्तसंनिधौ लोहपरिभ्रमणे या युक्तिर्गर्भस्यौदर्याग्निदाहे रेतसो मयूरत्वादिभावे । न हि सर्वत्र स्वभावदर्शनाभ्यामन्योपपत्तिः कैश्चिदपि शक्यते वक्तुम् । तस्यान्ते सुषिरम्(ना. १३।२) इत्यादिना श्रुतिरेवमेवाह । यशोदास्तनन्धयस्य च भगवतो मुखारविन्दे विश्वमेव दृष्ट्वा स्वप्नमाया विद्यानिराकरणाय सिद्धान्तमाह ।

---

20–A reads सुक्तिः for युक्तिः ।
23–D and E read स्वमाया for स्वप्नमाया ।

अथो अमुष्यैव ममार्भकस्य यः कश्चनौत्पत्तिक आत्मयोगः ( भा. १०।८।४० ) इत्युलूखलबन्धने चायमर्थो निर्णीतः । तस्मादानन्दांशस्यैवायं धर्मो यत्र स्वाभिव्यक्तिस्तत्र विरुद्धसर्वधर्माश्रयत्वमिति चकारार्थः । तस्मात्प्रादेशमात्रो व्यापक इति वैश्वानरो भगवानेवेति सिद्धम् ॥ १।२।३२॥८ ॥

५ ॥ इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये प्रथमाध्यायस्य द्वितीयः पादः ॥ १।२ ॥

# प्रथमाध्याये तृतीयः पादः ।

## १ द्युभ्वाद्यायतनाधिकरणम् ।

**द्युभ्वाद्यायतनं स्वशब्दात् ॥ १।३।१ ॥**

१० द्वितीयपाद आधेयरूपो भगवान् प्रतिपादितः । आधाररूपोऽत्र प्रतिपाद्यते । तेन सर्वं ब्रह्मेति फलिष्यति ।

**बाधकानां बलिष्ठत्वात्साधकानामभावतः ।**
**आधारधर्मा बाध्येरन्निति पादोऽभिधीयते ॥ १८ ॥**

इदं श्रूयते । यस्मिन्द्यौः पृथिवी चान्तरिक्षमोतं मनः सह प्राणैश्च १५ सर्वैः । तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ( मुं. २।२।५ ) इति ।

**यस्मिन्नित्यादिवाक्ये च वाक्यार्थः सर्वबाधितः ।**
**अर्थात्प्रकरणाल्लिङ्गादिति पूर्वं विचार्यते ॥ १९ ॥**

अत्र संशयः । द्युभ्वाद्यायतनं ब्रह्म । आहोस्वित्पदार्थान्तरमिति । २० अर्थान्तरमेव भवितुमर्हति । द्युभ्वादीनां सूत्रे मणिगणा इव प्रोतानां भारत्वांच्च तद्ग्राहकः परमात्मा । अन्यवाग्विमोकश्चासंगतः । एकविज्ञानेन सर्वविज्ञानस्य पृष्टत्वात्कथमन्यविमोकः । सेतुश्च गतिसाधनः । तस्मादफलत्वमपि । आत्मलाभान्न परं विद्यत इति विरोधश्च । अतो न ब्रह्मविद्यापरमेतद्वाक्यं किंतु स्मृतिमूलं भविष्यतीत्येवं प्राप्त उच्यते ।

१ अस्याधिकरणस्य नाम वेदान्ताधिकरणमालायां न लभ्यते ।

द्युभ्वाद्यायतनं ब्रह्मैव । द्यौर्भूश्चादिर्येषां ते द्युभ्वादयस्तेषामायतनम् । यस्मिन्द्यौरिति वाक्योक्तानां साधकं वदन् प्रथमपरिहारमाह । स्वशब्दात् । आत्मशब्दो व्याख्यातः स्वशब्देन । अत्र न जीवस्यात्मत्वेनोपासनार्थमात्मपदं किंतु पूर्वोक्तानामात्मभूतं तेन न भास्करोक्तो दोषः । कारणे हि ५ कार्यमोतं भवति सेतुत्वं च युज्यते । तज्ज्ञानेनामृतत्वप्राप्तेः । अभेदेऽपि-ब्रह्मविदाप्नोति परम् ( तै. २।१ ) इतिवदर्थः । तस्मादबाधितार्थत्वाद्वाक्यस्य सर्वगतत्वव्युत्पादकत्वाद् द्युभ्वाद्यायतनं ब्रह्मैव ॥ १।३।१ ॥

## मुक्तोपसृप्यव्यपदेशात् ॥ १।३।२ ॥

ननु चोक्तं सर्वविज्ञानस्योपक्रान्तत्वादन्यवाग्विमोको विरुद्ध इति । १० नैष दोषः ।

मुक्तोपसृप्यव्यपदेशात् । मुक्तानां जीवन्मुक्तानां शरीराध्यासरहितानामवान्तरप्रकरणशरधनुर्न्यायेन ब्रह्मत्वेन ज्ञातं पृथक्त्वेन वा जीवं लक्ष्ये योजयितुं तदुपसृप्यता व्यपदिश्यते । तेन शरीराद्यध्यासविशिष्टं न ब्रह्मणि योजनीयमिति ।

१५　किंच । वाग्विमोक एव न वस्तुविमोकः । वस्तुनो ब्रह्मत्वात् । वाचारम्भणमात्रत्वाद्विकारस्य । अतो न सर्वविज्ञानबाधः । अतो बाधकाभावादिदं ब्रह्मवाक्यमेव ।

ये तु श्रुतेरन्यथार्थत्वं कल्पितमतानुसारेण नयन्ति ते पूर्वोत्तरस्पष्टश्रुतिविरुद्धार्थवादिन उपेक्ष्याः ॥ १।३।२ ॥

## २०　नानुमानमतच्छब्दात् ॥ १।३।३ ॥

ननु जडधर्मा जडदृष्टान्ताः प्रकरणे बहवः सन्ति । अरा इव ब्रह्मपुरे मनोमय इत्यादि । तस्मात्प्रकृतिपुरुषनिरूपकसांख्यानुमापकमेवैतत्प्रकरणमस्तु । निर्णीतमप्यक्षराधिकरणे जडधर्मात्पुनरुज्जीवनम् । तस्माद्द्युभ्वाद्यायतनं प्रकृतिरेव भवितुमर्हतीति चेन्न ।

२५　न अनुमानं तन्मतानुमापकं न भवति । क्वापि शब्दो निःसंदिग्धस्तन्मतख्यापको नास्ति । ब्रह्मवादख्यापकास्तु बहवः सन्ति आत्मसर्व-

ज्ञानन्दरूपादिशब्दाः । अतः संदिग्धा जडधर्मत्वेन प्रतीयमाना अपि ब्रह्मधर्मा एवेति युक्तम् । न हि ब्रह्मवादः श्रुतिव्यतिरिक्ते सिद्धोस्ति । येन ब्रह्मधर्माभावो निश्चेतुं शक्येत । तस्मात् सर्वाधारत्वेन निरूप्यमाणः परमात्मैव न प्रधानमिति ॥ १।३।३ ॥

५ **प्राणभृच्च ॥ १।३।४ ॥**

नन्वस्ति निर्णायकं प्राणानामोतत्ववचनं—मनोमयः प्राणशरीरनेता ( मुं. २।२।७ ) इति च । अतो जीवधर्माः केचन जडधर्माश्चापरे सर्वज्ञत्वादयोपि योगप्रभावाज्जीवधर्मा इति । तस्माज्जडजीवविशिष्टः सांख्यवाद एव युक्त इति चेत् । न ।

१० प्राणभृज्जीवो न संभवति । अतच्छब्दादेव न ह्यानन्दरूपः स भवितुमर्हति तन्मते । पृथग्योगकरणमुत्तरार्थम् ॥ १।३।४ ॥

**भेदव्यपदेशात् ॥ १।३।५ ॥**

विशेषहेतुमाह । तमेवैकं जानथ ( मुं. २।२।५ ) इति कर्मकर्तृभावः प्रतीयते । अतो भेदव्यपदेशान्न प्राणभृज्जीवः ॥ १।३।५ ॥

१५ जीवजडसाधारणनिराकरणाय विशेषहेतुमाह ।

**प्रकरणात् ॥ १।३।६ ॥**

प्रकरणं हीदं ब्रह्मणः । ब्रह्म देवानामित्यारम्भे स ब्रह्मविद्यामिति । तेषामेवैतां ब्रह्मविद्यामित्यन्ते च । ब्रह्मविद्याया एव प्रकरणित्वमवगम्यते । ब्रह्मैवेदममृतं पुरस्तात् ( मुं. २।२।११ ) इत्येवमादिभिर्विस्पष्टो ब्रह्मवादः

२० प्रतीयते ॥ १।३।६ ॥

सर्वस्याप्यन्यथाभावशङ्कया विशेषहेतुमाह ।

**स्थित्यदनाभ्यां च ॥ १।३।७ ॥**

द्वा सुपर्णेति वाक्ये—अनश्नन्नन्यो अभिचाकशीति ( मुं. ३।१।१ ) इति केवलस्थितिः परमात्मनः । कर्मफलोपभोगो जीवस्य । अतः स्थित्य-

---

2–क reads श्रुतिव्यतिरिक्तः for श्रुतिव्यतिरिक्ते ।

दनाभ्यां जीवपरमात्मनावेव मध्ये परामृष्टौ । न हि सांख्यमतमेतादृशं भवति । अतोस्य वैशेषिकोपपत्तेर्विद्यमानत्वात्पतिलोऽप्येन सर्वा उपपत्तयो दृष्टा इति द्युभ्वाद्यायतनं भगवानेवेति सिद्धम् । यद्यपि पैङ्ग्युपनिषदि द्वा सुपर्णेत्यस्यान्यथा व्याख्यानं प्रतिभाति तदन्यां प्रदेशविशेषेणान्यथा ५ व्याख्यानं न दोषाय । तस्मात् सत्यवक्षेत्रज्ञौ जीवब्रह्माणौ व्याख्येयौ ॥ ॥ १।३।७ ॥ १ ॥

---

## २ भूमाधिकरणम् ।

### भूमा संप्रसादादध्युपदेशात् ॥ १।३।८ ॥

इदं श्रूयते । यो वै भूमा तत्सुखम् ( छां. ७।२३।१ ) इति सुख- १० लक्षणमुक्त्वा भूम्नो लक्षणमाह । यत्र नान्यत्पश्यति नान्यच्छृणोति नान्य- द्विजानाति स भूमा ( छां. ७।२३।१ ) इति । तत्र संशयः । भूमा बाहु- ल्यमाहोस्विद्ब्रह्मेति । तत्र प्रपाठकारम्भे ततस्त ऊर्ध्वं वक्ष्यामीति प्रति- ज्ञातत्वाद्वेदादीनां नामत्वमुक्त्वा ततो भूयस्त्वं वागादीनां प्राणपर्यन्ताना- मुक्त्वा मुख्यप्राणविद्याया अवरब्रह्मविद्यात्वस्थापनायाद्यं प्रपाठकं समाप्य १५ ततोपि विज्ञानादीनामन्तरङ्गाणां सुखान्तानां भूयस्त्वमुक्त्वा सुखस्य फलत्वात्तस्यैव भूयस्त्वं वदति ।

यद्यपि—तरति शोकमात्मवित् ( छां. ७।१।३ ) इति नारदप्रश्नाद् भूम्नो ब्रह्मत्वं प्रकरणादुक्तुं शक्यते । तथापि तस्यैवाधात आत्मादेश इत्यहंकारादेशवदात्मादेशोऽप्यस्ति । ततो ब्रह्मत्वेपि प्रश्नसिद्धिः । तस्य २० सुखबाहुल्यस्य स्वे महिम्नि प्रतिष्ठितत्वं सर्वतः पूर्णविषयलाभेपि भवति । सुषुप्तावपीति तयोरन्यतरद् ग्राह्यम् । तत्राप्यन्तरङ्गत्वात्सुषुप्तिरेवात्र भूम- त्वेनोच्यते । न सुखबाहुल्यं सुषुप्तिरूपमेव भवत्येवं प्राप्ते । उच्यते ।

भूमा भगवानेव । कुतः । संप्रसादादध्युपदेशात् । संप्रसादः सुषुप्तिः । तस्मादधि आधिक्येनोपदेशात् । यद्यपि नान्यत्पश्यतीत्यादि २५ समानं तथापि स एवाधस्तादित्यादिना तु ततोप्याधिक्यधर्मा उच्यन्ते ।

न हि सुषुप्तेः सर्वत्वादिधर्माः संभवन्ति। आत्मशब्दश्च मुख्यतया परिगृहीतो भवति। भावशब्दस्यापि सर्वत्वाद् भगवति वृत्तिरदोषः। तस्माद् भूमा भगवानेव ॥ १।३।८ ॥

## धर्मोपपत्तेश्च ॥ १।३।९ ॥

५ नान्यत्पश्यतीत्यादयोपि धर्मा ब्रह्मणि न विरुध्यन्ते। स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ( ब्र. सू. ४।४।१६ ) इति न्यायेन। यत्र हि द्वैतमिव भवति ( बृ. ४।५।१५ ) इत्यादि श्रुत्योभयत्राम्नानात्। अन्यादर्शनादयो भगवति न विरुध्यन्ते। चकारात्फलं तस्यैवोपपद्यत इत्याह। स वा एष एवं पश्यन् ( छां. ७।२५।२ ) इत्यादिना सह-
१० स्राणि च विंशतिः ( छां. ७।२६।२ ) इत्यन्तेन। तेन भूमा ब्रह्मैवेति सिद्धम् ॥ १।३।९॥२ ॥

---

## ३ अक्षराधिकरणम्।

## अक्षरमम्बरान्तधृतेः ॥१।३।१० ॥

गार्गीब्राह्मणे। कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्चेति। स होवाच।
१५ एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणु ( बृ. ३।८।७-८ ) इत्यादि श्रूयते। तत्र संशयः। किमक्षरशब्देन पदार्थान्तरं ब्रह्म वेति। तत्राचेतनसाधारण्याद् वर्णतुल्यत्वादाकाशवदस्याप्यब्रह्मत्वमेव। द्युभ्वाद्यायतनविरोधस्तु तुल्यः। अत एवागतार्थता अदृश्यत्वाधिकरणेन। न हि तत्र विरुद्धधर्मा आशङ्क्य निराक्रियन्ते। अतोचेतनतुल्यत्वाद् ब्रह्मवा-
२० दस्यासमामत्वादाग्रहाविष्टत्वात्प्रष्टुः स्त्रीत्वाच्च—स्मरो वाव आकाशाद्भूयान् ( छां. ७।१३।१ ) इति वत्कयाचिदुपपत्त्या स्मरणकालभूतसूक्ष्मप्रकृतिजीवविशेषाणामन्यतरपरिग्रह इति वक्तव्यमुपासनार्थम्। अत्र हि प्रापञ्चिकसर्वधर्मराहित्यं ब्रह्मधर्मत्वं च प्रतीयते। तदुपासनार्थत्व उप-

---

5—S reads गुणाः for धर्माः।

7—C reads भाति for भवति।

पद्येत । ब्रह्मन्यपरिग्रहे तु वैयर्थ्यमेव । उपदेशस्याभावात् । तस्मादक्षर-मन्यदेव ब्रह्मधर्मत्वेनोपास्यमित्येवं प्राप्ते । उच्यते ।

अक्षरं परमात्मैव । कुतः । अम्बरान्तधृतेः । श्रुतिं व्याख्याय सिद्धं हेतुमाह । अत्रैक एव प्रश्न उत्तरं चैकम् । आकाशस्यावान्तरत्व-
५ मेव । तेनाम्बरान्तानां पृथिव्यादीनां विधारकः परमात्मैव । द्युभ्वाद्याय-तनसिद्धो धर्मोऽत्र हेतुः । न तद्श्नोति कश्चनेति मुख्यतया परिगृहीतो भवति । अन्यथा मूर्धा विपतनं च भवेत् । न ह्यन्यः सर्वाधारो भवितु-मर्हति । परोक्षेण ब्रह्मकथनार्थमक्षरपदमन्यनिराकरणार्थं तद्धर्मोपदेशश्च । तस्मादक्षरं परमात्मैव ॥ १।३।१० ॥

१० ननु कश्चिद्वाक्ये विधारणं ब्रह्मधर्मत्वेनाश्रितमित्यन्यत्रापि न तथा-श्रयितुं शक्यते । नियामकाभावादित्यत आह ।

## सा च प्रशासनात् ॥ १।३।११ ॥

सा च विधृतिरत्रादिवाक्ये ब्रह्मधर्म एव । कुतः । प्रशासनात् । एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिवी विधृते तिष्ठतः (बृ. ३।८।९)
१५ इति प्रशासनेन विधारणमन्यधर्मो भवितुं नार्हति । अप्रतिहताज्ञाराके-भगवद्धर्मत्वात् । तस्मादक्षरं ब्रह्मैव ॥ १।३।११ ॥

ननूक्तमुपासनापरं भविष्यतीति । तत्राह ।

## अन्यभावव्यावृत्तेश्च ॥ १।३।१२ ॥

अन्यभावव्यावृत्तेः । अन्यस्य भावोऽन्यभावः । अब्रह्मधर्म इति
२० यावत् । तस्यात्र व्यावृत्तेः । अब्रह्मत्वे हि ब्रह्मत्वेनोपासना भवति कार्य-कारणभावभेदेन । न ह्यत्र तादृशो धर्मोऽस्ति । नकारात्—यो वा एत-दक्षरमविदित्वा गार्गि ( बृ. ३।८।१० ) इत्यादिना शुद्धब्रह्मप्रतिपादन-मेव नोपासनाप्रतिपादनमिति । तस्मादक्षरं ब्रह्मैवेति सिद्धम् ॥१।३।१२॥३॥

---

1 –A reads ब्रह्मपरिग्रहे for ब्रह्मन्यपरिग्रहे ।

## ४ ईक्षतिकर्माधिकरणम्।

## ईक्षतिकर्मव्यपदेशात्सः ॥ १।३।१३ ॥

पञ्चमप्रश्ने—एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकारस्तस्माद् विद्वानेतेनैकतरमन्वेति यद्येकमात्र (प्र. ५।२) इत्यादिना। एकद्वि-
५ त्रिमात्रोपासनया ऋग्यजुःसामभिर्मनुष्यलोकसोमलोकसूर्यलोकप्राप्तिपुन- रागमने निरूप्यार्धचतुर्थमात्रोपासनया परं पुरुषमभिध्यायीत। स तेजसि परे सम्पन्नो यथा पादोदरस्त्वचा (प्र. ५।५) इत्यादिना परात्परं पुरिशयं पुरुषमीक्षते (प्र. ५।५) इति। तत्र संशयः। परपुरुषः परमात्मा ध्यानविषयः। अहोस्विद् विराट् पुरुषो ब्रह्मा वेति। तत्रा-
१० मुख्यप्रवाहपतितत्वाद् ब्रह्मलोकं गतस्य तदीक्षणमेव च फलं श्रूयते। न हि परमपुरुषस्य ब्रह्मत्वे तज्ज्ञानमेव फलं भवति। तस्माद् विराड् ब्रह्मा वाभिध्यानविषय इत्येवं प्राप्ते। उच्यते।

सः अभिध्यानविषयः परपुरुषः परमात्मैव। कुतः। ईक्षतिकर्म- व्यपदेशात्। जीवघनात्केवलजीवाधारभूताद् ब्रह्मलोकात्पररूपपुरुष-
१५ दर्शनमीक्षतिः। तस्याः कर्मत्वेन व्यपदेशादुभयोः कर्मणोरेकत्वमपरं त्रिमा- त्रपर्यन्तं निरूप्य परं ह्यग्रे निरूपयति। तथैव च श्लोके तिस्रो मात्रा इत्यादि। अभिध्यानस्य हि साक्षात्कारः फलम्। अतः फलरूप- ज्ञानस्य विषयत्वात् परपुरुषः परमात्मैव। मन्दशङ्कानिवृत्त्यर्थमेवेदं सूत्रम्। अत्र सर्वसङ्करवादिनामन्यथा पाठो भ्रमात्। तत्रापि विचार-
२० स्तुल्यः ॥ १।३।१३ ॥ ४ ॥

---

## ५ दहराधिकरणम्।

## दहर उत्तरेभ्यः ॥ १।३।१४ ॥

अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोस्मिन्नन्त- राकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्यम् (छां. ८।१।१)
२५ इत्यादि श्रूयते। तत्र संशयः। किं जीवोन्वेष्टव्यो ब्रह्म वेति जीवब्रह्म-

वादो निर्णीयते । श्रुत्यर्थो हि निर्णेतव्यः । तथापिदमस्मिन्वाक्ये परमार्थतो जीव एव ब्रह्म नेच्छाशं न तथैव समाप्तं नेद् व्यर्थमधिकरणारम्भः । इदमेव च वाक्यं श्रुत्या वक्तव्यं च भवेत् । तस्मादस्मिन्नधिकरणे मुख्या सर्वसंकरवादादिनिराकृतिः । किं तावत् प्राप्तम् । दहर आकाशो
५ जीव इति । अत्रावान्तरप्रकरणद्वयम् । तत्र द्वितीये प्रजापतिप्रकरणे जीव एवमृतामयरूपः प्रतिभाति । स्पष्टार्थं च द्वितीयप्रकरणम् । तस्मात्प्रथमेपि जीव एव तादृशधर्मवान्भवितुमर्हति । अर्थानुगुण्यमपि व्याख्येयम् । अयमेव जीवो ब्रह्म । अयमात्मा ब्रह्म ( बृ. ४।४।५ ) इति श्रुतेः । मैत्रेयीब्राह्मणं चानुगुणं भविष्यति । तस्य पुरं शरीरं तत्र हृदयकमलं सूक्ष्मम् । तत्राराग्रमात्रो जीव
१० एवाकाशः । तास्थ्यात्तद्व्यपदेश इति । अन्वेष्टव्यस्तु तस्मिन् विद्यमानस्तन्महिमा । वासनारूपेण सर्वं तत्र वर्तत इति । अन्यथोभयत्र सर्वकथनं विरुद्धमापद्येत । भूतानि महाभूतानि पुत्रादयो वा । तं चेद्ब्रूयुरित्यादिना नित्यतामुपपाद्यैष आत्मेत्यादिना तस्यैव ब्रह्मत्वमुपदिशति । तज्ज्ञानं च प्रशंसति । स्वात्मज्ञानिनः कामासिद्धिं चाह । य इहेत्यादिना । येपि च
१५ विरुद्धा धर्माः प्रतिभान्ति अहरहर्गमनादयस्तेपि स्वकल्पितजीवानां स्वप्नमायामनोरथादिषु तेषामेव गमनागमने प्रति । स्वातिरिक्तस्य ब्रह्मणोभावात् । एवं लोकाधारत्वमपि । ब्रह्मचर्यं च तस्य साधनमिति । योगश्चतयोर्ध्वमायन्नमृतत्वमेति ( क. ६।१६ ) इति च । तस्माज्जीव एव दहर इत्येवं प्राप्ते । उच्यते ।

२० दहरः परमात्मा न जीवः । कुतः । उत्तरेभ्यः । उत्तरत्र वक्ष्यमाणेभ्यो हेतुभ्यः । तेषामपि साध्यत्वादेवमुक्तम् । जीवो नाम भगवदंशो न भगवानेवेत्यग्रे वक्ष्यते । अंशो नानाव्यपदेशात् ( ब्र. सू. २।३।४३ ) इति । नापि ब्रह्म तावन्मात्रम् । इदमप्यग्रे वक्ष्यते—अधिकं तु भेदनिर्देशात् ( ब्र. सू. २।१।२२ ) इति । तस्मादिदं प्रकरणं न जीवब्रह्मविद्यापरम् ।
२५ किंतु ब्रह्मवाक्यमेवेति ॥ १।३।१४ ॥

---

16–S reads गमनागमने प्रति स्वातिरिक्तस्य for गमनागमने प्रति । स्वातिरिक्तस्य । प्रत्येकत्वेन कल्पितजीवचैतन्यातिरिक्तस्येत्यर्थः ।

उत्तरहेतूनां मध्ये हेतुद्वयमाह ।

## गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गं च ॥ १।३।१५ ॥

गतिशब्दाभ्याम् । गतिर्ब्रह्मलोकगमनम् । एवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति ( छां. ८।३।२ ) इति । एष ५ आत्मापहतपाप्मा सत्यकामः सत्यसंकल्पः ( छां. ८।१।५ ) इति केवलभगवद्वाचकाः शब्दा ब्रह्मलोकशब्दश्च । ननूक्तं जीवस्यैवैते शब्दा गतिश्च मनोरथादिकल्पितानामिति । तन्निराकरणायाह । तथाहि तथैव गतिशब्दौ भगवत्येव युक्तौ । अनृतेनापिधानं हि तेषां विशेषणम् । अज्ञानावेष्टितत्वमित्यर्थः । नत्वज्ञानपरिकल्पितत्वम् । दृष्टत्वात् । तथैव १० हि दृश्यते । सर्वाण्याह न किंचिदवेदिषमिति । न च गन्तुरभाव एव । शास्त्रवैफल्यापत्तेः । न ह्यात्मनाशः पुरुषार्थः । कर्मकर्तृविरोधश्च । तथापहतपाप्मत्वं च । तद्विरुद्धधर्माणामनुभवात् । भगवति त्विदानीमेव तेषामनुभवः । ध्यानादावुपलब्धेः । पृथिवीशरावबदेव जीवब्रह्मविभागो न त्वज्ञानकृतः । तथाहि ।

१५ अज्ञानं नाम चैतन्यान्तर्भूतं तच्छक्तिरूपमनादि । उत बहिर्भूतम् । सांख्यवत् । न । बहिर्भूतं चेत् सांख्यनिराकरणेनैव निराकृतम् । अन्तःस्थितायाः शक्तिरूपायाः स्वरूपाविरोधिन्याः न स्वरूपविभेदकत्वम् । आश्रयनाशप्रसंगात् । कल्पनायाश्चाप्रामाणिकत्वात् । बहिःस्थितस्यैव हि भेदकत्वम् । कुठारादिवत् । २० नापि मायावत् । तच्छक्तित्वात् । किं च कोयं ब्रह्मवादे प्रद्वेषो येन मिथ्यावादः परिकल्प्यते । अज्ञानादिति चेत् । पीतशङ्खप्रतिभानवद्युक्तं मतकरणम् । ब्रह्मविदुपासनयानुगमिष्यति । शर्कराभक्षणेनेव पीतिमप्रतीतिः । सर्वज्ञेन हि वेदव्यासेन भाविमिथ्यावादनिराकरणेनेदमधिकरणमारब्धम् । तस्माज्जीवानामेवाज्ञानदर्शनाद्ब्रह्मणः सर्वज्ञत्वदर्शनाद् २५ गतिशब्दौ ब्रह्मविषयावेव न जीवविषयौ ।

22—A and C read पीत for पीतिम ।

किं च लिङ्गं च वर्तते । यथेह कर्मजितो लोकः क्षीयत एवमेवामुत्र पुण्यजितो लोकः क्षीयते ( छां. ८।१।६ ) इति । न हि स्वाज्ञानं स्वस्य संभवति । हिंसाकरणप्रसक्तिश्च । न च ज्ञानेन सामर्थ्यमुद्बुद्धमिति वाच्यम् । विरोधित्वात् । न हि ज्ञाने जाते कर्तृत्वमस्तीति विप्रुषवादिनोङ्गीकुर्वन्ति । विरुद्धा च कल्पना । अहं ब्रह्मास्मीति । अत एव सर्वभावश्रुतेः तज्ज्ञानं च तस्य सार्वज्ञं लिङ्गम् । तस्य हि स गुणो भगशब्दवाच्यानामन्यतरः । स चेज्जीवे समायाति तत्कृपया तस्येवास्यापि माहात्म्यं भवति । तस्माल्लिङ्गादपि गतिशब्दौ ब्रह्मविषयौ । चकारात्—तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेयनाय (श्वे. ३।८) इति श्रुत्या ब्रह्मत्वेन ज्ञानं नात्मनो मोक्षाय । ब्रह्मण एव तु ज्ञानमात्मत्वेनापि । तस्माद् दहरः परमात्मा ॥ १।३।१५ ॥

अपरं हेतुमाह ।

**धृतेश्च महिम्नोस्यास्मिन्नुपलब्धेः ॥ १।३।१६ ॥**

धृतेः । अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय ( छां. ८।४।१ ) इति ।

न हि सर्वलोकविधारकत्वं ब्रह्मणोन्यस्य संभवति । चकारात्सेतुत्वमपि । तदन्वेष्टव्यं तद्विजिज्ञासितव्यम् ( छां. ८।१।१ ) इति लोकविधारणस्य माहात्म्यरूपत्वात्तस्यैव कर्मत्वमित्याह । महिम्न इति । महिमैष पुरुषस्य । न तु वासनारूपेण तस्मिन् विद्यमानत्वम् । संसारिधर्मत्वेनामाहात्म्यरूपत्वात् । न च विरुद्धमुभयत्रैकस्य दर्शनमिति वाच्यम् । अस्यास्मिन्नुपलब्धेः । अस्यैतादृशविरुद्धधर्माश्रयमाहात्म्यस्यास्मिन् भगवत्येवोपलब्धेः । ज्यायानाकाशात् । यावान्वा अयमाकाशः (छां. ८।१।३ ) अणुः स्थूलः इति । यशोदादयश्च बहिःस्थितमपि जगदन्तः प्रपश्यन्ति । न त्वेतादृशो जीवो भवितुमर्हति । तस्माद् ब्रह्मैव दहरः ॥ १।३।१६ ॥

---

1—C gives reading कर्मचितः for कर्मजितः and पुण्यचितः for पुण्यजितः ।

## प्रसिद्धेश्च ॥ १।३।१७ ॥

आकाशशब्दवाच्यत्वप्रसिद्धिः । अपहतपाप्मत्वादिप्रसिद्धिः । किं बहुना प्रकरणोक्तसर्वधर्मप्रसिद्धिर्भगवत्येव न जीवे संभवत्यतोपि भगवानेव दहरः। चकाराद्विधिमुखेनाधिकरणसमाप्तिः सूचिता॥१।३।१७॥

५ अन्यनिषेधमुखेन पुनर्विचारयति ।

## इतरपरामर्शात्स इति चेन्नासंभवात् ॥ १।३।१८ ॥

ननु ब्रह्मतादृशं जीवो नेतादृश इति न क्वचित्सिद्धमस्ति। श्रुत्यैकसमधिगम्यत्वादुभयस्वरूपस्य ब्रह्मवादे । अतो यथा सर्वत्र ब्रह्मणोसाधारणधर्मदर्शनात्तत्प्रकरणं ब्रह्मण इति निश्चीयते । एवमिहापि जीवस्या-
१० साधारणधर्मदर्शनाज्जीवप्रकरणमिति कुतो न निश्चीयते । निश्चिते तु तस्मिन्नाकाशतुल्यत्वादयो धर्मा जीवस्यैव भविष्यन्ति नान्यस्येत्यभिप्रायेणाह ।

इतरपरामर्शात्सः । इतरो जीवस्तस्य परामर्शः । उपक्रमोपसंहारमध्यपरामर्शैः संदिग्धे निर्णयः । तत्रात्मविदः सर्वान्कामानुक्त्वा
१५ मध्ये—अथ य एष संप्रसादोस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयम् (छां. ८।३।४) इत्यादि मध्ये । अग्रे—अथ य आत्मा स सेतुः ( छां. ८।४।१ ) इति । तत्र संप्रसादः सुषुप्तिः जीवावस्था । तत्र परसंबन्धनिमित्तेन स्वेनैव रूपेणाभिनिष्पत्तिवचनाज्जीव एवैतादृश इति गम्यते । न ह्यत्र परमात्म-
२० नोयं धर्मः संभवति । अतः सर्वमेव प्रकरणं जीवपरं भविष्यतीति स एव जीव एव प्रकरणार्थ इति चेत् । न । जीवस्तादृशो न भवति । विरुद्धधर्मत्वेनैव सर्वत्र तन्निश्चयात् । उभयोरेकरूपत्वे ह्युभयत्वमेव न स्यात् । ऋतं पिबन्तावित्यादिवाक्यविरोधश्च अतो न जीवस्तादृश इत्यभिप्रायेणाह । असंभवात् । न हि जीवे जगदाधारत्वादिकं संभवति । न हि
२५ परामर्शमात्रेण सर्ववेदान्तविरुद्धं कल्पयितुं शक्यते । परामर्शस्यान्यार्थ-

17–B om. अथ after अग्रे । A om. अग्रे before अथ ।

त्वमुत्तरत्र वक्ष्यति । तस्माद् दहरो जीवो न भवितुमर्हति । वाक्यार्थो यथोपपद्यते तथोत्तरत्र वक्ष्यते । ब्रह्म त्वेकमेव नामयमिति निश्चयः ॥ १।३।१८ ॥

## उत्तराच्चेदाविर्भूतस्वरूपस्तु ॥ १।३।१९ ॥

उत्तरात्प्रकरणात्प्राजापत्यात् । तत्र हि दिव्ये चक्षुषि मनोरूपे प्रतीयमानो जीव एवामृताभयरूपो निरूपितः । तस्यैवोदशरावे जाग्रत्साक्षित्वं तदनु स्वप्नसाक्षित्वं तदनु सुषुप्तिसाक्षित्वं निरूप्य सर्वत्र तस्यामृतरूपत्वमेव निरूप्यावस्थानामतात्त्विकत्वमुक्त्वा समाध्यवस्थायां मनसि तमेव जीवं तादृशं प्रतिपादयन्त्यतो जीवोऽपि वस्तुतस्तादृश एवेति प्रकृतेऽपि परामर्शात्स एवेति चेत् । एवमाशङ्क्य परिहरति तुशब्देन । नायमर्थो दुष्यते किंतु किंचिदन्यदस्तीति न नकारप्रयोगः । तदाह । आविर्भूतस्वरूपः । स्वाप्ययसंपत्त्योर्भगवदाविर्भावो जीवे भवति । नृसिंहोपासकस्य नृसिंहाविर्भाववत् ब्रह्मण उपदेशसमये भगवदाविर्भावात् । सर्वत्र स्वात्मानं पश्यन्निन्द्रोऽपि तथैवोपदिष्टवान् प्रजापतिः । अन्यथा प्रतिबिम्बादावमृताभयवचनं मिथ्या स्यात् । इन्द्रे त्वाविर्भावाभावात्प्राजापत्यसंनिधाने विपरीतं पश्यति । अतस्तावन्मात्रदोषपरिहारायान्यथोपदेशः स्वप्नादिषु तथा प्रकृतेऽपि । सुषुप्त्यवस्थायां भगवदाविर्भावात्तथा वचनम् । तस्मादुभयमपि भगवत्प्रकरणमेव । एवमन्यत्रापि भगवदावेशकृता भगवद्धर्माभिलापा ग्राह्याः । तस्माद् दहरः परमात्मैव ॥ १।३।१९ ॥

परामर्शस्य प्रयोजनमाह ।

## अन्यार्थश्च परामर्शः ॥ १।३।२० ॥

अन्य एवार्थः प्रयोजनं यस्य । तस्माद् यमहरहर्वा एवंवित् स्वर्गमेति । स्वस्यैवं ज्ञानं हि ब्रह्मसुखं फलं ब्रह्मज्ञानापेक्षायामप्युच्येत । भगवतश्च तदाविर्भावो भवतीति चकारार्थः । संपत्तौ भगवदावेशकथनार्थं

17–B reads स्वप्नावस्थायां for सुषुप्त्यवस्थायां ।
19–A, C, M, D and E read ऊह्याः for ग्राह्याः ।
23–S reads स्वर्गलोक for स्वर्ग ।

वक्ष्यति च—स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि (ब्र. सू. ४।४।१६) इति चतुर्थे । तस्मान्न परामर्शेनान्यथाकल्पनम् ॥ १।३।२० ॥

## अल्पश्रुतेरिति चेत्तदुक्तम् ॥ १।३।२१ ॥

ननु न वयं जीव उपपत्तिरस्तीति जीवप्रकरणं कल्पयामः । किंतु ५ ब्रह्मणि नायमर्थ उपपद्यते ।

अल्पश्रुतेः । अल्पे हि पुण्डरीके कथं भगवदवस्थानम् । व्यापकत्वश्रवणात् । यावान्वायमाकाशः ( छां. ८।१।३ ) इति । तस्माद्विरोधपरिहाराय जीव एवाराध्यमानस्तथा भवत्विति कल्प्यत इति चेत्तर्हि भवान्सम्यग् विचारकोम्मर्दाय एव । परं तत्समाधानं पूर्वमेवोक्तम् निचा- १० य्यत्वादेवं व्योमवच्च ( ब्र. सू. १।२।७ ) इत्यत्र । तत्र प्रस्मर्तव्यम् । विरोधस्तु सर्वभवनसमर्थे ब्रह्मणि नाशङ्कनीयः । तथा पुरुषशरीरं च ।

पुरुषत्वे च मां धीराः सांख्ययोगविशारदाः ।
आविस्तरां प्रपश्यन्ति सर्वशक्त्युपबृंहितम् ॥

( भा. ११-७ २१ )

१५ इति भगवद्वाक्यात् । तस्माद्भगवानेव दहर इति सिद्धम् ॥१।३।२१॥

---

## ६ अनुकृत्यधिकरणम् ।

## अनुकृतेस्तस्य च ॥ १।३।२२ ॥

दहरविरुद्धं वाक्यमाशङ्क्य परिहरति । न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः । तमेव भान्तमनुभाति सर्वं २० तस्य भासा सर्वमिदं विभाति ( मुं. २।२।१० ) ( कठ. २।५।१५ ) ( श्वे. ६।१४ ) इति कठवल्ल्यामन्यत्र च श्रूयते । यत्तच्छब्दानामेकार्थत्वं प्रकरणाद् ब्रह्मपरत्वं चावगतम् । अर्थाच्च संदेहः । यस्मिन् द्यौरित्यत्र सूर्यादीनां ब्रह्माधारत्वमुक्तम् । अस्मिंश्च वाक्ये पूर्वार्धे तत्र तेषां भानं निषिध्यते ।

---

2- C reads अन्यथावन्मानम् for अन्यथा कल्पनम् ।
10- B. reads तत्र for तत्र ।

यत्र यत्सर्वदा तिष्ठेत् तत्र तेनैव भासते ।
६ भासेताप्यपेक्षायां कर्मत्वे श्रुतिबाधनम् ॥ २० ॥

यत्रेत्यधिकरणसप्तमी । यत्र लोकान्तरस्थितानामप्यभानं तत्राग्नेः का वार्तेति वचनात् सत्यलोकस्थितैः कश्चित्तेजोविशेष एव वाक्यार्थ ५ इत्येवं प्राप्ते । उच्यते ।

अनुकृतेस्तस्य । भगवदनुकारार्थमेवैतद्वचनम् । स्वतो भाननिषेधः पूर्वार्धे । सर्वोऽपि पदार्थस्तमेवानुकरोति सूर्यं रश्मय इव छाया पुरुषमिव । तस्माद् वाक्ये भगवदनुकारित्ववचनान्न नानार्थकल्पनम् । किंच—तस्य भासा सर्वमिदं विभाति ( मुं. २।२।१० ) इति सूर्यादीनां स्वतः १० प्रकाशो नास्त्येव घटवत् । भगवत्प्रकाशेनैव प्रकाशवत्त्वमिति चकारार्थः । तस्मात्स्वतो भाने लक्षणया कर्मत्वे वा भगवत्परत्वे सिद्धे नान्यार्थकल्पनम् ॥ १।३।२२ ॥

## अपि स्मर्यते ॥ १।३।२३ ॥

व्याख्यातेऽर्थे संमत्यर्थमाह । अपीति समुच्चयः । न तद् भासयते १५ सूर्यो न शशाङ्को न पावकः । ( भ. गी. १५।६ ) यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् । ( भ. गी. १५।१२ ) इति च । तस्माद् भगवानेव सर्वावभासकः । तमेव सर्वमनुकरोतीति सिद्धम् ॥ १।३।२३ ॥ ६ ॥

---

## ७ शब्दादेव प्रमिताधिकरणम् ।

## शब्दादेव प्रमितः ॥ १।३।२४ ॥

प्रसंगात् पुनर्बाधकान्तरमाशङ्क्य परिहरति । अङ्गुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति । ईशानो भूतभव्यस्य न ततो विजुगुप्सति । ( का. २।४।१३ ) । तथा—अङ्गुष्ठमात्रः पुरुषो ज्योतिरिवाधूमकः

---

8–C reads नान्यार्थकल्पनम् for न नानार्थकल्पनम् ।
11–S reads भावे for भाने ।
19–S reads देव च for शब्दादेव ।

( का. २।४।१३ ) इति तत्रैव श्रूयते । यावान्वा अयमाकाशः इति व्यापकत्वमन्तः स्थितस्य प्रतीतम् । अङ्गुष्ठमात्रता चात्र प्रतीयते । अतो विरोधाज्जीवस्यैव लोकान्तरगन्तृदेहवत उपासनार्थमीशानत्वादिधर्माः । अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ॥ ( म. भा. ३।२९७।१७ ) ५ इति तन्निवृत्त्यर्थम् । तस्मादङ्गुष्ठमात्रो न भगवानेवं प्राप्तम् । अत उत्तरमाह ।

शब्दादेव प्रमितः । अत्र संदेह एव न कर्तव्यः । शब्दादेव प्रकर्षेण विमानात् । यथा दहरवाक्ये सूक्ष्मस्यैव व्यापकत्वं तथाङ्गुष्ठमात्रस्यैवेशानत्वम् । यदि भगवांस्तादृशो न स्यादन्यस्य तादृशत्वं नोपपद्येत १० । तस्माद् भगवतः सर्वतः पाणिपादान्तत्वाद् यत्र यावानपेक्ष्यते तत्र तावन्तं श्रुतिर्निरूपयतीति अङ्गुष्ठमात्रः परमात्मेति सिद्धम् ॥ १।३।२४ ॥

## हृद्यपेक्षया तु मनुष्याधिकारत्वात् ॥ १।३।२५ ॥

नन्वनेकरूपत्वं विरुद्धधर्मवत्त्वं माहात्म्यार्थं स्वरूपे निरूपयति । प्रादेशमात्रत्वं च ध्यानार्थम् । अङ्गुष्ठमात्रत्वस्य कोपयोग इति चेत्तत्राह । १५ तुशब्देन निष्प्रयोजनत्वं निराक्रियते । अस्ति प्रयोजनम् । तदाह । हृद्यङ्गुष्ठमात्रं निरूप्यते । केन हेतुना । अपेक्षया । ईश्वरकार्यापेक्षया । ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ( भ. गी. १८।६१ ) इति स्मृतेः । रक्षार्थमङ्गुष्ठमात्र इत्यर्थः । ननु प्रमाणान्तरत्वे किमेतन्न संभवति तत्राह । मनुष्याधिकारत्वात् । मनुष्यानधिकृत्येदं मृत्यूपाख्यानं प्रवृत्तम् । अतो २० मनुष्याणां हृदयस्याङ्गुष्ठत्वात् । यद्यपि हृदयं स्थूलं तथापि धर्मरूपं तावदेव । तावन्मात्रस्यैवावदानश्रवणात् । तस्मादङ्गुष्ठमात्रस्यैव सर्वधर्मरक्षकत्वादङ्गुष्ठमात्रो भगवानेवेति सिद्धम् ॥ १।३।२५ ॥ ७ ॥

---

## ८ तदुपर्यपीत्यधिकरणम् ।

## तदुपर्यपि च बादरायणः संभवात् ॥ १।३।२६ ॥

अङ्गुष्ठमात्रनिरूपणार्थं मनुष्याधिकारे निरूपिते कस्यचिद् भ्रमो २५

22—C and S read अङ्गुष्ठमात्रोऽत्र for अङ्गुष्ठमात्रो ।

मन्यन्ते सर्वत्र ब्रह्मविद्यायां मनुष्याणामेवाधिकार इति । तन्निराकरणार्थं देवादीनामधिकारमाह ।

तदुपर्यपि । मनुष्याणामुपरितनानामप्यधिकारोऽस्ति । तत्रापि वैदिकधर्महेतोस्त्रैवर्णिकानां धर्मयुक्तानामाधिकारः । येऽपि देवाः साध्यादयो धर्मयुक्तास्तेषामप्यधिकारः । अत्र जैमिनिरभ्युपगतो न मन्यत इति स्वनामग्रहणम् । विशिष्टत्रैवर्णिकानामथ प्रजापतिपर्यन्तं ब्रह्मानन्दिनामधिकारं मन्यते बादरायणः । कुतः । संभवात् । संभवति तेषां ज्ञानाधिकारः । धर्मज्ञानाभ्यां सातिशयाभ्यां हि तादृशजन्मसंभवात् । न हि तेषां पूर्वसंस्कारा लुप्यन्ते । अक्षरपर्यन्तं गतौ कर्मश्रवणानुपपत्तेः । अतोऽक्षरप्राप्तिः शुद्धब्रह्मविद्याहेतुकत्वादुत्तरोत्तरमुपचयेन विद्यमानत्वात् प्रजापतिपर्यन्तं सर्वेषामधिकारः संभवति । संभवनिबन्धनात् दुर्लभाधिकारत्वमेवेति सूचितम् । यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम् ( बृ. १।४।१० ) इति । तदुपर्यप्यधिकारः सिद्धः ॥ १।३।२६ ॥

**विरोधः कर्मणीति चेन्नानेकप्रतिपत्तेर्दर्शनात् ॥ १।३।२७ ॥**

नन्वेवमुपरितनानां ज्ञानाधिकारे स्वीक्रियमाणे तत्पूर्वभाविष्वप्यधिकारो वक्तव्यः कर्मणि वेदाध्ययने उपनयनादिषु च । ततश्च तेषां ब्राह्मण्याद्यभावाद् देशाद्यभावाच्च पौराणिकेन मतेन देवान्तराभावाच्च तदभावेऽपि क्रियमाणे कर्मणि श्रुतिविरोध इति चेन्न ।

अनेकप्रतिपत्तेर्दर्शनात् । बहूनां प्रतिपत्तिदर्शनात् । बहवोऽत्र कर्मणि प्रवर्तमाना दृश्यन्ते । साध्या वै देवाः सुवर्गकामा एतमद्विरात्रमपश्यत् तमाहरत् तेनायजन्त । साग्निष्टोमेन वसूनयाजयत् । स उक्थ्येन रुद्रानयाजयत् । सातिरात्रेणादित्यानयाजयत् ( तै. सं. ७।४।१ ) इत्यादि । यथैकशतं वर्षाणि प्रजापताविन्द्रो ब्रह्मचर्यमुवास ( छा. ८।११।३ ) इति । भूमावागत्य ऋषीन् कृत्वा यज्ञकर्म च सनत्कुमारेण स्कन्देन च सत्रमासत

8-बि. om. हि after सातिशयाभ्याम् ।
11-M, D and E read संभवबन्धनात् for संभवनिबन्धनात् ।
20-C reads रात्रमपश्यत् for रात्रमपश्यत् ।

( तै. सं. २।३।२ ) इत्यादौ । दर्शनवचनात्स्वस्यापि ऋत्विक्त्वं कर्मकरणं च द्योतयति ।

अथवा सर्वपदार्थानामनेका प्रतिपत्तिर्बहुधोपयोगो वेदे दृश्यते । यथा चतुर्धाकरणादि परिधिपहरणादि तुषोपवापादि तद्विद्यमाने क्रियते ५ नाविद्यमाने । तथा यत्र ये पदार्था न सन्ति तत्र कर्म तदभावेपि भवति । तथाहि दृश्यते । पर्वते सोमवाहकानोभाववत् । यज्ञेन यज्ञमयजन्त देवाः । ( ऋ. सं. १०।९१।१६ ) इति संभृतसंभारः पुरुषावयवैरहम् । तमेव पुरुषं यज्ञं तेनैवायजमीश्वरम् । ( भा. २।६।२७ ) इत्यादिवाक्यैः सर्वसंभृत्युपपत्तिश्च । आधुनिकान्प्रति वेदविभागाज्जैमिनेस्तथा निर्णयः । १० तस्मात्कर्माधिकारः कर्मकरणे चोपर्यपि सिद्धम् ॥ १।३।२७ ॥

**शब्द इति चेन्नातः प्रभवात्प्रत्यक्षानुमानाभ्याम् ॥१।३।२८॥**

ननु मास्तु कर्मकरणे विरोधः । शब्दे तु भविष्यति । अर्थज्ञानानन्तरं हि कर्मकरणम् । वेदाच्चार्थज्ञानम् । तत्र साध्यादीनां वेद एव कर्मकरणं श्रूयते । तत्र ज्ञाने कर्मकर्तृविरोधः । अन्यकल्पनायां १५ त्वनवस्था । व्यवस्थापकाभावात् । तस्माद् वेदो वसूनां वृत्तान्तं वदन् वसूनामधिकारं वदेत् । वदन्वा कथमनित्यो न भवेदिति चेन्न ।

अतः प्रभवात् । अतः शब्दात्प्रभवः शब्दोक्तपदार्थानाम् । वेदोक्ताः सर्व एव पदार्था आधिदैविका एव पुरुषावयवभूताः । सर्वानुकारित्वाद् भगवतः । अतो नामप्रपञ्चो वेदात्मको भिन्न एवाङ्गीकर्तव्यः । २० स केवलं शब्दैकसमधिगम्यः । वेदैश्च सर्वैरहमेव वेद्यः (भ. गी. १५।१५) इति । अतस्तस्य प्रपञ्चस्य भिन्नत्वान्न विरोधः शब्दे । कथमेवमत आह । प्रत्यक्षानुमानाभ्याम् । प्रत्यक्षं तावदिदानीमपि यजमानो यजमानकृत्यमृत्विजश्च स्वकृत्यं वेदादेवावगच्छन्ति । न चाकृतिमात्रवाचकत्वेनाविरोधः । सर्वत्र लक्षणाप्रसंगात् । यः सिक्तरेताः स्यात् ( तै. सं. ५।५।४ ) २५ इत्यादिषु विरोधश्च । न च प्रवृत्तिनिमित्तस्यैव वाच्यत्वम् । प्रवृत्तिवैय-

15-C reads व्यवस्थापकपदाभावात् for व्यवस्थापकाभावात् ।

ध्र्यापत्तेः । संकेतग्रहविरोधाच्च । सर्वस्यापि पदार्थस्य भगवत्स्वात्मानुपस्थिति-दोषः संकेतग्रहेऽपि ।

जगद्दर्शीनां पश्चाद्भवनमित्यनुमानम् । न हि स्वयं जायमानस्य इति प्रत्यक्षोनुभवोऽस्ति । परोक्षव्यवहारस्यैवानुमानत्वमिति ब्रह्मवादः । तस्मात्
५ प्रत्यक्षानुमानाभ्यामिदानीन्तनभौतिकयज्ञपदार्थेषु भगवद्वयवावेशस्तथा-मुत्रापि देवादिलोके । तस्माद्दैविकः पदार्थः सर्वोऽप्याधिदैविको भिन्न इति सिद्धम् ॥ १।३।२८ ॥

साधिकां विशेषोपपत्तिमाह ।

## अत एव च नित्यत्वम् ॥ १।३।२९ ॥

१० अत एवास्मादेव हेतोर्वेदस्य नित्यत्वम् । सर्वप्रपञ्चवैलक्षण्येन। चकाराद् ब्रह्मतुल्यत्वम् । शब्दब्रह्म वेदपुरुष इत्यादिवाक्यत्वम् । अस्या-स्तु सृष्टेर्वेदोपादानस्य सर्वज्ञतया कथनं तन्माहात्म्यनिरूपणार्थम्। बन्धिका ह्येषा । मोचिका तु सा । अत एव ऋषीणामप्यत्र मोहः । निःश्वसितवचनाच्च । तस्याप्ययं प्राणभृतो नित्य इति । अर्थप्राधान्याद्
१५ ब्रह्मविद्या परा विद्या । प्रपञ्चभेदादेव लौकिकवैदिकशब्दव्यवहारभेदौ। तस्मादाधिदैविकप्रतिपादकत्वाद्वेदस्य नित्यत्वम् ॥ १।३।२९ ॥

## समाननामरूपत्वाच्चावृत्तावप्यविरोधो दर्शनात् स्मृतेश्च ॥ १।३।३०॥

एवं शब्दबलविचारेण वेदप्रामाण्यस्य सिद्धये भिन्न एव प्रपञ्चो
२० ह्याधिदैविकः सर्वत्र सिद्धः । इदानीमर्थबलविचारेणोत्तरकाण्डे किंचि-दाशङ्क्य परिह्रियते दार्ढ्यार्थम् । नन्वस्य प्रपञ्चस्यानुकारित्वेन वा स्वीक्रि-यमाणत्वे सृष्टिप्रलययोर्विद्यमानत्वादनित्यसंयोगः प्राप्नोति । तत्राह ।

समाननामरूपत्वादावृत्तावप्यविरोधः । वस्तुतस्तु भगवद्रूपत्वादा-विर्भावतिरोभावेच्छयैव तथात्वात्प्रावृत्तिशङ्कापि । तथापि लोक-

14–C reads प्राधान्यात् for अर्थप्राधान्यात् ।
24–कि. om. तथापि before लोकबुद्ध्यनुसारेण ।

बुद्ध्यनुसारेणावृत्तावपि समाननामरूपत्वात् । समुद्रे जलप्रक्षेपवत् ।
पुनरुपादाने तदेवेति निश्चयाभावेपि नामरूपयोस्तुल्यत्वादन्यस्य भेदकस्या-
भावान्नानित्यसंयोगविरोधः। कुतः। दर्शनात्। दृश्यते हि तथा। वेद-
पितृमातृस्त्रीभर्तृशरीरगङ्गादिषु तदेवेदमिति व्यवहारस्य सिद्धत्वात्। सूर्या-
५ चन्द्रमसौ धाता यथापूर्वमकल्पयत्। दिवं च पृथिवीं चान्तरिक्षमथो सुवः
( तै. आ. १०।१।२ ) इति। स्मृतेश्च । सर्ववेदमयेनेदमात्मनात्मात्म-
योनिना। प्रजाः सृज यथापूर्वं याश्च मय्यनुशेरते। ( भा. ३।९।४३ )
इत्यादिस्मृतेः। सर्वस्मृतेश्च।

**ऋषीणां पूर्वचरितस्मरणं स्मृतिरुच्यते।**

१० इति। अतोर्थबलविचारेपि पदार्थानां नित्यत्वान्न वेदस्यानित्य-
संबन्धः॥ १।३।३०॥

अर्थबलविचार एवैकदेशेन पूर्वपक्षमाह।

## मध्वादिष्वसंभवादनधिकारं जैमिनिः॥ १।३।३१॥

ननु मध्वादिविद्यासु देवानामनधिकारात्सर्वत्रैवानधिकारः। तथाहि।
१५ असौ वा आदित्यो देवमधु तस्य द्यौरेव ( छां. ३।१।१ ) इत्यादिना
सूर्यस्य देवमधुत्वं प्रतिपादितम्। रश्मीनां वेदत्वं च। तत्र वसुरुद्रादित्य-
मरुत्साध्याः पञ्च देवगणाः स्वमुख्येन मुखेनामृतं दृष्ट्वैव तृप्यन्ति। पञ्च-
विधा एव च देवाः। स्वतः सिद्धं च तेषां तन्मधु। अनुपासकत्वान्न
देवान्तरकल्पना। कृतार्थत्वाच्च। ब्रह्मणोपि देवत्वम्। आदिशब्देन सर्वा
२० एव देवोपासनविद्या गृहीताः। अतस्तेषामुपास्यत्वात्कृतार्थत्वाच्च नाधिकारः।
न हि प्रयोजनव्यतिरेकेण कस्यचित्प्रवृत्तिः संभवति। मोक्षस्याप्यधि-
कारनिवृत्तावुत्तरमार्गवर्तित्वात्स्वत एव सिद्धिः। यावदधिकारम् ( ब्र.
सू. ३।३।३२ ) इति न्यायात्। वसूनयाजयदित्यत्रापि भाविन्येव
संज्ञा। तस्मान्मनुष्याधिकारकमेव ज्ञानं कर्म चेति न देवानामधिकार

4–A om. मातृ after पितृ।
5–घ reads स्वः for सुवः।

इति जैमिनिराचार्यो मन्यते । मनुष्याणामेव ज्ञानकर्मणोस्तरतमभाववतां तत्तद्भूपभोगानन्तरं मोक्षप्राप्तिरिति ॥ १।३।३१ ॥

ज्योतिषि भावाच्च ॥ १।३।३२ ॥

किं च । तेषां सर्वेषामनधिकारः प्रत्यक्षत एव दृश्यते । सर्वे हि
५ नक्षत्रादिरूपेण महाभोगवन्तो जगदवभासकत्वेन ज्योतिश्चक्रे दृश्यन्ते ।
अग्निः पुच्छस्य प्रथमं काण्डम् ( तै. आ. २।१९ ) इत्यादिश्रुतेश्च । न हि
तादृशां परमैश्वर्यवतां सर्वोपास्यानां मोक्षदातॄणां ज्ञानकर्मणोः कश्चनोप-
योगोस्ति । तस्मादनधिकार एव देवानामित्येवं प्राप्ते ॥ १।३।३२ ॥

उच्यते ।

१० भावं तु बादरायणोस्ति हि ॥ १।३।३३ ॥

तुशब्दः पक्षं व्यावर्तयति । भावं देवानामधिकारस्य सद्भावम् ।
बादरायण आचार्यः । गौणसिद्धान्ताभावाय स्वनामग्रहणम् । किमार्षेण
ज्ञानेन । तथा सति तुल्यत्वमत आह । अस्ति हि । अस्ति वेदे प्रजा-
पतिरकामयत प्रजायेयेति । स एतदग्निहोत्रं मिथुनमपश्यत् । तदुदिते
१५ सूर्येऽजुहोत् ( तै. ब्रा. २।१।२ ) इति । देवा वै सत्रमासत ( तै. सं. २।३।३ )
इत्यादिभिः कर्माधिकारो निश्चितः । तथा यो देवानां प्रत्यबुध्यत स एव
तदभवत् ( बृ. १।४।१० ) इत्यादि । तथेन्द्रप्रजापतिसंवादे ब्रह्मा देवा-
नाम् ( तै. सं. ३।४।११ ) इति च । एवंमवंविधवाक्यैर्देवानामप्यधि-
कारोस्ति । यत्र च पुनर्देवानां फलभोग एव प्रतीयते न करणं तत्रापि
२० तेषामधिकारोङ्गीकर्तव्यः । हि युक्तोयमर्थः । एते हि वसव आधिदैविक-
भगवदवयवभूताः । अनशनात् । अन्यथा वसुत्वादिविरोधः । यद्वसूनां
प्रातः सवनम् ( तै. ब्रा. १।५।११ ) इत्यादिवत् । न हि जीवविशेषा
दृष्ट्वा तृप्यन्ति । तस्मादिदं ब्रह्मप्रकरणमेव । योपि देवोपासकत्वप्रतीयते
स भगवदंश एवाधिदैविकः । न वा पूर्वकल्पेन निर्णयः । तथा सति
२५ तेषामभावादनुपास्यत्वम् । अनित्यता च वेदस्य स्यात् । तस्माद् देवा-
नामप्यधिकार इति शब्दबलनिचार एव युक्त इति सिद्धम् ॥ १।३।३३॥८॥

## ९ शुगस्येत्यधिकरणम् ।

### शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥ १।३।३४ ॥

इदानीं शूद्रस्याधिकारो निराक्रियते । यथा कर्मणि—एतया निषादस्थपतिं याजयेत् । सा हि तस्येष्टिः ( आ. श्रौ. सू. ९।१४।१२ ) ५ इति श्रुतेर्हविष्कृदाधावेति शूद्रस्येति लिङ्गाद् दोहादौ च शूद्रस्याधिकारः। एवमिहापि संवर्गविद्यायां शूद्रस्याधिकार इति तन्निराकरणार्थमिदमधिकरणमारभ्यते । एवं श्रूयते । जानश्रुतिर्ह पौत्रायणः ( छां. ४।२।३ ) इत्यत्र हंसवाक्यश्रवणानन्तरं सयुग्वनो रैकस्य समीपं गतो जानश्रुतिः पौत्रायण रैकेमानि षट्शतानि गवामित्यादिना देवतां पृष्टः प्रत्युवाच । १० अह हारेत्वा शूद्र तवैव सह गोभिरस्तु ( छां ४।२।३ ) इत्यादिना जानश्रुतिं शूद्रशब्देन संबोध्य पुनश्च शूद्रानेन मुखेनेत्युक्त्वा संवर्गविद्यामुपदिष्टवान् । अतोत्र विद्यायां जातिशूद्रस्याप्यधिकार इत्याशङ्क्य परिहरति । नात्र शूद्रशब्दो जातिशूद्रवाची । किंतु मत्सरयुक्तस्त्वमत्र नाधिकारीति तथा संबोधनम् । तदाह । शुक् शोकः अस्य जानश्रुतेः सम१५ जनि । तत्र हेतुः । तदनादरश्रवणात् । तस्माद्धंसादनादरस्य श्रवणात् । कं वर एनमेतत् सन्तं सयुग्वानमिव रैकमात्थेति स्वापकर्षश्रवणात् । किमतो यद्येवमत आह ।

तदाद्रवणात् । तत्तदनन्तरमाद्रवणात् । शुचमन्वाद्रवतीति शूद्रः । परोक्षवादार्थं दीर्घः सर्वज्ञत्वख्यापनाय । रूढिर्योगमपहरतीति न्यायात्क२० थमेवमत आह । सूच्यते हि । स्वस्य सर्वज्ञत्वं सूच्यते । हंसवाक्याच्छोके जाते त्वमागत इति । अन्यथा प्रपन्नस्य धिक्कारवचनमनर्थकं स्यात् । युक्तश्चायमर्थो ब्रह्मविदः सर्वज्ञतेति । तस्य मात्सर्यनिराकरणं वा संबोधनफलम् । तस्माच्छुचं प्रत्याद्रवणादेव शूद्रपदप्रयोगो न जातिशूद्रवाची ॥ १।३।३४ ॥

२५ कुत एवमत आह ।

### क्षत्रियत्वावगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ १।३।३५ ॥

जानश्रुतेः पौत्रायणस्य क्षत्रियत्वमवगम्यते । गोनिष्करथकन्या-

दानात् । न हि क्षत्तृप्रभृतयो ह्येते क्षत्रियादन्यस्य संभवन्ति । राजधर्मत्वात् । न ह्यन्यो ब्राह्मणाय भार्यात्वेन कन्यां दातुं शक्नोति । न च प्रथमहंसवाक्यं शूद्रे संगच्छते । उपदेशाच्चेति चकारार्थः । तथापि संवर्गविद्यायां शूद्रस्यैवाधिकारं मन्वानस्य निराकरणार्थं हेतुमाह ।

५　उत्तरत्र चैत्ररथेन लिङ्गात् । अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिम् ( छां. ४।३।५ ) इत्युत्तरत्र ब्राह्मणक्षत्रियौ तौ निर्दिष्टौ । कक्षा सेना यस्येति । कक्षसेनस्यापत्यं काक्षसेनिरिति । अस्य व्याख्यानं चैत्ररथ इति । चित्रा रथा यस्य तस्यापत्यं तेन चैत्ररथेन । कक्षारूपा रथा इति व्याख्यानम् । एतेन वै चित्ररथं कापेया अयाजयन् ( तां. ब्रा. २०।१२।५ )
१० इति । शौनकश्च कापेयो याजकश्च । याज्यश्च चित्ररथस्य पुत्रः काक्षसेनिरिति । ब्रह्मचारी ब्रह्मवित् । इमौ तु संवर्गविद्योपासकौ । प्राणाय हि भिक्षा । तस्माच्च ददतुः । उभावपि भोक्तौ भगवतः । तेन प्रकृतेप्येतौ गुरुशिष्यौ ब्राह्मणक्षत्रियावेवेति गम्यते । तस्मान्न जातिशूद्रः संवर्गविद्यायामधिकारी ॥ १।३।३५ ॥

१५　**संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ १।३।३६ ॥**

इदानीं शूद्रस्य कथंचिदपि ब्रह्मविद्यायामधिकारश्चेदत्रापि कल्पेत । तत्तु नास्ति । सर्वत्र संस्कारपरामर्शात् । उपनयनसंस्कारः सर्वत्र परामृश्यते । तं होपनिन्ये । ( श. ब्रा. ११।५।३।१३ ) अधीहि भगव इति होपससाद । ( छां. ७।१।१ ) तान्हानुपनीय ( छां. ५।११।७ ) इत्यादि-
२० प्रदेशेषूपनयनपूर्वकमेव विद्यादानं प्रतीयते । शूद्रस्य तु तदभावाभिलापात् । चतुर्थ एकजातिस्तु शूद्र इति—न शूद्रे पातकं किंचिन्न च संस्कारमर्हति ( म. स्मृ. १०।१२ ) इति शूद्रस्य संस्कारनिषेधात् । चकारात्—न शूद्राय मतिं दद्यात् ( म. स्मृ. ४।८० ) इति निषेधात् ॥ १।३।३६ ॥

**तदभावनिर्धारणे च प्रवृत्तेः ॥ १।३।३७ ॥**

२५　इतश्च न शूद्रस्य सर्वथाधिकारः । तदभावनिर्धारणे शूद्रत्वाभावनिर्धारण एव गुरुशिष्यभावप्रवृत्तेः । सत्यकामो ह जाबालः ( छां. ४।४।१ )

इत्यत्र गौतमः सत्यकाममुपनिन्ये । नैतदब्राह्मणो विवेक्तुमर्हति (छां. ४।४।५) इति सत्यवचनेन शूद्राभावं ज्ञात्वैव। चकार एवार्थे। चकारेण निर्द्धारणमुभयज्ञानार्थम् । वर्णितं शूद्राभावं च । तस्मान्न शूद्रस्याधिकारः ॥ १।३।३७ ॥

५ **श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥ १।३।३८ ॥**

दूरे ह्यधिकारचिन्ता । वेदस्य श्रवणमध्ययनमर्थज्ञानं त्रयमपि तस्य प्रतिषिद्धम्। तत्संनिधावन्यस्य च । अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रपूरणम् इति। पद्यु ह वा एतच्छ्मशानं यच्छूद्रः। तस्माच्छूद्रसामीप्ये नाध्येतव्यम् इति। उदाहरणे जिव्हाच्छेदो धारणे शरीरभेदः १० (गौ. सू. १२।४) इति। दोहादौ शूद्रसंबन्धे मन्त्राणामभाव एव।

स्मृतियुक्त्यापि वेदार्थे न शूद्राधिकार इत्याह। स्मृतेश्च। वेदाक्षरविचारेण शूद्रः पतति तत्क्षणात्। पा. स्मृ. १।७३ इति। चकारस्त्वधिकरणसंपूर्णत्वद्योतकः। स्मार्तपौराणिकज्ञानादौ तु कारणविशेषेण शूद्रयोनिगतानां महतामधिकारः। तत्रापि न कर्मजातिशूद्राणाम् । तस्मान्नास्ति १५ वैदिके क्वचिदपि शूद्राधिकार इति स्थितम् ॥ १।३।३८ ॥ ९ ॥

---

## १० कम्पनाधिकरणम् ।

**कम्पनात् ॥ १।३।३९ ॥**

**कठवल्लीविचारेण निश्चिता ह्यधिकारिणः।**
**वाक्यान्तरं च तत्रत्यं चिन्त्यते प्रलयावधि ॥ २१ ॥**

२० यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम्। महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते भवन्ति (कठ. २।६।२) इति। अत्र प्राणवज्रोद्यमनशब्दाभ्यां संदेहः। किं प्राणोपासना इन्द्रोपासना वा ब्रह्मवाक्यं वेति। बाधकशब्दस्य श्रुतित्वान्न प्रकरणेन निर्णयः । अमृतं वै प्राणाः

---

13–A reads कारणवशेन for कारणविशेषेण ।

( तै. सं. २।६।८ ) इति श्रुतेः । प्राणोपासकस्याप्यमृतत्वप्राप्तिर्युज्यते । इन्द्रस्याप्यमरत्वात् । वज्रमुद्यतमिति प्राणपक्षे वियोजने मरणजनकत्वाद्भयरूपत्वम् । इन्द्रपक्षे बलाभिमानित्वात्प्राणत्वम् । तस्मात्प्राण इन्द्रो वा वाक्यार्थ इत्येवं प्राप्ते । उच्यते ।

५ कम्पनात् । कम्पनमत्र प्रथमवाक्यार्थः । स च भयहेतुकः । अविशेषेण सर्वजगत्कम्पनं भगवद्धेतुकमेव भवति । नचैकान्ततो वज्रं इन्द्रस्यैवायुधं भवति । अग्निहृदयत्वात् । तस्य तान्तस्य हृदयमाच्छिद्य साशानिरभवत् ( तै. ब्रा. १।१।३ ) इति श्रुतेः । तस्मान्मारकरूपमेवं भगवतः । प्राणशब्दवाच्यत्वं तु पूर्वमेव सिद्धम् । तस्मात्सर्वजगत्कम्पनं १० भगवत्कृतमिति भगवानेव वाक्यार्थः ॥ १।३।३९॥१० ॥

## ११ ज्योतिर्दर्शनाधिकरणम् ।

### ज्योतिर्दर्शनात् ॥ १।३।४० ॥

स एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरभिसंपद्य स्वेन रूपेणाभिनिष्पद्यते ( छां. ८।१२।३ ) इति । तत्र संशयः । परं ज्योतिर्म- १५ हाभूतरूपं ब्रह्म वेति ।

ब्रह्मधर्माश्च ये केचित् सिद्धा युक्त्यापि साधिताः ।
निर्णायकास्ततोऽप्यन्ये चत्वारोऽत्र निरूपिताः ॥ २२ ॥

तत्र रूढ्योपपत्त्या च महाभूतमेव ज्योतिरित्येवं प्राप्ते । उच्यते । ज्योतिर्ब्रह्मैव । कुतः । दर्शनात् । दर्शनं सर्वत्र दर्शनं न्याय इति २० यावत् । सुषुप्तौ सर्वत्र—सता सोम्य तदा संपन्नो भवति । सति संपद्य न विदुः । सति संपद्यामहे ( छां. ६।९।२ ) इति । अहरहर्ब्रह्मलोकं गच्छन्तीत्यादिप्रदेशेषु ब्रह्मसंपत्तिरेवोक्ता । अत्रापि संप्रसादवचनात्परं ज्योतिर्ब्रह्मैव । तस्माद्यः कश्चन शब्दो ब्रह्मस्थाने पठितस्तद्वाचक एवेति ॥ १।३।४०॥११ ॥

1-A, C and S read अमृतप्राप्तिः for अमृतत्वप्राप्तिः ।
19-B and S om. दर्शनं before सर्वत्र ।

## १२ अर्थान्तरव्यपदेशाधिकरणम् ।

## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ १।३।४१ ॥

आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म ( छां. ८।१४।१ ) इति श्रूयते । तत्राकाशशब्दे संदेहः । भूताकाशः परमात्मा ५ वेति । नामरूपनिर्वाहमात्रत्वमवकाशदानाद् भूताकाशस्यापि भवतीति न ब्रह्मपरत्वम् । अन्यस्य च नियामकस्याभावादित्येवं प्राप्ते ।

उच्यते । आकाशः परमात्मा । अर्थान्तरत्वादिव्यपदेशात् । यद् भूताकाशस्य प्रयोजनं श्रुतिसिद्धं तस्मादन्यस्य व्यपदेशः कार्यान्तरादिव्यपदेशश्च । यत्रैव हि सिद्धवत्कारणोत्कृष्टधर्मा अतदीयास्तदेव ब्रह्मेति । १० नापि नामरूपनिर्वाह आकाशस्य माहात्म्यहेतुर्भवति । वै निश्चयेनेति सिद्धवत्कारान्नोपासनापरत्वम् । निर्वाहस्य ब्रह्मधर्मत्वं न श्रुत्यन्तरासिद्धमिति विचारः । अर्थापत्तिसूचकस्त्वयमेव न्याय इति । तस्माद् यत्रैवातद्धर्मकथनमन्यवाक्यस्य तत्रैव ब्रह्मपरत्वमिति सिद्धम् ॥ १।३।४१ ॥ १२ ॥

---

## १३ सुषुप्त्युत्क्रान्त्योरित्यधिकरणम् ।

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥ १।३।४२ ॥

२० बृहदारण्यके ज्योतिर्ब्राह्मणे—याज्ञवल्क्य किंज्योतिरयं पुरुषः ( बृ. ४।३।२ ) इत्यारभ्य—अभयं ह वै ब्रह्म भवति य एवं वेद इत्यन्ते संदेहः । किं ब्रह्मवाक्यमेतद उत जीवस्येति । जीवस्य ब्रह्मत्वप्रतिपादने जीववाक्यत्वम् । स्वातन्त्र्येण ब्रह्मण एव ज्ञानकर्मत्वे ब्रह्मवाक्यत्वमिति ।

१५ यद्यप्यर्थज्ञाने न संदेहस्तथापि नियामकं हेतुमाह । भेदेनेति । तस्यायमर्थः । किंज्योतिरयं जीवः ( बृ. ४।३।२ ) इति प्रश्ने सूर्यचन्द्राग्निवाङ्निराकरणानन्तरमात्मज्योतिः । आत्मा भगवानेवास्य ज्योतिरिति उत्तरानन्तरं—कतम आत्मा ( बृ. ४।३।७ ) इति प्रश्ने योऽयं विज्ञानमयो ज्ञानरूप इन्द्रियेषु हृदि च प्रकाशमान इत्युत्तरे जीवोऽप्येतादृश

12 क and 8 om. from अर्थापत्ति to सिद्धम् after विचारः ।

इति तन्निराकरणार्थं स समानः सन् जीवतुल्यः सन् क्रीडतीत्याह।
तस्योभयधर्मा अप्युच्यन्ते क्रियामात्रस्य तन्मूलत्वाय। तत्र हि चत्वारि
स्थानानि। अयं लोकः परलोकः स्वप्न इति त्रयं जीवसमानतयानुभवति
तत्र स्वप्नस्य मिथ्यात्वाद् द्वयमेव। सुषुप्तं न चतुर्थम्। जीवस्य तु मोक्षोपि।
५ तत्रास्मिंल्लोके जीवस्यानीशित्वं प्रत्यक्षसिद्धम्। मोक्षे त्वैक्यम्।
स्वप्नस्तु माया। अतः परं द्वयमवशिष्यते। तत्र श्रुत्यैव भेदः प्रतिपादितः।
तत्र भगवतो जीवसाम्येन्तःकरणेन्द्रियधर्माः प्राप्नुवन्तीति तत्रानुकरण-
माह। ध्यायतीव लेलायतीव (बृ.४।३।७) इति बुद्धिसहितः स्वयमेव स्वप्नो
भूत्वा जागरणानुसंधानं न करोति। एवं जाग्रत्स्वापौ ब्रह्मणो लोकद्वयं
१० जीवस्य स्थानत्रयमाह स वा अयमिति काण्डिकाद्वयेन। स इति पूर्व-
प्रक्रान्तो जीवः। जीवस्य शरीरेन्द्रियाणां दुःखदातृत्वमेव। अथेति भग-
वच्चरित्रम्। स तु स्वस्यानन्दं जीवस्य दुःखं च पश्यति। भेदोक्षशब्दात्।
जीवस्यानीशित्वाद्येन प्रकारेणायं जीवः परलोके गच्छति तमुपायं भग-
वानेव करोति। अथो खल्विति भगवतो न जागरितस्वप्नभेदोस्तीति पक्षः।
१५ परं स्वयंज्योतिष्ट्वं तत्र स्पष्टम्। एतावद्दूरं भगवच्चरित्रमङ्गीकृत्य जीवविमो-
क्षार्थं प्रश्नः। स वा एष इति जीववाक्यम्। तस्य सहजः संगो नास्तीति
स्वप्नसंगभावं प्रत्यक्षतः प्रदर्शयन्नसंगत्वमाह। तावतापि जागरणावस्थायाम-
संगत्वज्ञानाय पुनः प्रश्नः। तत्र मत्स्यदृष्टान्तोवस्थाभेदज्ञानाय क्रिया-
ज्ञानप्रधानः। श्येनसुपर्णदृष्टान्तस्तु सुषुप्तौ भगवत्स्वरूपप्राप्त्यैवस्थान्तः।
२० यत्रेति च भगवान्। पञ्चवर्णनाडीकृत एवास्य क्लेशो भगवत्कृत
एवानन्द इति स्वप्नानन्दो भगवद्रूपः परमो लोकः। सुषुप्तिस्त्वकामरूपो
भगवान्। अत्र ज्ञानाभावादुभयोः स्पष्टतया भेदनिर्देशः शारीरः प्राज्ञ
इति। नाड्याच्छादनाभावोतिच्छन्दः। तत्र भगवत्स्वरूपं गतस्य बाह्ये-
न्द्रियधर्माभावमाह विजानीयादित्यन्तेन। बाह्येन्द्रियाणां सलिलत्वमिति
२५ पूर्वोपपत्तिः। एष ब्रह्मलोक इत्यारभ्य अनुशशासेतदमृतमित्यन्तेनानन्दरूपो
भगवान् प्रतिपादितः फलत्वाय। एतावतोभयासंगः प्रतिपादितः।

तस्यानुभवारूढत्वाय पुनः प्रश्नः। दर्शनादर्शनावापोद्वापाभ्यां
सिद्धम्—असंगो ह्ययं पुरुषः (बृ. ४।३।१५) इति। एवं जीवं सुषुप्तौ

भगवन्तं च ज्ञात्वा मोक्षोपायं पृच्छति । तत्र याज्ञवल्क्यस्य भयं जातं सुबुद्धिरियं निर्बन्धेनापि सर्वं ज्ञास्यतीति जीवब्रह्मधर्मानेकीकृत्य जीवोपक्रमेण ब्रह्मोपसंहारेणाह । तत्र स यत्रेति जीवस्य मूर्च्छोपतापावस्था । तद्यथा अन इति मरणावस्था । तत्र भगवानेवैनं लोकान्तरं नयति । तद्यथा ५ राजानमिति भगवत्संमाननम् । एवंविदमिति वचनात् । जीवस्तु नैवंवित् । सिद्धवद्वचनान्न ज्ञानविधिः । वाक्यभेदप्रसंगाच्च । स यत्रेति जीवे मोहो. धिकः । अथैनमेते प्राणा इति भगवच्चारित्रं संपद्यत इत्यन्तेन । श्लोके तद्ब्रह्मास्य जीवस्याकामयमानस्य भगवतः स्वरूपं पूर्वमेवोक्तमनुवदति ।

भगवन्निर्गमने हि प्राणानां निर्गमनात्तस्य नेच्छाधीनत्वात्तदभाव १० इन्द्रियाणि सुषुम्नौ तत्रैव समवलीयन्ते । ब्रह्मैव सन् कूटस्थः सन् । अपिः समुच्चये । सह स्थिते जीवे ब्रह्माविर्भवतीत्यर्थः । जीवे ब्रह्माविर्भावो न संगत इति तत्प्रतिपादनार्थं श्लोकः । जीवोपदेशप्रकरणाभावेन सिद्धवद्वचनान्न जीवन्मुक्तावस्था । नाप्यसंप्रज्ञातसमाधिः । मतान्तरत्वात् । ब्रह्मप्रकरणान्न जीवस्य सद्योमुक्तिः फलम् । उत्क्रमण एव ब्राह्मणस्याप्युक्त- १५ त्वात् । तद्यथेति सुषुप्तिशरीरम् । अनस्थिक इत्यादि सम्राडित्यन्तमुपसंहारः ।

श्लोका अत्र त्रयोदश सर्वनिर्द्धारकाः । आद्यो ब्रह्मविद्गतेः । एष इति सुषुम्नौ नाडीत्वात् पञ्च वर्णाः । अन्धं तमः ( ई. १२ ) इति द्वाभ्यामनेवंविदो निन्दा । तदेव सन्त इति बुद्धिमतां वचनम् । आत्मानमिति वैराग्यम् । यस्यानुवित्तिरिति नवभिर्ब्रह्मस्तुतिः । तद्विज्ञानं च । पुनरेतदेव २० स्पष्टतयोपदिशति । स वा अयमात्मा ( बृ. २।५।१५ ) इत्यादि । अभयं वै जनक प्राप्तोसि ( बृ. ४।२।४ ) इत्यन्तम् । काण्वानां क्वचित्पाठभेदे-ऽप्ययमेवार्थः । अत्र प्रकरणे जीवो वाच्य इति प्राप्ते आभधायत । ब्रह्मैव

---

3 Com. तत्र before स । A om. स after तत्र ।
5 B reads सन्मानम for संमाननम् । क reads संमानम् for संमाननम ।
10 A and Com. अत्र before त्रयोदश ।
11 B, E and S read सुषुम्ना for सुषुम्नौ ।

प्रकरणार्थः । सुषुप्त्युत्क्रान्त्योर्भेदेन व्यपदेशात् । आकाशवद् ब्रह्मनिर्धार एव युक्तः ॥ १।३।४२ ॥

## पत्यादिशब्देभ्यः ॥ १।३।४३ ॥

किं च । सर्वस्य वशी ( बृ. ४।४।२२ ) इत्यादिशब्देभ्यः स्पष्टमेव ब्रह्मप्रकरणमिति ॥ १।३।४३।१३ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये प्रथमाध्यायस्य तृतीयः पादः ॥ १।३ ॥

---

# प्रथमाध्याये चतुर्थः पादः ।

## १ आनुमानिकाधिकरणम्

### आनुमानिकमप्येकेषामिति चेन्न शरीररूपकविन्यस्तगृहीतेर्दर्शयति च ॥ १।४।१ ॥

एवं सर्वेषां वेदान्तानां ब्रह्मपरत्वे निर्णीते केचिद्वेदार्थाज्ञानात् क्वचिद्वेदभागे कापिलमतानुसारिपदार्थदर्शनेन तस्यापि वेदमूलकत्वं वदन्ति। तन्निराकरणाय चतुर्थः पाद आरभ्यते। तत्र—ईक्षतेर्नाशब्दम् ( ब्र. सू. १।१।५ ) इति सांख्यमतमशब्दत्वादिति निवारितम्। वेदेन प्रतिपादितमिति तत्राशङ्क्यते ।

आनुमानिकमप्येकेषाम् । एकेषां शाखिनां शाखासु सांख्यपरिकल्पितप्रकृत्यादि श्रूयते ।

इन्द्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः ।<br>
मनसस्तु परा बुद्धिर्बुद्धेरात्मा महान् परः ॥<br>
महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।<br>
पुरुषान्न परं किंचित्सा काष्ठा सा परा गतिः ( कठ. १।३।१०-११ )

इति काठके श्रूयते। तत्र बुद्धेरात्माहंकारः। ततो महान्महत्तत्त्वम्। ततोऽव्यक्तं प्रकृतिः ततः पुरुष इति। न ह्यहंकारादयः पदार्था ब्रह्मवादे संभ-

वन्ति । तस्मादेवंजातीयकेषु तन्मतपदार्थानां श्रवणान्मायाप्रकृत्यविद्यावादा अपि श्रौता इति चेन्न शब्दसाम्यमात्रेण तन्मतं न सिध्यति ।

**संदिग्धानां पदार्थानां पौर्वापर्येण निर्णयः ।**
**न तु संदिग्धवाक्येन मतैर्व्याकुलतोचिता ॥ २३ ॥**

अत्र हि पूर्वम् ।

आत्मानं रथिनं विद्धि शरीरं रथमेव तु ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥
इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥ ( कठ. १।३।३-४ )

तदनु चत्वारि वाक्यानि । यस्त्वविज्ञानवानित्यादि । तदन्विन्द्रियेभ्यः परा इति । तत्र पूर्वसंबन्ध एवार्थ उचितः । तमाह ।

शरीररूपकविन्यस्तगृहीतेः । शरीरेण रूप्यन्ते ये शरीरेन्द्रियादयस्ते विन्यस्ता यत्र रूपकभावेन रथादिषु तेषामेवात्र गृहीतेर्ग्रहणम् । अन्यथा प्रकृतहानाप्रकृतपरिग्रहापत्तिः ।

१५ **जीवप्रकरणं ह्येतन्मुक्त्युपायोऽस्य रूप्यते ।**
**योग्यं शरीरमारुह्य गच्छेदिति हरेः पदम् ॥ २४ ॥**

तत्र जीवस्य ब्रह्मप्राप्तौ मुख्यं साधनं शरीरम् । स रथः । सर्वसामग्रीसहितापराधीनयानत्वात् । रथस्तु हयाधीनः । हयाश्च स्वबुद्ध्यधीनाः । सा च प्रग्रहाधीना । स च सारथ्यधीनः । स च स्वबुद्ध्यधीनः । सा च मार्गा-
२० धीना । स च प्राप्याधीन इति । एवं ज्ञात्वा युक्तसामग्रीकस्तद्देशं प्राप्नोति । तत्रेन्द्रियाणामात्मा विषयाः । ते च मनसा सम्यक्त्वेन भावितास्तथा भवन्ति । विरक्तेन्द्रियाणामनथात्वात् । बुद्धेरात्मा विज्ञानम् । तद्ब्रह्मविषयकं महद् भवति । ततः परमव्यक्तं न प्रकटं भगवत्कृपैव । सा तु भगवदधीना न साधनान्तराधीना । स च भगवान्स्वाधीन इति । एवमेवार्थस्तस्योचितः ।
२५ किंच । दर्शयति स्वयमेवेममर्थम् ।

एष सर्वेषु भूतेषु गूढोत्मा न प्रकाशते ।

दृश्यते त्वग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः ॥ (कठ. १।३।१२)

इति

सूक्ष्मयोपनिषदनुसारिण्या बुद्ध्या । भगवज्ज्ञानं हि तत्प्राप्तिरिति। चकारात्—ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ( भ. गी. १८।५५)
५ इति स्मृतिर्गृहीता । तस्मात्साधनोपदेशान्न सांख्यमतमिह विवक्षितामिति ॥ १।४।१ ॥

## सूक्ष्मं तु तदर्हत्वात् ॥ १।४।२ ॥

नन्वव्यक्तशब्देन न भगवत्कृपा वक्तुं शक्या । धर्मिप्रवाहादित्याशङ्क्य परिहरति तुशब्दः । सूक्ष्मं तद् ब्रह्मैव । धर्मधर्मिणोरभेदात् । अव्यक्तशब्देन
१० हि सूक्ष्ममुच्यते । तदेव हि सर्वप्रकारेण न व्यज्यते । अर्हत्वात् । तदेवार्हं योग्यम् । उभयत्राप्ययं हेतुः । तस्माद्धर्मधर्मिणोरभेदाद् भगवानेव सूक्ष्ममिति तत्कृपैवाव्यक्तवाच्या ॥ १।४।२ ॥

## तदधीनत्वादर्थवत् ॥ १।४।३ ॥

ननु धर्मित्वे परत्वमनुपपन्नम् । अन्यथा पूर्वोक्तो दोष इत्यत
१५ आह । अभेदेपि कृपायास्तदधीनत्वात्परत्वम् । तत्र दृष्टान्तः । अर्थवत् । अर्थः पुरुषार्थः फलं तद्वत् । ब्रह्मविदाप्नोति परम् ( तै. २ । १ ) इत्यत्रैकस्यैव ब्रह्मणः सच्चिद्रूपेण विषयत्वमानन्दरूपेण फलत्वमिति । तथैवाक्षरपुरुषोत्तमविभागोपि । स्वधर्मा अपि स्वाधीनाः । स्वयमपि स्वाधीन इति । तथा कृपाविष्टः साधनमानन्दरूपः फलमिति ।

२० अथवाव्यक्तं सच्चिद्रूपमक्षरमेवास्तु । तस्मिन्सति विज्ञानस्य विषयाधीनत्वमर्थः । एतेनान्येपि सर्वविप्लववादिनो निराकृता वेदितव्याः । असंबद्धाभिलापाच्च ।

अनेकरूढिशब्दानां वाच्यं ब्रह्मैव नापरम् ।
शक्तितश्चेत्तथा ब्रूयुस्ते सन्मार्गाद् बहिष्कृताः ॥ २५ ॥

२५ तस्मादिन्द्रियेभ्यः परवाक्ये नानुमानिकं किंचिदस्ति ॥ १।४।३ ॥

---

21–A, D and E read संप्लव for विप्लव ।
24–A and C read शाक्तास्तांस्तथा for शक्तितश्चेत्तथा ।

## ज्ञेयत्वावचनाच्च ॥ १।४।४ ॥

पूर्वापरसंबन्धेनार्थः प्रतिपादितः । केवलैतद्वाक्यविचारेऽपि न तदभीष्टं प्रकृतिरूपमव्यक्तं सिध्यतीत्याह । अत्र हि वाक्येऽव्यक्तं ज्ञेयत्वेन नोक्तं तेषां तु प्रकृतिपुरुषान्तरं ज्ञातव्यम् । न हि सिद्धवन्मात्रनिर्देशे तेषां ५ मते पुरुषार्थः सिध्यति । अपुरुषार्थसाधनत्वे वासंबद्धार्थवाक्यत्वमेव स्यात् । परत्ववचनं चासंगतम् । श्लिष्टत्वादुभयोरिति चकारार्थः । अयं हेतुः पूर्वमुक्तोऽप्यवसरे स्मारितः । तस्मादव्यक्तं न प्रकृतिः ॥ १।४।४॥

## वदतीति चेन्न प्राज्ञो हि प्रकरणात् ॥ १।४।५ ॥

ननु ज्ञेयत्ववचनमसिद्धम् । पूर्वं निर्देशमात्रमुक्त्वाग्रे ज्ञेयत्ववचनात्

१० अशब्दमस्पर्शमरूपमव्ययं तथारसं नित्यमगन्धवच्च यत् ।

अनाद्यनन्तं महतः परं ध्रुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते ॥

(कठ. २।३।१५)

इत्युत्तरवाक्ये वदतीति चेन्न । प्रकरणस्य नियामकत्वेनैकवाक्यत्वे द्वयोः सर्वैकवाक्यत्वेन प्राज्ञः परमात्मैव निचाय्यः । न तु द्वयोरेक- १५ वाक्यत्वं वक्तुं शक्यम् । तस्मात्प्रकरणस्य नियामकत्वे शब्दवाक्यमपि भगवत्परमेव ॥ १।४।५॥

## त्रयाणामेवमुपन्यासः प्रश्नश्च ॥ १।४।६ ॥

ननु न वयं सर्वमेकं प्रकरणमिति वदामः । किंतु—इन्द्रियेभ्यः पराः (कठ. १।३।१०) इत्यारभ्य—नाचिकेतमुपाख्यानम् (कठ. १।३।१६) २० इत्यन्तं भिन्नं प्रकरणम् । तत्र प्रथमं पदार्थनिर्देशः । तदनु—एष सर्वेषु भूतेषु (कठ. १।३।१२) इति पुरुषज्ञानम् । अशब्दमिति तु प्रकृति- ज्ञानम् । तस्मादेतत्प्रकरणे सांख्यमतनिरूपणादशब्दत्वमसिद्धमित्याशङ्क्य परिहरति ।

त्रयाणामेवमुपन्यासः प्रश्नश्च । अस्मदुक्तव्याख्याने त्रिप्रकरणत्व- २५ मन्यथा चतुष्प्रकरणत्वं स्यात् । तृतीया चैषा वल्ली । स त्वमग्निं स्वर्गमध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यम् (कठ. १।१।१३) इति प्रथमः प्रश्नः ।

प्रेतं ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नाचिकेत प्रजानन् (कठ. १।१।१४) इत्याद्युत्तरम्। येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके। (कठ. १।१।२०) इति द्वितीयः प्रश्नः। देवैरत्रापि (कठ. १।१।२२) इत्यग्र उत्तरम्। अन्यत्र धर्मादन्यत्राधर्माद् (कठ. १।२।१४) इति
५ तृतीयः प्रश्नः। सर्वे वेदा यत्पदमामनन्ति (कठ. १।२।१५) इत्यादिनोत्तरम्। एवमग्निजीवब्रह्मणां प्रश्नोत्तराणि। तत्र यदि सांख्यमतनिरूपणीयम् इन्द्रियेभ्यः (कठ. १।३।१०) इत्यादि स्यात् तदा चतुर्थस्याप्युपन्यासः स्यात्। उपन्यासे हेतुः प्रश्नः। अत एव पश्चाद्वचनम्। तस्य प्रकृतेभावादस्मदुक्तरीत्या त्रीण्येव प्रकरणानीति सिद्धम्। उत्तरप्रश्ना-
१० भावार्थं चकारः ॥ १।४।६ ॥

## महद्वच्च ॥ १।४।७ ॥

ननु तथापि मतान्तरेऽन्यत्र संकेतिताः कथं ब्रह्मवादे ब्रह्मपरतया योज्यन्त इत्याशङ्क्य परिहरति। महद्वत्। यथा महच्छब्दः। महान्तं विभुमात्मानं (कठ. १।२।२२) वेदाहमेतं पुरुषं महान्तम् (श्वे.
१५ ३।८) इत्यादौ महच्छब्दो ब्रह्मपरो योगेन। एवमव्यक्तशब्दोऽप्यक्षरवाचक इति। न हि सांख्यमत इव वेदान्तेपि महच्छब्दः प्रथमकार्ये वक्तुं शक्यते। तस्मादिन्द्रियादिवाक्ये सांख्यपरिकल्पितानां पदार्थानां नामापि नास्तीति सिद्धम्। चकारोऽधिकरणसंपूर्णत्वद्योतकः॥ १।४।७॥ १ ॥

---

## २ चमसवदित्यधिकरणम् ।

२० पुनः श्रुत्यन्तरेण प्रत्यवस्थितं निराकर्तुमधिकरणान्तरमारभते।

## चमसवदविशेषात् ॥ १।४।८ ॥

ननु प्रकरणवशात्पूर्वमस्मदुक्तोऽर्थोऽन्यथा वर्णितः। यत्र प्रकरणापेक्षैव नास्ति मन्त्रे तदस्माकं मूलम्। अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां

---

9–क reads प्रकृतेर्भावात for प्रकृतेभावात।

भुक्तभोगामजोऽन्यः ( श्वे. ४।५ ) इति । यद्यपीदं श्वेताश्वतरोपनिषदि चतुर्थाध्याये विद्यमानत्वात्पूर्वापरसंबद्धमेव वक्तव्यम् । तत्र—ब्रह्मवादिनो वदन्ति किंकारणं ब्रह्म ( श्वे. १।१ ) इत्युपक्रम्य ब्रह्मविद्यैव निरूपिता । तथापि पूर्वकाण्डे प्रणवादिमन्त्राणां नायं नियम इति प्रकृतेपि मतान्तर-
५ वाचकत्वस्यैव प्रकृतोपयोग इति शङ्का । ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढाम् ( श्वे. १।३ ) इति च । तथा ज्ञाज्ञौ द्वाव-जावीशानीशावजा ह्येका भोक्तृभोग्यार्थयुक्ता । ( श्वे. १।९ ) अग्रे च— यो योनिं योनिमधितिष्ठत्येको विश्वानि रूपाणि योनीश्च सर्वाः । ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ति जायमानं च पश्येत् ( श्वे. ५।२ )
१० इत्यादि च वाक्यानि कपिलतन्मतवाचकानि वर्तन्त इति सांख्यमतमपि वैदिकमेवेत्येवं प्राप्ते । उच्यते ।

चमसवदविशेषात् । अर्वाग्बिलश्चमस ऊर्ध्वबुध्नस्तस्मिन्यशो निहितं वि-श्वरूपम् । तस्यासत ऋषयः सप्त तीरे वागष्टमी ब्रह्मणा संविदाना(बृ. २।२।३) इति मन्त्रे यथा न विशेषो विधातुं शक्यते । नहि कर्मविशेषं कल्प-
१५ यित्वा तत्रार्वाग्बिलचमसं कल्पयित्वा तत्र यशोरूपं सोमं होतारो मन्त्रेण भक्षयेयुरिति कल्पयितुं शक्यते । तथा प्रकृते रोहितशुक्लकृष्णशब्देन रजः-सत्त्वतमांसि कल्पयित्वा न तद्वशेन सर्वमेव मतं शक्यते कल्पयितुम् । कपिलर्षिवाक्यमप्यनित्यसंयोगभयाल्लित्यर्षेरेवानुवादकम् । तस्मान्न मन्त्र-मात्रेण प्रकरणश्रुत्यन्तरनिरपेक्षेण विशेषः कल्पयितुं शक्यः ॥ १।४।८ ॥

२० **ज्योतिरुपक्रमात्तु तथा ह्यधीयत एके ॥ १।४।९ ॥**

ननु चमसमन्त्रे अर्वाग्बिल ( बृ. २।२।३ ) इति मन्त्रव्याख्या-नमस्ति । शिरश्चमसः प्राणा वै यशः ( बृ. २।२।३ ) प्राणा वा ऋषयः ( बृ. २।२।३ ) इति । नात्र तथा व्याख्यानमस्तीतीमां शङ्कां परिहरति तुशब्दः । अजाशब्देन ज्योतिरेवोच्यते । यथा ह्यजाल्पदोग्ध्री तथेयं
२५ नश्वरसुखदात्री । अग्निसूर्यसोमविद्युद्रूपाद् ब्रह्मणो हंसोक्तचरणरूपा । भगवत्कार्यांशरूपत्वात् । तासां त्रिवृतं त्रिवृतमेकैकां करवाणि ( छां.

६।३।३ ) इति श्रुतेश्च प्रथमोत्पन्ना देवताजाशब्देनोच्यते । तत्र हेतुः । उपक्रमात् । अत्रैवोपक्रमे—तदेवाग्निस्तद्वायुस्तदादित्यस्तदु चन्द्रमाः ( श्वे. ४।२ ) इति । द्वा सुपर्णा ( श्वे. ४।६ ) इति चाग्रे । मध्ये चायं मन्त्रः पूर्वोत्तरसंबद्धमेव वदति । सा मुख्या सृष्टिः । अजद्वयं जीवब्रह्मरूप-
५ मिति । अत्र प्रकरणे न स्पष्ट इति निरूपयति । तथाहि श्रुत्यन्तरे स्पष्ट-मेवाधीयत एके । यदग्ने रोहितꣳ रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य ( छां. ६।४।१ ) इति । एवमग्रेपि कलात्रये । अनेन जीवे-नात्मना ( छां. ६।३।२ ) इति जीवब्रह्मणोश्चानुप्रवेशः । बीजेपि त्रैवि-ध्यमिति सरूपत्वम् । भगवतो भोगे हेतुः । जीवेन भुक्तभोगामिति । तस्मात्प्र-
१० कृतेपि चमसच्चद्भुतावेवार्थकथनान्न सांख्यमतप्रतिपादकत्वम् ॥ १।४।९ ॥

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥ १।४।१० ॥

ननु द्विविधा शब्दप्रवृत्तिः । योगो रूढिर्वा । तत्राजाशब्दश्छागायां रूढः । न जायत इति योगः । अनुभयरूपत्वात्कथं सृष्टिवाचकत्व-मित्याशङ्क्य परिहरति । कल्पनोपदेशाच्च । कल्पनात्रोपदिश्यते । आद्या
१५ सृष्टिः कल्पनयाजाशब्देनोच्यते । यथा ह्यजा बर्करसाहिता सवत्सा स्वामिहिता तथेयमित्युपदेशपदात्तथोपासनमभिप्रेतम् । चकारात्परोक्ष-वादोपि देवस्य हिताय । यथा—आदित्यो वै देवमधु ( छां. ३।१।१ ) वाचं धेनुमुपासीत ( बृ. ५।८।१ ) द्युलोकादीनां चाग्नित्वं पञ्चाग्निविद्यायां तथा प्रकृतेप्यविरोधः । योगरूढिव्यतिरेकेणाप्येषा वेदे शब्दप्रवृत्तिः ।
२० तस्मादजामन्त्रेण न सांख्यमतसिद्धिः ॥ १।४।१० ॥ २ ॥

---

## ३ न संख्योपसंग्रहाधिकरणम् ।

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥ १।४।११ ॥

मन्त्रान्तरेण पुनराशङ्क्य परिहरति । बृहदारण्यकषष्ठे श्रूयते । यस्मिन् पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान्

---

17–C reads वेदस्य for देवस्य ।

ब्रह्मामृतोमृतम् ( बृ. ४।४।१७ ) इति। यद्यप्यत्र पञ्चजनाः पञ्चोच्यन्ते न पञ्चानां पञ्चगुणत्वम्। समासानुपपत्तेः। तथाहि। आद्यः पञ्चशब्दः संख्यावाची संख्येयवाची वा। आद्ये पञ्चसंख्याया एकत्वान्न षष्ठीसमासः। संख्यायां संख्याभावाच्च। संख्येयपरत्वे द्वितीयस्य संख्यात्वे
५ पञ्चत्वमेव पूर्ववच्चेदनन्वयः। विधायकाभावाच्च। अतो वीप्सा। पञ्चजनसंज्ञाविशिष्टानां वा पञ्चत्वमिति यथासंभवमर्थः। तथापि मूढग्राहेण संख्योपसंग्रहादपि लक्षणार्थं केनचिद्धर्मेण पञ्चसंग्राहकेण भाव्यम्। स च तेषां मते न संभवति तथा सति पञ्चैव तत्त्वानि स्युः। अतस्ते नानाभावादेव स्वीकर्तव्याः। यद्यपि भूततन्मात्राकृतिचित्त्यन्तःस्थितत्वधर्मा
१० वक्तुं शक्यन्ते। तथापि न ते तथोक्तवन्तः।

मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त।
षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः॥ (सां. कां. ३)

इत्यन्यथोपगमात्। पुरुषे वैलक्षण्याभावप्रसंगश्च। किं च नार्थं श्रुत्यर्थ इति श्रुतादेव प्रतीयते। अतिरेकादाकाशश्चेति। चकारा-
१५ दात्मा यस्मिन्नित्यधिकरणत्वेनोक्तः। तस्मान्नानेनापि मन्त्रेण तन्मतसिद्धिः॥ १।४।११॥

## प्राणादयो वाक्यशेषात्॥ १।४।१२।

नन्ववश्यं मन्त्रस्यार्थो वक्तव्यः। तदनुरोधेन लक्षणयापि ज्योतिःशास्त्रवत्पञ्चपञ्चशब्दः पञ्चविंशतिवाचकतया परिकल्प्यः। स्पष्टमाहात्म्या-
२० र्थमात्माकाशयोराधाराधेयभावः प्रदर्शितस्तत्रत्ययोरेव। अतो मन्त्रे तन्मतसिद्धिरित्याशङ्क्य परिहरति। प्राणादयः पञ्चजनाः। वाक्यशेषस्य मन्त्रार्थनियामकत्वात्। प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो मनः ( बृ. ४।४।१८ ) इति।

ननु कथमस्य वाक्यशेषत्वम्। उच्यते। प्राणादयः संज्ञाशब्दाः
२५ करणवाचकाः। ते ज्ञानरूपं वा क्रियारूपं वा कार्यं जनयन्ति स्वव्यापा-

रेण । तेन तेषां करणान्तरापेक्षाभावात् प्राणादीनां पुनः प्राणादिमत्त्वं बाधितं स्यात् । भगवतो माहात्म्यविरोधश्च । अतः स्वार्थानिर्वाहार्थमन्यार्थो वर्तते पञ्चजनवाक्यस्य च । अतो बुद्धेः पञ्च वृत्तीर्जनयन्तीति प्राणादयः पञ्चजनाः । संशयोथ विपर्यासो निश्चयः स्मृतिरेव च । स्वाप इत्युच्यते
५ बुद्धेर्लक्षणं वृत्तितः पृथक् ( भा. ३।२६।३० ) इति । तेषां तत्तत्प्रकारकं स्वकार्यजननं न स्वतः किंतु भगवत इति द्वयोरेकार्थत्वे सर्वं संगतं स्यात् । खण्डत्वाच्च शेषत्वम् । सर्वप्रवृत्तिकत्वाद्भगवतो न माहात्म्यविरोधः। तत्र प्राणशब्देन त्वग्घ्राणप्राणा गृहीताः । रसना चान्ने प्रतिष्ठिता इत्यन्नं गृहीतम् । वाग्वा तेजसि । अत्ता चान्नं चैकत्र भवतः । सहभा-
१० वित्वात् । क्वचिदेकग्रहणं क्वचिदुभयग्रहणमिति । तेन ते सर्वे पञ्चैव भवन्त्य-तिरिच्यते परमाकाशः । तस्मात्प्राणादय एव पञ्चजना इति न तन्मत-सिद्धिः ॥ १।४।१२ ॥

## ज्योतिषैकेषामसत्यन्ने ॥ १।४।१३ ॥

काण्वपाठे—अन्नस्यान्नमिति नास्ति तदा कथं पञ्च । तत्राह ।
१५ ज्योतिषा संख्यापूर्तिस्तेषाम् । यस्मादर्वाक् संवत्सर इति पूर्वं पठितो मन्त्रः । तत्र—तद्देवा ज्योतिषां ज्योतिः ( बृ. ४।४।१६ ) इत्यन्नस्थाने ज्योतिर्ग्राह्यम् । व्याख्यानं पूर्वमेव । तस्मादसिद्धं तन्मतस्य श्रुतिमूलत्वम् ॥ १।४।१३ ॥ ३ ॥

---

## ४ यथाव्यपदिष्टाधिकरणम् ।

## २० कारणत्वेन चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥ १।४।१४ ॥

श्रुतिविप्रतिषेधात्स्मृतिरेव ग्राह्येति मतं दूरीकर्तुं श्रुतिविप्रतिषेधो

---

1–A, C, D and E read तत्र for तेन।
7–A and C read सर्वप्रवर्तकत्वात for सर्वप्रवृत्तिकत्वात् ।
10–A and C read तेनैते for तेन ते ।
17–C reads सिद्धं न तन्मतस्य for असिद्धं तन्मतस्य ।

नास्तीत्यधिकरणमारभते । तत्र श्रुतौ सृष्टिभेदा बहवः । कचिदाकाशादिका । आत्मन आकाशः संभूतः ( तै. २।१ ) इति । क्वचित्तेजःप्रभृतिका । तत्तेजोसृजत ( छां. ६।२।३ ) इति । क्वचिदन्यथैव । एतस्माज्जायते प्राणः ( मुं. ५।१।३ ) इति । इदं सर्वमसृजत ( बृ. १।२।५ ) इति ५ च । एवं क्रमव्युत्क्रमानेकविधसृष्टिप्रतिपादकत्वाद् वस्तुनो द्वैरूप्यासंभवाद्—ग्रहा त्वा अनु प्रजापशवः प्रजायन्त इतिवत्सृष्टिवाक्यानामर्थवादत्वेन ब्रह्मस्वरूपज्ञानार्थत्वादध्यारोपापवादन्यायेन न वेदान्तब्रह्मकारणत्वं सिद्ध्यति । अतः परिदृश्यमानजगतः कारणान्वेषणे क्रियमाणे बाह्याबाह्यमतभेदेषु सत्सु कपिलस्य भगवज्ज्ञानांशावतारत्वात् तन्मतप्रकारेणैव १० जगद्व्यवस्थोचितेत्येवं प्राप्ते । उच्यते । न सृष्टिभेदेषु ब्रह्मणः कारणत्वे विप्रतिपत्तिः । सर्वप्रकारेषु तस्यैव कारणत्वोक्तेः । आकाशादिषु कारणत्वेन ब्रह्म यथाव्यपदिष्टमेवैकत्र । अन्यत्रापि तदेव कारणत्वेनोक्तम् । न तस्य कार्यं करणं च विद्यते ( श्वे. ६।८ ) इत्यादिनिराकरणं तु लौकिककर्तृत्वनिषेधपरम् । तस्यैव प्रतीतेः । सर्ववैलक्षण्यार्थं वैदिकानामबाधि- १५ तार्थैकवाक्यत्वस्याभिप्रेतत्वादिति चकारार्थः । कार्यप्रकारे भेदस्तु माहात्म्यज्ञापको न तु बाधकः । बहुधा कृतिसामर्थ्यं लोकेपि माहात्म्यसूचकमिति । तस्मान्न श्रुतिविप्रतिषेधात्स्मृतिपरिग्रह इति सिद्धम् ॥ १।४।१४॥४ ॥

---

## ५ समाकर्षाधिकरणम् ।

## २० समाकर्षात् ॥ १।४।१५ ॥

पुनरन्यथाशङ्क्य परिहरति । ननु क्वचिद्—असद्वा इदमग्र आसीत् ( तै. २।७ ) इति । क्वचित्—सदेव सोम्येदमग्र आसीत् । तद्धैक आहुरसदेवेदमग्र आसीत् । ( छां. ६।२।१ ) अव्याकृतमासीत् । नासदासीन्नो सदासीत् । तम आसीत् ( ऋ. सं. १०।१२९।१ ) इत्यादिवाक्येषु

---

7-A and C read वेदाद्ब्रह्मणः कारणत्वं for वेदान्तब्रह्मकारणत्वं ।

जीव एक एव । तत्रान्नमये निःसंदिग्धत्वात्तस्यैष एवात्मेति नोच्यते । द्वितीयादि प्रथमोक्तमेवातिदिश्यते तत्रान्नमये हस्तेन प्रदर्शयन्निव निःसंदिग्धं व्याख्यातम् । तदन्तरो हि प्राण आन्तरव्यवहारकारणम् । बलभोजनविसर्गादिषूपयोगात् । तस्य संचार आकाशे परिनिष्ठितः पृथिव्याम् । एवं लौकिकव्यवहारार्थं बाह्याभ्यन्तरभेदेन द्वयम् । तदनु वैदिकव्यवहारः स च मनोमयः पुरुषः । आदेशः कर्मचोदना । ब्राह्मणानि सशेषाणि । अथर्वाङ्गिरसो ब्रह्मकर्मत्वात्प्रतिष्ठा । तदनु नानाविधयागादिसाधनवतः फलं विज्ञानमयः । तत्र श्रद्धा आपः । तृतीयाध्याये त्वयमर्थो विस्तरेण वक्ष्यते । यथोक्तकर्तृत्वात्क्रममुक्तिः ।

ऋतसत्यौ प्रमीयमाणानुष्ठीयमानौ धर्मौ । योगश्च मुख्यत्वादात्मा । अधोभागो महर्लोकः । तादृशस्य ततोर्वाक्संमुन्यभावात् । ततोपि ब्रह्मविद आनन्दमयः फलम् । तस्य स्वरूपस्यैकत्वाद् धर्मभेदेन शिरःपाण्यादि निरूप्यते । तस्य मुख्यतया प्रीतिविषयत्वं धर्मस्तच्छिरः । मोदप्रमोदावपरिनिष्ठितपरिनिष्ठितावानन्दातिशयौ । आनन्दस्तु स्वरूपं साधनरूपत्वाद् ब्रह्म पुच्छमिति । श्लोकौ तु सच्चिदंशबोधकौ केवलानन्दत्वपरिहाराय । अपरौ तु श्लोकौ माहात्म्यज्ञापनाय वाग्गोचरागोचरभेदेन । अवान्तरानन्दास्तु सर्वे तस्मान्न्यूनतया तदुत्कर्षत्वबोधनाय । तस्मात्सर्वत्र प्रपाठके मान्त्रवर्णिकमेव प्रतीयते । अतो मुख्योपपत्तेर्विद्यमानत्वेनानन्दमयः परमात्मैव । चकारो मध्ये प्रयुक्तो विधिमुखविचारेणाधिकरणसंपूर्णत्वबोधकः ॥१।१।१४॥

निषेधमुखेन च चतुःसूत्र्येदमेवाधिकरणं पुनर्विचार्यते सुदृढत्वाय ॥ इदमत्राकूतम् । जीव एवानन्दमयो भवतु । फलस्य पुरुषार्थत्वात् । स ब्रह्मविदानन्दमयो भवतीति स्वर्गादिसुखवदलौकिकमेव रूपमानन्दमयं जीवस्य फलभूतमिति प्राप्तेऽभिधीयते ॥

## नेतरोनुपपत्तेः ॥१।१।१५॥

इतरो जीवो न । आनन्दमयो न भवति । कुतः । अनुपपत्तेः ।

---

1–A reads शारीर आत्मेति for आत्मेति ।

ब्रह्मणोपि विगानं श्रूयते। तद्धैक आहुः इति कर्मवत्पक्षान्तरं संभवति। न ह्यसत्तमः शब्दैर्ब्रह्म प्रतिपादयितुं शक्यते। असन्नेव स भवति (तै. २।६) इति बाधात्। आदित्यवर्णं तमसः परस्तात् (श्वे. ३।८) इति च। तस्मात्कारणत्वेनापि श्रुतिविप्रतिषेधाद् ब्रह्म कारणं नेत्येवं प्राप्ते।

५ उच्यते। समाकर्षात्। आकृष्यते स्वस्थानाच्च्याव्यत इत्याकर्षः। सर्वेष्वेतेषु वाक्येष्वसदादिपदानां न निरात्मकत्वाद्यर्था उच्यन्ते। किंतु वैलक्षण्येन। सर्वशब्दवाच्यत्वं च सिद्धं ब्रह्मणः। यथा—को अद्धा वेद। क इह प्रवोचेत्। (ऋ. सं. ३।५४।५) सर्वे वेदा यत्पदमामनन्ति (कठ. १।२।१५) यतो वाचो निवर्तन्ते (तै. २।९) मनसैवानुद्रष्टव्यः (बृ. ४।४।१९)

१० इत्यादि सर्वे विरुद्धधर्मा भगवत्युच्यन्ते। एवमनेकविरुद्धशब्दवाच्यत्वं लोकप्रसिद्धतादृशार्थात्समाकर्षादवगम्यते। तं यथा यथोपासते तथा भवतीति फलज्ञापनार्थम्। असन्नेव स भवति (तै. २।६) इति। यथा कंसादीनां मारकः। तद्धैक आहुरित्यत्र सर्वप्रपञ्चवैलक्षण्यम्। प्रपञ्चरूपोपि स इति प्रथमः पक्षः। अव्याकृतमसत्पक्षेण तुल्यम्। नासदासी-

१५ दिति मनस्तदपि ब्रह्म तमआसीदित्यनभिव्यक्तम्। कर्मणोपि भगवत्त्वात्। पूर्वकाण्डेपि तस्मादेव सृष्टिः। न हि तमस्तः स्वेन गूढत्वं लोके संभवति। अतः क्वचिद्विलक्षणात् क्वचिदविलक्षणाद् ब्रह्मणो जगत्। भगवत्त्वादेव स्वयंकर्तृकता च। संभवति चैकवाक्यत्वेज्ञानान्निराकरणं चायुक्तम्। तस्माच्छब्दवैलक्षण्येन श्रुतिविप्रतिषेधो वक्तुं न शक्य इति

२० सिद्धम् ॥ १।४।१५॥५ ॥

---

## ६ जगद्वाचित्वाधिकरणम् ।

## जगद्वाचित्वात् ॥ १।४।१६ ॥

एवं शब्दविप्रतिषेधं परिहृत्यार्थविप्रतिषेधं परिहरति। कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे बालाकिरजातशत्रवे ब्रह्मोपदेष्टुमागतः।

---

17-A and क om. क्वचिदविलक्षणात् before ब्रह्मणो।

आदित्यादिदक्षिणेक्षिपुरुषपर्यन्तपरिच्छिन्नब्रह्मोपासनान्युक्त्वा तथा निरा
कृते तमेव ज्ञानार्थमुपससाद । ततः सप्तपुरुषसमीपमुभावागत्य ब्रह्म-
वार्द्यं चक्रतुः । तत्र—क्वैष एतद्बालाके पुरुषोशयिष्ट ( कौ. ४।१९ )
इत्यादौ जीवः प्रक्रान्तः । तस्मादेवं सर्वोत्पात्तिरुक्ता । ब्रह्मणोप्यनुप्रवे-
५ शश्च । तत्र संदेहः । जीव एव ब्रह्मसहितः कर्ता ब्रह्मैव वेति । तत्र जीव
एव कर्ता । सर्वस्य जगतो ब्रह्मत्वादयस्तस्य धर्माः । राजत्ववद् यजमा-
नत्ववद्वा । अस्मिन्प्रकरणे ब्रह्मोपक्रमेण जीवपर्यवसानोक्तेः सर्वत्रैव
ब्रह्मत्वेनोक्तो जीव एव कर्ता । तथा सति लोकेपि जीवकर्तृत्वं
सहजं भवेत् । बन्धमोक्षव्यवस्था च । एवं सत्यर्थात्प्रकृतेरेव फलिष्य-
१० तीत्येवं प्राप्ते । उच्यते । जगद्वाचित्वात् । एतेषां पुरुषाणां कर्ता यस्य
चैतत्कर्मेत्युपक्रम एतच्छब्देन जगदुच्यते। पुरुषशब्देन च जीवः । तज्जड-
जीवात्मकं जगद् ब्रह्मकर्तृकमिति हि पूर्वसिद्धम् । तदनुरोधेनात्रापि ब्रह्म-
परत्वमेवोचितं न तु सर्वविप्लवोश्रुतकल्पना च । अतः सुषुप्तावपि ब्रह्मण्येव
लयस्तस्मादेव सर्वमिति ज्ञातव्यम् । प्राणात्मशब्दवाच्यत्वं तु पूर्वमेव सिद्धम् ।
१५ तस्मान्न जीवाधिष्ठिता प्रकृतिः कारणम् ॥ १।४।१६ ॥

**जीवमुख्यप्राणलिङ्गादिति चेत्तद् व्याख्यातम् ॥ १।४।१७ ॥**

किंचिदाशङ्क्य परिहरति । नन्वत्र जीव एव प्रक्रान्तः । क्वैष
एतद्बालाके पुरुषोशयिष्ट (कौ. ४।१९) इति । ब्रह्म त्वयापि न सिद्धम्—
एतादृशं नैतादृशमिति । अतः शयनोत्थानलक्षणजीवधर्मदर्शनात्तस्यैव
२० ब्रह्मत्वं जगत्कर्तृत्वं च । तत्स्वतोनुपपन्नं प्रकृतौ फलिष्यति । अथवा
मुख्यप्राणलिङ्गमप्यत्रास्ति । प्राण एवैकधा भवतीति सुषुप्तौ तस्यैव
प्रवृत्तिरुपलभ्यते । विद्यमानादेव सर्वोत्पत्तिप्रलयौ । स च प्रकृत्यंशोतो
जडादेव प्रधानात्सृष्टावपि सर्वोत्पत्तिः । अतोस्मात्प्रकरणाज्जीवद्वारा
साक्षाद्वा प्रकृतेः कारणत्वमित्येवं प्राप्ते । उच्यते । तद्व्याख्यातम् । एतयोरु-
२५ भयलिङ्गत्वमेव नास्तीत्याश्रयत्वादिह तद्योगादित्यत्र सर्वमेव कार्यं भगवत

---

12–A and C om. हि after इति । C reads तदनुरोधेनापि for तदनु-
रोधेनात्रापि ।

एव नान्यस्मादिति । अतोस्माद् ब्रह्मवाद एव सिध्यति । न प्रकृति-
वादः ॥ १।४।१७ ॥

## अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥ १।४।१८ ॥

५ स्वमतेन परिहारमुक्त्वा नियतधर्मवादेनापि परिहारमाह । स्वाप-
प्रतिबोधौ जीवधर्मावेव । चक्षुरादिलयाधारत्वं प्राणस्येति । तास्मिन्नपि पक्षे-
न्यार्थं तद्धर्मकीर्तनम् । भेदे हि तन्निराकरणमवश्यं कर्तव्यमिति तुशब्दः ।
ब्रह्मप्रतिपत्त्यर्थमेव जीवलयोद्गमौ मृतिवैलक्षण्येन । प्राणकीर्तनमाश्रयब्रह्म-
बोधाय । कुत एतदवगम्यते । तत्राह । उपक्रमोपसंहाराभ्यामेवावगम्यते । यो
१० वै बालाक एतेषां पुरुषाणामित्युपक्रमे मुख्यं ब्रह्मैव निर्दिष्टम् । तज्ज्ञानेना-
सुरजयः । सर्वेषां भूतानां श्रैष्ठ्यं स्वाराज्यमाधिपत्यं चेति फलम् । न
ह्येतदद्वयममुख्ये संभवति । अपिच । प्रश्नव्याख्यानाभ्याम् । क्वैष एतद्बालाके
पुरुषोशायिष्टेति प्रश्नः । तत्र जीवस्य ज्ञातत्वादधिकरणमेव न ज्ञातम् ।
यत्रैष एतद्बालाके पुरुषोशयिष्ट ( कौ. ४।१९ ) इति व्याख्यानम् । न
१५ हि नाडीर्ज्ञापयितुं व्याख्याति किंतु प्रतिज्ञातं ब्रह्म । कथमेतदवगम्यते
नाडीव्यतिरिक्त आत्मा ज्ञाप्यत इति । तत्राह । एवमेके । एके शाखिनो
वाजसनेयिनः । तत्रापि दृप्तबालाकिब्राह्मणे—स होवाचाजातशत्रुर्यत्रैष
एतत्सुप्तोभूद् य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञान-
मादाय य एषोन्तर्हृदय आकाशस्तस्मिञ्छेते ( बृ. २।१।१७ ) इत्यत्र—
२० आकाशशब्दं ब्रह्म सता सौम्य तदा संपन्नो भवति ( छां. ६।८।१ )
इति च । स्वं ह्यपीतो भवति ( छां. ६।८।१ ) इति च । तस्मा-
दाधारभूतब्रह्मज्ञापनार्थत्वाज्जीवमुख्यप्राणलिङ्गात् प्रकृतिवाद इत्यसंगतम्
॥ १।४।१८॥६ ॥

---

## ७ वाक्यान्वयाधिकरणम् ।

### वाक्यान्वयात् ॥ १।४।१९ ॥

पुनर्जीवब्रह्मवादेन प्रकृतिकारणवादमाशङ्क्य निराकरोति । बृहदारण्यके चतुर्थे षष्ठे च याज्ञवल्क्यमैत्रेयीसंवादे—येनाहं नामृता स्यां किमहं तेन कुर्याम् ( बृ. ४।५।४ ) इति विरक्तिमुक्त्वा—यदेव भगवान्वेद तदेव मे ब्रूहि ( बृ. ४।५।४ ) इति पृष्टे तामभिमुखीकृत्य—न वारे पत्युः कामाय ( बृ. ४।५।६ ) इत्यादिनामृतत्वाय ज्ञानमुपदिशति । षष्ठे पुनरुपसंहारेपि—एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राज ( बृ. ४।५।१५ ) इति ।

तत्र जीवस्य प्रकरणित्वं ब्रह्मणो वेति संशयः । तत्रात्मनः प्रियत्वं स्वप्रतीत्या पुत्राद्यपेक्षया बोधयञ्जीवमेवोपक्रम आत्मत्वेन वदति । तदनु तत्र दर्शनादि विधत्ते । तेन सर्वं विदितमिति फलमाह । तत्र कथमात्मज्ञानेन सर्वज्ञानमित्याकाङ्क्षायां—ब्रह्म तं परादात् ( बृ. ४।५।७ ) इत्यादिना—इदं सर्वं यदयमात्मा (बृ. ४।५।७) इत्यन्तेन तस्यैव सर्वत्वमाह ।

तदनु कथमस्मिन्संघात आत्मज्ञानं भवतीत्याकाङ्क्षायां दुन्दुभ्यादिदृष्टान्तत्रयमाह । परम्परया बाह्याभ्यन्तरभेदेन यथा महाकोलाहले दुन्दुभेर्हन्यमानस्य शब्दो गृहीतो भवति । तत्र करणं दुन्दुभिदर्शनं दुन्दुभ्याघातदर्शनं वा । अनुमानद्वारा चित्ते तत्र निविष्टे तत्साक्षात्कारो भवतीति । तथात्मनो बोधककार्यानुसंधाने तत्साक्षात्कारो भवतीति । तत्र कथं सर्वत्वमित्याकाङ्क्षायां तत एवोत्पन्नं सर्वं नामरूपं तस्मिन्नेव लीयत इति । स यथेतिद्वयेनाह । मध्ये स एव नातिरिक्तं विशतीति स यथा सैन्धवघन इत्यनेनाह । आधेयत्वेन तावन्मात्रतानिराकरणायाह । न प्रेत्य संज्ञास्तीति । कार्यातिरिक्तरूपं कथयितुं न शक्यत इति तत्र विशेषाकाङ्क्षायामतिरिक्ताकथने वञ्चकत्वमाशङ्क्य तत्परिहारायाह । स होवाचेति ।

---

3–C reads परिहरति for निराकरोति ।

11–C reads त्वप्रतीत्या for स्वप्रतीत्या ।

22–C and D read तावन्मात्र for तावन्मात्रता ।

एव जीवश्चैतन्यमात्रं शरीरादिसंघाते प्रविष्ट इति चिति तन्मात्रेण प्रवेशो च मोक्ष इति औडुलोमिराचार्यः । काशकृत्स्नस्त्वासक्त्या विषयभोक्तृरूपं भगवत एव जीव इति तेपि स्वमतानुसारेणात्र परिहरन्ति । तत्र पुत्रादिप्रियसहवचनाज्जीवप्रकरणमेवैतदित्याशङ्क्य जीवोपक्रमस्यान्यत्प्रयोजन-
५ मित्याह । प्रतिज्ञासिद्धेरिति षष्ठी। तस्या लिङ्गमंशत्वाज्जीवस्य तदभेदेनोपक्रमः प्रतिज्ञासिद्धेर्लिङ्गं भवति । एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञा ।

तस्यैवाग्रे व्युत्पाद्यमानत्वात्तस्या एतत्साधकम् । यथा जीवो भगवानेवं जड इति । एवमाश्मरथ्यो मन्यते । श्रोतव्यादिविषयस्तु भगवानेव । तस्मान्नियतधर्मजीववादेपि न जीवोपक्रमो दोषः ॥ १।४।२० ॥

१० **उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ १।४।२१ ॥**

लिङ्गमित्यनुवर्तते । यदत्र जीवोपक्रमेण भगवतः श्रवणादिकमुक्तं तत्संसारभावादुत्क्रमिष्यतो जीवस्य लिङ्गम् । मुक्तौ जीवो भगवानेव भविष्यतीति ज्ञापकम् । अन्यथा सैव कथममृता भवेत् । इतिशब्दो हेतौ । स्त्रिया विश्वासार्थं गौणप्रियवैराग्यार्थं च जीवोपक्रमः कर्तव्य एवेत्यौडुलोमि-
१५ राचार्यो मन्यते तस्माद् भिन्नजीवपक्षेपि नात्र दूषणम् ॥ १।४।२१ ॥

**अवस्थितेरिति काशकृत्स्नः ॥ १।४।२२ ॥**

लिङ्गमित्येव । भगवत एवावस्था जीव इति । अतः संसारदशायामपि जीवो ब्रह्मेति नात्रोत्क्रमणमुपचारो वा । अन्यथा कथमात्मनस्तु कामाय सर्वं प्रियं भवतीति । न ह्यन्यस्य सर्वं प्रियं भवति । मोक्षस्तु
२० ज्ञानमेव । उत्तरत्र कर्तव्याभावात् । अवस्थया व्यवसायात् सिद्धान्ताद्विशेषः । इतिशब्देनैतावदरे खल्वमृतत्वमित्युपसंहारो हेतुरस्य पक्षस्येति काशकृत्स्नो मन्यते । तस्माज्जीवोपक्रमो भगवत एवावस्थाविशेषो जीव इत्यस्य पक्षस्य लिङ्गम् । तस्मान्मैत्रेयीब्राह्मणेनापि जीवद्वारा प्रकृतिकारणवादासिद्धिरिति सिद्धम् ॥ १।४।२२ ॥ ७ ॥

---

23-B om. पक्षस्य before लिङ्गम् ।

**एतेन सर्वे व्याख्याता व्याख्याताः ॥ १।४।२८ ॥**

ब्रह्मवादव्यतिरिक्ताः सर्वे वादा अवैदिका वेदविरुद्धाश्चेत्याह । एतेन ब्रह्मवादस्थापनपूर्वकसांख्यमतनिराकरणेन सर्वे पातञ्जलादिवादा व्याख्याताः । अवैदिका अनुपयुक्ताश्च । वैदिकानां हि वेदः प्रमाणम् ।
५ तस्मिन्नव्याकुले भ्रान्तिप्रतिपन्ना एव सर्वे वादा इति । एतत्सौकर्यार्थं विस्तरेणाग्रे वक्ष्यते । आवृत्तिरध्यायसमाप्तिबोधिका ॥ १।४।२८ ॥ ८ ॥

॥ इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये प्रथमाध्यायस्य चतुर्थः पादः ॥ १।४ ॥

**प्रथमोध्यायः समाप्तः ॥**



१ अत्र नवममधिकरणं कृतं मालाकारैर्नाम तु न दर्शितमधिकरणसंग्रहानुरोधाद्‌-ग्रामाभिरेतदधिकरणं नाङ्गीकृतम् ।

# अथ द्वितीयाध्यायस्य प्रथमः पादः ॥

## १ स्मृत्यनवकाशदोषप्रसंग इत्यधिकरणम् ।[1]

**स्मृत्यनवकाशदोषप्रसंग इति चेन्नान्यस्मृत्यनवकाशदोषप्रसंगात् ॥ २।१।१ ॥**

५ प्रथमाध्याये वेदान्तवाक्यानां विवादास्पदानां ब्रह्मपरत्वेन समन्वयः प्रतिपादितः । अधुना श्रुतिस्मृत्यविरोधः प्रतिपाद्यते ।

**भ्रान्तिमूलतया सर्वसमयानामयुक्तितः ।**
**न तद्विरोधाद्वचनं वैदिकं शङ्क्यतां व्रजेत् ॥ २६ ॥**

श्रुतिविप्रतिषेधस्त्ववश्यं प्रतिविधेयः । प्रथमचतुर्थपादे सर्वथानुपयोगे १० प्रतिपादिते स्मृतिप्रतिपादिते स्मृतित्ववचनेन प्रामाण्ये च यावत्तदप्रामाण्यं न प्रतिपाद्यते तावत्तद्विरोधः परिहर्तुमशक्य इति तन्निराकरणार्थं प्रथमतः सूत्रत्रयमाह । तुल्यबलानां परस्परविरोधे न प्रकारान्तरास्थितिरिति ततो युक्त्या श्रुतिविप्रतिषेधपरिहारः । ततो द्वितीये पादे वेदबोधकत्वाभावेपि तैरपि स्वातन्त्र्येण कश्चन पुरुषार्थः सेत्स्यतीत्याशङ्क्य बाह्याबाह्यमतान्येकीकृत्य २० निराकरोति। भ्रान्तेस्तुल्यत्वात् । ततः सम्यग्वेदार्थविचारायैव वैदिकपदार्थानां क्रमस्वरूपविचारः पादद्वयेन । अतः संपूर्णेनाप्यध्यायेनाविरोधः प्रतिपाद्यते । कपिलादिमहर्षिकृतस्मृतेर्न मन्वादिवदन्यत्रोपयोगः । मोक्षैकोपयोगित्वात् । तत्राप्यनवकाशे वैयर्थ्यापत्तेरिति चेन्न कपिलव्यतिरिक्तशुद्धब्रह्मकारणवाचकस्मृत्यनवकाशदोषप्रसंगः । अहं सर्वस्य जगतः २५ प्रभवः प्रलयस्तथा ( भ. गी. ६।७ ) इति ॥२।१।१॥१॥

---

13-A, C and F read वेदबाधक for वेदबोधक ।

---

१ अस्याधिकरणस्य नाम वेदान्ताधिकरणमालायां नोपलभ्यते ।

## २ इतरेषामित्यधिकरणम् ।

**इतरेषां चानुपलब्धेः ॥ २।१।२ ॥**

प्रकृतिव्यतिरिक्तानां महदादीनां लोके वेदे चानुपलब्धेः ॥२।१।२॥२॥

---

## ३ एतेन योग इत्यधिकरणम् ।

**एतेन योगः प्रत्युक्तः ॥ २।१।३ ॥**

५ सांख्यस्मृतिनिराकरणेन योगस्मृतिरपि निराकृता द्रष्टव्या । योगस्य वैदिकत्वशङ्कया भेदेन निराकरणम् ॥ २।१।३॥३ ॥

---

## ४ न विलक्षणत्वाधिकरणम् ।

**न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ २।१।४ ॥**

१० बाधकोयं तर्कः । अस्य जगतो विलक्षणत्वादचेतनत्वाच्चेतनं न कारणम् । विलक्षणत्वं च शब्दात् । विज्ञातं चाविज्ञातं च ( तै. २।६ ) इति । प्रत्यक्षस्य भ्रान्तित्वं मन्यमानस्येदं वचनम् ॥ २।१।४ ॥

**अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ २।१।५ ॥**

मृदब्रवीत् । आपोब्रुवन् ( श. ब्रा. ६।१।३।२।४ ) तत्तेज ऐक्षत १५ ( छां. ६।२।३ ) । ते ह वाचमूचुस्त्वं न उद्गाय ( बृ. १।३।२ ) इति । एवमादिश्रुतिभिर्भूतेन्द्रियाणां चेतनत्वं प्रतिपाद्यत इत्याशङ्क्य तुशब्देन निराकरोति तत्तदभिमानिन्य एव देवतास्तथा वदन्ति । कुतः । वेद एव विज्ञातं चाविज्ञातं चेति चेतनाचेतनविशेषोक्तेः । अनुगतत्वाच्च । अग्निर्वाग्भूत्वा मुखं प्राविशत् ( ऐ. २।४ ) इत्येवमादिविशेषानुगतिभ्यामभिमानित्वमित्यर्थः । देवतापदं च श्रुत्यन्तरे ॥ २।१।५ ॥

---

१ अस्याधिकरणस्य नाम वेदान्ताधिकरणमालायां नोपलभ्यते ।

## दृश्यते तु ॥ २।१।६ ॥

परिहरति । तुशब्दः पक्षं व्यावर्तयति । दृश्यते हि कार्यकारणयो-वैरूप्यं केशगोमयवृश्चिकादौ । चेतनादचेतनोत्पत्तिनिषेधे तदंशस्यैव निषेधः । तुल्यांशसंपत्तिश्चेत्प्रकृतेपि सदंशः ॥ २।१।६ ॥ ४ ॥

---

५　　५ असदिति चेत्यधिकरणम् ।

## असदिति चेन्न प्रतिषेधमात्रत्वात् ॥ २।१।७ ॥

श्रुतौ कारणत्वेनासदुक्तमिति चेन्न प्रतिषेधार्थमेव वचनम् । कथम-सतः सज्जायेतेति । कार्यस्य वा पूर्वविप्रतिषेधो ब्रह्मकारणत्वाय ॥ २।१।७ ॥

## अपीतौ तद्वत्प्रसंगादसमञ्जसम् ॥ २।१।८ ॥

१०　पूर्वपक्षमाह । अपीतिर्लयः । कार्यस्य कारणलये तद्वत् प्रसंगः । स्थौल्यसावयवत्वपरिच्छिन्नत्वाशुद्धत्वादिधर्मसंबन्धावश्यकत्वादसमञ्जसं ब्रह्मकारणवचनम् ॥ २।१।८ ॥

## न तु दृष्टान्तभावात् ॥ २।१।९ ॥

नैवास्मदीये दर्शने किंचिदसामञ्जस्यमस्तीति तुशब्देन परिहरति । १५ स्वपक्षस्थापनपरपक्षनिराकरणयोर्विद्यमानत्वान्न तुवचनम् । तत उत्पन्नस्य तत्र लये न कार्यावस्थाधर्मसंबन्धः शरावरुचकादिषु प्रसिद्धः । भवतां परं न दृष्टान्तोस्ति ॥ २।१।९ ॥

## स्वपक्षदोषाच्च ॥ २।१।१० ॥

स्वपक्षे चैते प्रतिवादिनः साधारणा दोषाः । निर्विशेषात्प्रधाना-२० त्सविशेषस्य कार्यता । तस्योत्पत्तिः । लये तद्धर्मसंबन्धः । असत्कार्यवाद-प्रसंगः । तथैव कार्योत्पत्तौ कारणाभावेन नियमाभावः । भावे वा मुक्तानामपि पुनर्बन्धप्रसंगः ॥ २।१।१० ॥

---

3—क reads वैरूप्यम् for वैरूप्यं ।

## तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्य- विमोक्षप्रसंगः ॥ २।१।११ ॥

वेदोक्तेर्थे शुष्कतर्केण प्रत्यवस्थानमयुक्तम् । तर्कस्याप्रतिष्ठनात् । तर्को नाम स्वोत्प्रेक्षिता युक्तिः ।सा एकोक्ता नान्यैरङ्गीक्रियते । स्वतन्त्राणामृ-
५ षीणां मतिभेदाद्वस्तुनो द्वैरूप्यासंभवान्नियामकाभावाच्च । अतो न तर्कस्य प्रतिष्ठा । पूर्वपक्षिणः परिहारः । अप्यन्यथानुमेयमिति चेत् । एवमप्यन्यथा वयमनुमास्यामहे । यथा नाप्रतिष्ठादोषो भविष्यति । न हि कोपि तर्कः प्रतिष्ठितो नास्तीति वक्तुं शक्यते । व्यवहारोच्छेदप्रसंगात् ।

आर्षं धर्मोपदेशं च धर्मशास्त्राविरोधिना ।
१० यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥

( म. स्मृ. १२ । १०६ ) इति स्मृतेः ॥

सावयतर्कपरिहारेण निरवद्यस्तर्कः प्रतिपत्तव्यो भवतीति चेद् एव- मप्यविमोक्षप्रसंगः । ब्रह्मवादिनो निर्दुष्टतर्कसद्भावेपि प्रकृतिवादिनस्तर्कस्य दोषाविमोक्षप्रसंगः। मूलनियमाभावाद्वैमत्यस्य विद्यमानत्वात्॥२।१।११॥५॥

---

### ६ एतेनेत्यधिकरणम् ।

१५
## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ २।१।१२ ॥

सांख्यमतस्य वैदिकप्रत्यासन्नत्वात्केषांचिच्छिष्टानां परिग्रहोप्य- स्ति । अणुमायाकारणवादास्तु सर्वथा न शिष्टैः परिगृह्यन्त इति तेषां तर्काः पूर्वोक्तन्यायेन सुतरामेव निरस्ता वेदितव्याः ॥ २।१।१२ ॥ ६ ॥

---

२०
### ७ भोक्त्रापत्तेरित्यधिकरणम् ।

## भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ २।१।१३ ॥

कारणदोषं परिहृत्य कार्यदोषपरिहारार्थमारम्भः । भोग्यस्य भो- क्त्रापत्तिः । ब्रह्मणो निर्विशेषस्य कारणत्वाद् भोक्तुर्भोग्यत्वं भोग्यस्य च

---

3–C reads प्रत्यवस्थातुं for प्रत्यवस्थानम् ।
9–A, C and M read वेदशास्त्राविरोधिना for धर्मशास्त्राविरोधिना ।
13–क reads निरवद्य for निर्दुष्ट ।

भोक्तृत्वमापद्यते । अतो न विभाग इति चेत्स्याल्लोकवत् । यथा लोके कटककुण्डलादीनां सुवर्णकारणत्वेन सुवर्णानन्यत्वेपि न कटकस्य कुण्डलत्वमेवं न भोग्यस्य भोक्तृत्वम् ॥ २।१।१३ ॥ ७ ॥

---

## ८ तदनन्यत्वाधिकरणम् ।

५ **तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ २।१।१४ ॥**

श्रुतिविरोधं परिहरति । वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्यम् ( छां. ६।१।१ )इति । तत्र विकारो वाङ्मात्रेणैवारभ्यते न वस्तुत इत्यर्थः प्रतिभाति ।

तथाच सति कस्य ब्रह्म कारणं भवेत् । अतः श्रुतिवाक्यस्यार्थ-
१० माह । आरम्भणशब्दादिभ्यस्तदनन्यत्वं प्रतीयते । कार्यस्य कारणानन्यत्वं न मिथ्यात्वम् ॥

ये पुनर्मिथ्यात्वं तामसबुद्धयः प्रतिपादयन्ति तैर्ब्रह्मवादाः सूत्रश्रुतिनाशनेन तिलापःकृता वेदितव्याः । अन्तःप्रविष्टचोरवधार्थमेवैष आरम्भः । अलौकिकप्रमेये सूत्रानुसारेणैव निर्णय उचितः । न स्वतन्त्रतया किंचित्प-
१५ रिकल्पनम् । तर्काप्रतिष्ठानादिति निराकृतमेव । न वास्मिन्नपि सूत्रे मिथ्यात्वार्थः संभवति । एकविज्ञानेन सर्वविज्ञानोपक्रमबाधात्प्रकरणविरोधश्च । त्रयविरोधभयपरित्यागेनैकमिदं सूत्रमन्यथा योजयन्नतिधृष्ट इत्यलं विस्तरेण ॥ २।१।१४ ॥

**भावे चोपलब्धेः ॥ २।१।१५ ॥**

२० भाव एव विद्यमान एव घटे घटोपलब्धिः । नाभावे । चकारान्मृत्तिकेत्येव श्रुतिः परिगृहीता । वाङ्मात्रेण चोपलम्भे मिथ्यैवात्र घटोप्यस्तीत्युक्त उपलभ्येत ॥

इदं सूत्रं मिथ्यावादिना न ज्ञातमेव । अत एव पाठान्तरकल्पनमिति ॥ २।१।१५ ॥

---

1 –A and C read आपद्येत for आपद्यते ।

**सत्त्वाच्चावरस्य ॥ २।१।१६ ॥**

अवरस्य प्रपञ्चस्य सत्त्वात्त्रैकालिकत्वाद् ब्रह्मत्वम् । सदेव सोम्येदमग्र आसीत् । यदिदं किंच तत्सत्यमित्याचक्षते (छां. ६।२।१) इति श्रुतेः ॥ २।१।१६।८ ॥

---

### ९ असद्व्यपदेशाधिकरणम् ।

५

**असद्व्यपदेशान्नेति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ २।१।१७ ॥**

असद्वा इदमग्र आसीत् ( तै. २।७) इति श्रुत्या प्रागुत्पत्तेः कार्यस्यासत्त्वं बोध्यत इति चेन्न । अव्याकृतत्वेन धर्मान्तरेण तथा व्यपदे-
१० शः । कुतः । वाक्यशेषात् । तदात्मानꣳ स्वयमकुरुत ( तै. २।७ ) इति स्वस्यैव क्रियमाणत्वात् । इदमासीत्पदप्रयोगाच्च ॥ २।१।१७ ॥

**युक्तेः शब्दान्तराच्च ॥ २।१।१८ ॥**

युक्तिस्तावत् समवेतमेव कार्यं सदुत्पाद्यत इति संबन्धस्य द्विनिष्ठत्वान्नित्यत्वाच्च कारणान्तरेणापि परम्परया संबन्धः । असंबद्धोत्पत्तौ तु
१५ मिथ्यात्वमेव । प्रवृत्तिस्त्वभिव्यक्त्यर्थमिति । शब्दान्तरं सच्छब्दादात्मशब्दः । आत्मानꣳ स्वयमकुरुत ( तै. २।७ ) इति ॥ २।१।१८ ॥

**पटवच्च ॥ २।१।१९ ॥**

यथा संवेष्टितः पटो न व्यक्तं गृह्यते विस्तृतस्तु गृह्यते तथाविर्भावानाविर्भावेन जगतोपि ॥ २।१।१९ ॥

२० **यथा च प्राणादिः ॥ २।१।२० ॥**

यथा प्राणापानानां नियमने जीवनमात्रम् । अनियमन आकुञ्चनादि नैतावता प्राणभेदः पूर्वमसत्त्वं वा । तथा जगतोपि । ज्ञानक्रियाभेदात्सूत्रद्वयम् ॥ २।१।२०॥९ ॥

---

23—क reads नैव तावता for नैतावता ।

## १० इतरव्यपदेशाधिकरणम् ।

### इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २।१।२१ ॥

ब्रह्मणो जगत्कारणत्व इतरस्य जीवस्यापि ब्रह्मत्वात्तद्धितं कर्तव्यम् । तन्न करोतीति तदकरणादिदोषप्रसक्तिः । तत्सृष्ट्वा तदेवानुप्राविशत् ।
५ ( तै. २।६ ) अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि ( छां. ६।३।२ ) इति तस्यैव जीवव्यपदेशात् ॥ २।१।२१ ॥

### अधिकं तु भेदनिर्देशात् ॥ २।१।२२ ॥

तुशब्दः पक्षं व्यावर्तयति । यदि ब्रह्म तावन्मात्रं भवेत्तदायं दोषः । तत्पुनर्जीवाज्जगतश्चाधिकम् । कुतः । भेदनिर्देशात् । द्रष्टव्यादिवाक्येषु
१० कर्मकर्तृव्यपदेशाद् विज्ञानानन्दव्यपदेशाद्वा । न हि संपूर्णोंशस्य हितं नियमेन करोति । सर्वेन्द्रियव्यापाराभावप्रसंगात् । स्वलीलयैकं तु करोत्येव ॥ २।१।२२ ॥

### अश्मादिवच्च तदनुपपत्तिः ॥ २।१।२३ ॥

पार्थिवत्वाविशेषेपि हीरमाणिक्यपाषाणानां पलाशचम्पकचन्द-
१५ नानामुच्चनीचत्वमेवं जीवस्यांशत्वाविशेषेपि ब्रह्मादिस्थावरान्तानामुच्चनीचत्वम् । कार्यवैलक्षण्यं तदननुरोधश्च दर्शितः ॥ २।१।२३॥१० ॥

---

## ११ उपसंहारदर्शनाधिकरणम् ।

### उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २।१।२४ ॥

ब्रह्मैव केवलं जगत्कारणमित्युक्तम् । तन्नोपपद्यते कुलालादेश्च-
२० क्रादिसाधनान्तरस्योपसंहारदर्शनात्संपादनदर्शनाद्दिति चेन्न । क्षीरवद्धि । यथा क्षीरं कर्तारमनपेक्ष्य दधिभवनसमये दधि भवति । एवमेव ब्रह्मापि कार्यसमये स्वयमेव सर्वं भवति ॥ २।१।२४ ॥

---

7–क reads व्यपदेशात् for निर्देशात् ।
13–प्र. पु. reads तदुपपत्तिः for तदनुपपत्तिः ।
16–प्र.पु. reads तदनुरोधश्च for तदननुरोधश्च ।

देवादिवदपि लोके ॥ २।१।२५ ॥

स्वतोभिन्नकरणे दृष्टान्तः यथा देवर्षिपितरो बाह्यनिरपेक्षा एव स्वयोगबलेन सर्वं कुर्वन्ति । एवं ब्रह्माप्यनपेक्ष्य तत्समवायं स्वत एव सर्वं करोति ॥ २।१।२५ ॥

५ कृत्स्नप्रसक्तिर्निरवयत्वशब्दकोपो वा ॥ २।१।२६ ॥

यद्येकमेव ब्रह्म स्वात्मानमेव जगत्कुर्यात् तदा कृत्स्नं ब्रह्मैकमेव कार्यं भवेत् । अथांशभेदेन व्यवस्था तथा सति निरवयवत्वश्रुतिविरोधः । निष्कलं निष्क्रियं शान्तम् ( श्वे. ६।१९ ) इति ॥ २।१।२६ ॥

श्रुतेस्तु शब्दमूलत्वात् ॥ २।१।२७ ॥

१० तुशब्दः पक्षं व्यावर्तयति । श्रुतेः । श्रूयत एव द्वयमपि । न च श्रुतं युक्त्या बाधनीयम् । शब्दमूलत्वात् । शब्दैकसमधिगम्यत्वात् । अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् । ( म. पु. ११३।७ ) अर्वाचीनविकल्पविचारकुतर्कप्रमाणाभासशास्त्रकलिलान्तःकरणदुरवग्रहवादिनां वादानवसरे सर्वभवनसमर्थे ब्रह्माणि विरोधाभावाच्च ॥ एवं परि-
१५ हृतेपि दोषे स्वमत्यानुपपत्तिमुद्भाव्य सर्वसंप्लवं वदन्मन्दमतिः सद्भिरुपेक्ष्यः ॥ २।१।२७ ॥

आत्मनि चैवं विचित्राश्च हि ॥ २।१।२८ ॥

सृष्टौ देशकालापेक्षा नास्ति । आत्मन्येव सृष्टत्वात् । देशकालसृष्टावप्यात्मन्येव साधिकरणस्य सृष्टत्वाच्च । बहिरन्तश्च जगत्सृष्टिं वा आह
२० विशेषाभावेन—अनन्तरोबाह्यः ( बृ. ४।५।१३ ) इति विरोधाभावो विचित्रशक्तियुक्तत्वात्सर्वभवनसमर्थत्वाच्च ॥ २।१।२८ ॥

स्वपक्षदोषाच्च ॥ २।१।२९ ॥

प्रधानवादिनोपि सर्वपरिणामसावयवत्वनित्यत्वादिदोषो दुष्परिहरः । युक्तिमूलत्वाच्च तस्य । अचिन्त्यकल्पनायां प्रमाणाभावाच्च ॥२।१।२९॥११॥

---

6—B om. तदा after कुर्यात् ।
14—C reads विवादावसरे for वादानवसरे ।

## १२ सर्वोपेताधिकरणम् ।

### सर्वोपेता च तद्दर्शनात् ॥ २।१।३० ॥

सर्वशक्तिभिरुपेतोपगतः । चकारात्सत्यादिगुणयुक्तश्च । कुतः । तद्दर्शनात् । तथा वेदे दृश्यते । यः सर्वज्ञः सर्वशक्तिः सर्वकर्ता सर्वकामः ५ ( छां. ३।१४।२ ) इत्यादि ॥ २।१।३० ॥

### विकरणत्वान्नेति चेत्तदुक्तम् ॥ २।१।३१ ॥

कर्तेन्द्रियवान् लोके । ब्रह्मणो निरिन्द्रियत्वात्कथं कर्तृत्वमिति चेन्न । अस्य परिहारः पूर्वमेवोक्तः–श्रुतेस्तु शब्दमूलत्वात् ( ब्र. सू. २।१।२७ ) इत्यत्र । अनवगाह्यमाहात्म्ये श्रुतिरेव शरणं नान्या वाचो १० युक्तिरिति ॥ २।१।३१ ॥

### न प्रयोजनवत्त्वात् ॥ २।१।३२ ॥

न ब्रह्म जगत्कारणम् । कुतः । प्रयोजनवत्त्वात् । कार्यं हि प्रयोजनवद्दृष्टं लोके । ब्रह्मणि पुनः प्रयोजनवत्त्वं संभावयितुमपि न शक्यते । आप्तकामश्रुतिविरोधात् । व्यधिकरणो हेतुर्नसमासो १५ वा ॥ २।१।३२ ॥

### लोकवत्तु लीलाकैवल्यम् ॥ २।१।३३ ॥

तुशब्दः पक्षं व्यावर्तयति । लोकवल्लीला नहि लीलायां किंचित्प्रयोजनमस्ति । लीलाया एव प्रयोजनत्वात् । ईश्वरत्वादेव न लीला पर्यनुयोक्तुं शक्या । सा लीला कैवल्यं मोक्षः । तस्य लीलात्वेप्यन्यस्य २० तत्कीर्तने मोक्ष इत्यर्थः । लीलैव केवलेति वा ॥ २।१।३३ ॥

### वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ २।१।३४ ॥

कांश्चित्सुखिनः कांश्चिद्दुःखिनश्च प्रलयं च कुर्वन् विषमो निर्घृणश्चेति चेन्न । सापेक्षत्वात् । जीवानां कर्मानुरोधेन सुखदुःखे प्रयच्छतीति । बादिबोधनायैतदुक्तम् । वस्तुतस्त्वात्मसृष्टेर्वैषम्यनैर्घृण्यसंभावनैव नास्ति । २५ वृष्टिवद् भगवान् । बीजवत्कर्म । श्रुतिरेव तथा दर्शयति–एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति । एष उ एवासाधु कर्म

कारयति तं यमधो निनीषति । ( कौ. ब्रा. ३।८ ) पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन कर्मणा ( बृ. ३।२।१३ ) इति च । सापेक्षमपि कुर्वन्नीश्वर इति माहात्म्यम् ॥ २।१।३४ ॥

**न कर्माविभागादिति चेन्नानादित्वात् ॥ २।१।३५ ॥**

५ न कर्माविभागात् कार्योद्गमात्पूर्वं संभवति । पश्चात्त्वन्योन्याश्रय इति चेन्न । अनादित्वात् । बीजाङ्कुरवत्प्रवाहस्यानादित्वात् ॥ २।१।३५॥

**उपपद्यते चाप्युपलभ्यते च ॥ २।१।३६ ॥**

कथमनादित्वमिति चेदुपपद्यते । अन्यथा कस्य संसारः । कृतहान्यकृताभ्यागमप्रसङ्गश्च । उपलभ्यते च श्रुतिस्मृत्योः । अनेन जीवेनात्मना १० ( छां. ६।३।२ ) इति सर्गादौ जीवप्रयोगादनादित्वम् । तपसैव यथापूर्वं स्रष्टा विश्वमिदं भवान् इति च ॥ २।१।३६ ॥

**सर्वधर्मोपपत्तेश्च ॥ २।१।३७ ॥**

उपसंहरति । वेदोक्ता धर्माः सर्वे ब्रह्मण्युपपद्यन्ते । सर्वसमर्थत्वादिति ॥२।१।३७॥१२॥

१५ इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये द्वितीयाध्यायस्य प्रथमः पादः ॥ २।१ ॥

---

# द्वितीयाध्याये द्वितीयः पादः ।

## १ रचनानुपपत्तेरित्यधिकरणम् ।

**रचनानुपपत्तेश्च नानुमानम् ॥ २।२।१ ॥**

२० स्वतन्त्रतया सर्वे वादा निराक्रियन्तेस्मिन्पादे । लोकानां भूर्भुवादीनामचेतनेन केवलेन प्रधानेन रचना नोपपद्यते । रचितत्वादेव न परिणामः । सर्वस्य संश्लेषप्रसंगात् । अतश्चेतनकर्तृका रचना नाचेतनेन

---

20–क reads सर्ववादा for सर्वे वादा ।

प्रधानेन कर्तुं शक्या । तस्मात्कारणत्वेन प्रधानं नानुमातव्यम् । अन्यथोपपत्त्या बाधितमेवानुमानमिति चकारार्थः ॥ २।२।१ ॥

## प्रवृत्तेश्च ॥ २।२।२ ॥

भुवनानि विचार्य जनान् विचारयति । सर्वस्य तत्परिणामे प्रवृ-
५ त्तिर्नोपपद्यते । प्रधानस्य वा प्रथमप्रवृत्तिः । यद्यपि प्रधानकारणवादे फलपर्यन्तमङ्गीक्रियमाणे न किंचिद् दूषणम् । कृतिमात्रस्य प्रधानविषयत्वात् । तथापि वादिनं प्रति लोकन्यायेन वक्तव्यम् । तत्र लोके चेतनाचेतनव्यवहारोस्ति । चेतनाश्चतुर्विधा जीवाः सशरीरा अलौकिकाश्च । अन्ये अचेतनाः । तन्न्यायेन विचारोत्रेति न किंचिद्विचारणीयम् ॥ २।२।२ ॥

१० ## पयोम्बुवच्चेत्तत्रापि ॥ २।२।३ ॥

यथा पयो विचित्रफेनरचनां करोति यथा वा नद्यादिजलं स्वत एव स्यन्दत इति चेत् । न । तत्रापि दोहनाधिश्रयणे मेघानां चेतनानामेव सत्त्वात् ॥ व्याख्यानान्तरे त्वन्नाम्बुवदित्युच्येत । द्वितीयस्य समाधानं नोभयवादिसंमतम् ॥ २।२।३ ॥

१५ ## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ २।२।४ ॥

प्रधानस्यान्यापेक्षाभावात्सर्वदा कार्यकरणमेव न व्यतिरेकेण तूष्णीमवस्थानमुचितम् । पुरुषाधिष्ठानस्य तु तुल्यत्वात् । सेश्वरसांख्यमतेप्यैश्वर्यं तदधीनमिति यथास्थितमेव दूषणम् ॥ २।२।४ ॥

## अन्यत्राभावाच्च न तृणादिवत् ॥ २।२।५ ॥

२० तृणपल्लवजलानि स्वभावादेव परिणमन्त एवमेव प्रधानमिति न मन्तव्यम् । अन्यत्र शृङ्गादौ दुग्धस्याभावात् । चकाराच्चेतनक्रियाप्यास्ति । ततश्च लोकदृष्टान्ताभावादचेतनं प्रधानं न कारणम् ॥ २।२।५ ॥

## अभ्युपगमेप्यर्थाभावात् ॥ २।२।६ ॥

---

13—क reads द्वितीये for द्वितीयस्य and C reads द्वितीय for the same.
17—B om. तु before तुल्यत्वात् ।

प्रधानकारणवादाङ्गीकारेपि प्रेक्ष्यकारित्वाभावान्न पुरुषार्थः सिद्ध्यति ॥ २।२।६॥१ ॥

## २ पुरुषाश्मवदित्यधिकरणम् ।

### पुरुषाश्मवदिति चेत्तथापि ॥ २।२।७ ॥

५ प्रधानस्य केवलस्य कारणवादो निराकृतः । पुरुषप्रेरितस्य कारणत्वमाशङ्क्य परिहरति । पुरुषः पङ्गुरन्धमारुह्यान्योन्योपकाराय गच्छति । यथा वायःकान्तं संनिधिमात्रेण लोहं क्रियामुत्पादयति । एवमेव पुरुषाधिष्ठितं पुरुषसंनिहितं वा प्रधानं प्रवर्तिष्यत इति चेत्तथापि दोषस्तदवस्थः । प्रधानप्रेरकत्वं पुरुषस्य स्वाभाविकं प्रधानकृतं वा । आद्ये प्रधा-
१० नस्याप्रयोजकत्वम् । द्वितीये प्रधानदोषस्तदवस्थः । नित्यसंबन्धस्य विशिष्टकारणत्वेनिर्मोक्षः । अशक्तस्य तु मोक्षाङ्गीकारः सर्वथानुपपन्नः ॥ २।२।७ ॥

### अङ्गित्वानुपपत्तेश्च ॥ २।२।८ ॥

प्रकृतिपुरुषयोरङ्गाङ्गित्वे भवेदप्येवम् । तच्च नोपपद्यते । पुरुषस्या-
१५ ङ्गित्वे ब्रह्मवादप्रवेशो मतहानिश्च । प्रकृतेरङ्गित्वे त्वनिर्मोक्षः । अनेन परिहृतोपि मायावादो निर्लज्जानां हृदये भासते ॥ २।२।८ ॥

### अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ २।२।९ ॥

अन्यथा वयं सर्वमनुमिमीमहे । यथा सर्वे दोषाः परिहृता भवेयुरिति चेत् तथापि पूर्वं ज्ञानशक्तिर्नास्तीति मन्तव्यम् । तथा सति बीज-
२० स्यैवाभावान् नित्यत्वाच्चानिर्मोक्ष इति ॥ २।२।९ ॥

### विप्रतिषेधाच्चासमञ्जसम् ॥ २।२।१० ॥

परस्परविरुद्धत्वान्मतवर्तिनां पञ्चविंशादिपक्षाङ्गीकारात् । वस्तुतस्त्वलौकिकार्थे वेद एव प्रमाणं नान्यदिति ॥ २।२।१०॥२ ॥

## ३ महद्दीर्घवद्वेत्यधिकरणम् ।

### महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ २।२।११ ॥

इदानीं परमाणुकारणवादो निराक्रियते । तत्र स्थूलकार्यार्थं प्रथमं परमाणुद्वयेन द्व्यणुकमारभ्यते । परमाणुद्वयसंयोगे द्व्यणुकं भवतीत्यर्थः । ५ तत्रोपर्यधोभावमिलने द्व्यणुकं महत् स्याद् द्विगुणपरिमाणवत्त्वात् । प्राक्पश्चान्मिलने दीर्घवद्वा स्यात् । परमाणुपरिमाणं ह्रस्वं परितो मण्डलं च । उपहासार्थं तस्य मतस्यानुवादः ॥ २।२।११ ॥

किमतो यद्येवमत आह—

### उभयथापि न कर्मातस्तदभावः ॥ २।२।१२ ॥

१० उभयथापि न । कुतः । न कर्म । नकारो देहलीप्रदीपन्यायेनोभयत्र संबध्यते । अतो द्व्यणुकाभावः । उभयथापि न परमाणुसंवट्टनम् । प्रदेशाभावात् । कल्पना मनोरथमात्रम् । असंयुक्तांशाभावात् तदेव तत्स्यात् । संयोगजनकं कर्मापि न संभवति । कारणान्तराभावात् । प्रयत्नवदात्मसंयोगेदृष्टवदात्मसंयोगे चाभ्युपगम्यमाने निरवयवत्वात्तदेव तत्स्यात् । विशे-१५ षाभावाद्विभागस्याशक्यत्वाच्च । अतो द्व्यणुकस्याभावः ॥ २।२।१२ ॥

### समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ २।२।१३॥

परिमाणुद्व्यणुकयोः समवायोङ्गीक्रियते । स संबन्धिनोरवस्थानमपेक्षते । संबन्धस्योभयनिष्ठत्वात् । स च नित्यः सदा संबन्धिसत्त्वमपेक्षते । अतोपि न द्व्यणुक उत्पद्यते । किंच । समवायो नाङ्गीकर्तुं शक्यः । संयो-२० गेन तुल्यत्वात् । संबन्धत्वात्तस्य । यथा संबन्धिनि संबन्धान्तरापेक्षैवं समवायस्यापि । तथा सत्यनवस्थितिः ॥ २।२।१३ ॥

### नित्यमेव च भावात् ॥ २।२।१४ ॥

परमाणोः कारणान्तरस्य च नित्यमेव भावात्सदा कार्यं स्यात् ॥ २।२।१४ ॥

२५ ### रूपादिमत्त्वाच्च विपर्ययोदर्शनात् ॥ २।२।१५ ॥

यद्रूपादिमत्तदनित्यम् । परमाणोरपि रूपादिमत्त्वाद्विपर्ययः

अनित्यत्वमपरमाणुत्वं च । न च प्रमाणबलेन तदतिरिक्ते व्याप्तिरिति वाच्यम् । अदर्शनात् । कार्यानुपपत्तिः श्रुत्यैव परिहृता ॥ २।२।१५ ॥

**उभयथापि च दोषात् ॥ २।२।१६ ॥**

परमाणूनां रूपादिमत्त्वेन तदभावे च दोषः । एकत्रानित्यत्वम-
५ न्यत्र कार्यरूपस्य निर्मूलत्वं च । हरिद्राचूर्णसम्बन्धे रूपान्तरस्य जननाद्विरोधोपि चकारार्थः ॥ २।२।१६ ॥

**अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ २।२।१७ ॥**

सर्ववैदिकानामपरिग्रहाच्चात्यन्तं सर्वथा नापेक्ष्यते ॥ २।२।१७॥३॥

---

## ४ समुदाय उभयहेतुकेपीत्यधिकरणम् ।

१० **समुदाय उभयहेतुकेपि तदप्राप्तिः ॥ २।२।१८ ॥**

अतः परं बाह्यमतनिराकरणम् । ते समुदायद्वयं जीवभोगार्थं संहन्यत इति मन्यन्ते । परमाणुसमूहः पृथिव्यादिभूतसमुदाय एकः । रूपादिस्कन्धसमुदायश्चापरः । रूपविज्ञानवेदनासंज्ञासंस्कारसंज्ञकाः पञ्च स्कन्धाः । तदुभयसंबन्धे जीवस्य संसारः । तदपगमे मोक्ष इति । तत्रो-
१५ भयहेतुकेपि समुदाये जीवस्य तदप्राप्तिः । क्षणिकत्वात् । सर्वक्षणिकत्वे जीवमात्रक्षणिकत्वे वा तदप्राप्तिः ॥ २।२।१८ ॥

**इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ २।२।१९ ॥**

क्षणिकत्वेपि पूर्वपूर्वस्योत्तरोत्तरप्रत्ययविषयत्वात्कारणत्वात्सन्ततेरेव
२० जीवत्वाज्जडत्वाच्च न कार्यनुपपत्तिरिति चेन्न । उत्पत्तिमात्रनिमित्तत्वात् । अनुसंधानाभ्युपगमे स्थिरत्वापत्तिः । संबन्धवियोगार्थं को वा यतेत । स्थैर्याभावात्समुदायानुपपत्तिश्च ॥ २।२।१९ ॥

**उत्तरोत्पादे च पूर्वनिरोधात् ॥ २।२।२० ॥**

---

5 —A reads वर्ण for चूर्ण ।

उत्तरोत्पत्तिरपि न संभवति । उत्पन्नस्य खलत्वादकलत्वम् । अत उत्तरोत्पत्तिसमये पूर्वस्य नष्टत्वादुत्पत्तिक्षण एव स्थितिपालयकार्यकरण-सर्वाङ्गीकारे विरोधादेकमपि न स्यात् ॥ २।२।२० ॥

**असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २।२।२१ ॥**

५ एका क्षणिकत्वप्रतिज्ञा । अपरा चतुर्विधान्हेतून्प्रतीत्य चित्तचैत्ता उत्पद्यन्त इति वस्तुनः क्षणान्तरसंबन्धे प्रथमप्रतिज्ञा नश्यति । असति द्वितीया । द्वितीया चेन्नाङ्गीक्रियेत तदा प्रतिबन्धाभावात्सर्वं सर्वत एकदैवोत्पद्येत ॥ २।२।२१ ॥

**प्रतिसंख्याप्रतिसंख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २।२।२२ ॥**

१० अपि च । वैनाशिकाः कल्पयन्ति । बुद्धिबोध्यत्रयादन्यत् संस्कृतं क्षणिकं चेति । त्रयं पुनर्निरोधद्वयमाकाशं च । तत्रेदानीं निरोधद्वयाङ्गीकारं दूषयति ।

प्रतिसंख्यानिरोधो नाम भावानां बुद्धिपूर्वको विनाशः । विपरीतोऽप्रतिसंख्यानिरोधः । त्रयमपि निरुपाख्यम् । निरोधद्वयमपि न प्राप्नोति । १५ सन्ततेरविच्छेदात् । पदार्थानां च नाशकसंबन्धाभावात्प्रतिबन्धसंबन्धाभावः । आद्यो निरोधः पदार्थविषयको व्यर्थः । द्वितीयः क्षणिकाङ्गीकारेणैव सिद्धत्वान्नाङ्गीकर्तव्यः ॥ २।२।२२ ॥

**उभयथा च दोषात् ॥ २।२।२३ ॥**

प्रतिसंख्यानिरोधान्तर्गताविद्याविनाशे मोक्ष इति क्षणिकवादिनो २० मिथ्यावादिनश्च मन्यन्ते । अविद्यायाः सपरिकराया निर्हेतुकविनाशे शास्त्रवैफल्यम् । अविद्यातत्कार्यातिरिक्तस्याभावान्न सहेतुकोऽपि । नहि बन्ध्यापुत्रेण रज्जुसर्पो नाश्यते । अत उभयथापि दोषः ॥ २।२।२३ ।

**आकाशे चाविशेषात् ॥ २।२।२४ ॥**

यच्चोक्तमाकाशमप्यावरणाभावो निरुपाख्यमिति । तन्न । आका-२५ शेऽपि सर्वपदार्थवद्वस्तुत्वव्यवहारस्याविशेषात् ॥ २।२।२४ ॥

---

2—A reads कारण for करण ।

अनुस्मृतेश्च ॥ २।२।२५ ॥

सर्वोपि क्षणिकवादो बाधितः । स एवायं पदार्थ इत्यनुस्मरणात् अनुस्मरणयोरेकाश्रयत्वमेकविषयत्वं च ॥ २।२।२५ ॥

नासतोऽदृष्टत्वात् ॥ २।२।२६ ॥

५ अपिच । नानुपमर्द्य प्रादुर्भावं वैनाशिका मन्यन्ते । ततश्चासतो-लीकात् कार्यं स्यात् । तन्न । अदृष्टत्वात् । नहि शशशृङ्गादिभिः किंचित्कार्यं दृश्यते ।

एवं सतः कारणत्वं पूर्वपाद उपपाद्यासतः कारणत्वं निराकृत्य व्यासचरणैर्वेदानामव्याकुलत्वे संपादितेपि पुनर्दैत्यव्यामोहनार्थं प्रवृत्तस्य १० भगवतो बुद्धस्याज्ञया—त्वं च रुद्र महाबाहो मोहशास्त्राणि कारय (व. पु ७०।३६) अतथ्यानि वितथ्यानि दर्शयस्व महाभुज । स्वागमैः कल्पितैस्त्वं च जनान्मद्विमुखान्कुरु (प. पु. उ.) इत्येवं रूपया महादेवादयः स्वांशेनावतीर्य वैदिकेषु प्रविश्य विश्वासार्थं वेद-विभागान् यथार्थानपि व्याख्याय सदसद्विलक्षणामसदपरपर्यायामविद्यां १५ सर्वकारणत्वेन स्वीकृत्य तन्निवृत्त्यर्थं जातिभ्रंशरूपं संन्यासपाषण्डं प्रसार्य सर्वमेव लोकं व्यामोहितवन्तः । व्यासोपि कलहं कृत्वा शङ्करं शप्त्वा तूष्णीमास । अतोऽग्निना मया सर्वतः सदुद्धारार्थं यथाश्रुतानि श्रुति-सूत्राणि योजयता सर्वो मोहो निराकृतो वेदितव्यः । प्रथमाध्याय एव तन्मतमनूद्य विस्तरेण निराकृतमिति नात्रोच्यते ॥ २।२।२६ ॥

२० उदासीनानामपि चैवं सिद्धिः ॥ २।२।२७ ॥

यद्यभावाद्भावोत्पत्तिरङ्गीक्रियते तथा सत्युदासीनानामपि साधनर-हितानां सर्वोपि धान्यादिः सिध्येत । अभावस्य सुलभत्वात् ॥२।२।२७॥४॥

---

५ नाभाव उपलब्धेरित्यधिकरणम् ।

नाभाव उपलब्धेः ॥ २।२।२८ ॥

२५ एवं कारणासत्त्वं निराकृत्य विज्ञानवाद्यभिमतं प्रपञ्चासत्यत्वं

---

१ अधुनातनपुस्तके नोपलभ्यते । प्रकाशोक्त्या पद्मपुराणोत्तरखण्डमिति निर्दिष्टम् ।

निराकरोति । स च ज्ञानातिरिक्तः प्रपञ्चो नास्तीत्याह । तन्न । अस्य प्रपञ्चस्य नाभावः । उपलब्धेः । उपलभ्यते हि प्रपञ्चः । यस्तूपलभमान एव नाहमुपलभ इति वदति स कथमुपादेयवचनः स्यात् ॥ २।२।२८ ॥

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २।२।२९ ॥

५ ननूपलब्धिमात्रेण न वस्तुसत्त्वम् । स्वप्नमायाभ्रमेष्वन्यथा दृष्टत्वादिति चेत् । न । वैधर्म्यात् । स्वप्नादिषु तदानीमेव स्वप्नान्ते वा वस्तुनोऽन्यथा भावोपलम्भात् । न तथा जागरिते । वर्षानन्तरमपि दृश्यमानः स्तम्भः स्तम्भ एव । स्वस्य मोक्षे प्रवृत्तिव्याघातश्चकारार्थः ॥ २।२।२९ ॥

## न भावोनुपलब्धेः ॥ २।२।३० ॥

१० यदप्युच्यते बाह्यार्थव्यतिरेकेणापि वासनया ज्ञानवैचित्र्यं भविष्यतीति । तन्न । वासनानां न भाव उपपद्यते । त्वन्मते बाह्यार्थस्यानुपलब्धेः । उपलब्धस्य हि वासनाजनकत्वम् । अनादित्वे त्वन्धपरम्परान्यायेनाप्रतिष्ठैव । अर्थव्यतिरेकेण वासनाया अभावाद् वासनाव्यतिरेकेणाप्यर्थोपलब्धेरन्वयव्यतिरेकाभ्यामर्थसिद्धिः ॥ २।२।३० ॥

## क्षणिकत्वाच्च ॥ २।२।३१ ॥

वासनाया आधारोपि नास्ति । आलयविज्ञानस्य क्षणिकत्वात् । वृत्तिविज्ञानवत् । एवं सौत्रान्तिको विज्ञानवादी च प्रत्युक्तः । माध्यमिकस्तु मायावादिवदसंबद्धभाषित्वादुपेक्ष्य इति न निराक्रियत आचार्येण ॥ २।२।३१ ॥

## सर्वथानुपपत्तेश्च ॥ २।२।३२ ॥

१५ किं बहुना । बाह्यवादो यथा यथा विचार्यते तथा तथासंबद्ध एवेत्यलं विस्तरेण । चकाराद्वेदविरोधो मुख्यः ॥ २।२।३२ ॥ ५ ॥

---

## ६ नैकस्मिन्नसंभवादित्यधिकरणम् ।

## नैकस्मिन्नसंभवात् ॥ २।२।३३ ॥

२० विवसनसमयो निराक्रियते । ते ह्यन्तर्निष्ठाः प्रपञ्च उदासीनाः सप्त विभक्तीः परेच्छया वदन्ति । स्याच्छब्दोभीष्टवचनः । अस्तिनास्त्य-

व्यक्तानां प्रत्येकसमुदायाभ्यां स्यात्पूर्वकः सप्तप्रकारो भवति । तदेकस्मि-न्योजयन्ति । तद्विरोधेनासंभवादयुक्तम् ॥ २।२।३३ ॥

**एवं चात्माकार्त्स्न्यम् ॥ २।२।३४ ॥**

ननु कथं बहिरुदासीनस्य त षणमत आह । एवमपि सति त्वात्मनो
५ वस्तुपरिच्छेदादकार्त्स्न्यं न सर्वत्वम् । अथवा शरीरपरिमाण आत्मा चेत्तदा सर्वशरीराणामतुल्यत्वादात्मनो न कार्त्स्न्यं न कृत्स्नशरीरतुल्यत्वम् ॥ २।२।३४ ॥

**न च पर्यायादप्यविरोधो विकारादिभ्यः ॥ २।२।३५ ॥**

शरीराणामवयवोपचयानुसारेणात्मनापि देवतिर्यङ्मनुष्येष्ववयवोप-
१० चयापचयाभ्यां तत्तुल्यता स्यात् । तथा सति पर्यायेणाविरोध इति न वक्तव्यम् । तथा सति विकारापत्तेः । संकोचविकासेपि विकारस्य दुष्परिहरत्वात् ॥ २।२।३५ ॥

**अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः ॥ २।२।३६ ॥**

अन्त्यावस्थितिर्मुक्तिसमयावस्थितिस्तस्माद्धेतोः । पूर्वदोषपरिहा-
१५ राय चोभयनित्यत्वं भवेदणुत्वं वा महत्त्वं वा । उभयथापि शरीरपरिणामो न भवतीति न तवार्थसिद्धिः ॥ २।२।३६ ॥ ६ ॥

---

## ७ पत्युरसामञ्जस्याधिकरणम् ।

**पत्युरसामञ्जस्यात् ॥ २।२।३७ ॥**

पराभिप्रेतान् जडजीवान्निराकृत्येश्वरं निराकरोति ।

२० **वेदोक्तादणुमात्रेपि विपरीतं तु यद्भवेत् ।**
**तादृशं वा स्वतन्त्रं चेदुभयं मूलतो मृषा ॥ २७ ॥**

तार्किकादिमतं निराकरोति पतिश्चेदीश्वरस्तस्माद्भिन्नस्तदा विषमकरणाद्वैषम्यनैर्घृण्ये स्याताम् । कर्मापेक्षायां त्वनीश्वरत्वं युक्तिमूलत्वादोषः । असामञ्जस्याद्धेतोर्न पतित्वेनेश्वरसिद्धिः ॥ २।२।३७ ॥

---

4–C reads सत्यात्मनो for सति त्वात्मनो । A reads सति चात्मनो for the same.

23–क reads कर्मापेक्षया for कर्मापेक्षायां ।

## संबन्धानुपपत्तेश्च ॥ २।२।३८ ॥

जीवब्रह्मणोर्विभुत्वादजसंयोगस्यानिष्टत्वात्पतित्वानुपपत्तिः । तुल्यत्वादप्यनुपपत्तिरिति चकारार्थः ॥२।२।३८ ॥

## अधिष्ठानानुपपत्तेश्च ॥ २।२।३९ ॥

५ स चेश्वरो जगत्कर्तृत्वेन कल्प्यमानो लौकिकन्यायेन कल्पनीयः । स चाधिष्ठित एव किंचित्करोतीतीश्वरेऽप्यधिष्ठानमङ्गीकर्तव्यम् । तस्मिन्कल्प्यमाने मतविरोधोनवस्थासंभवश्च ॥ २।२।३९ ॥

## करणवच्चेन्न भोगादिभ्यः ॥ २।२।४० ॥

करणवदङ्गीकारेसंबन्धदोषः परिहृतो भवति । तच्च न युक्तम् ।
१० भोगादिप्रसक्तेः ॥ २।२।४० ॥

## अन्तवत्त्वमसर्वज्ञता वा ॥ २।२।४१ ॥

ईश्वरः प्रकृतिजीवनियमार्थमङ्गीकृतः । तत्तु तयोः परिच्छेदे स भवति । ततश्च लोकन्यायेन जीवप्रकृत्योरन्तवत्त्वं भवेत् । ततश्चानित्यतायां मोक्षशास्त्रवैफल्यम् । एतद्दोषपरिहाराय विभुत्वनित्यत्वेङ्गीक्रिय-
१५ माणे संबन्धाभावादसर्वज्ञता वा स्यात् । तस्मादसंगतस्तार्किकवादः ॥ २।२।४१ ॥ ७ ॥

---

## ८ उत्पत्त्यसंभवादित्यधिकरणम् ।

## उत्पत्त्यसंभवात् ॥ २।२।४२ ॥

भागवतमते कंचिदंशं निराकरोति । ते च चतुर्व्यूहोत्पत्तिं वदन्ति
२० वासुदेवात्संकर्षणस्तस्मात्प्रद्युम्नस्तस्मादानिरुद्ध इति । तत्रैषामीश्वरत्वं सर्वेषामुत संकर्षणस्य जीवत्वम् । अन्यान्यत्वम् ।

उत्पत्तिपक्षे जीवस्योत्पत्तिर्न संभवति । तथा सति पूर्ववत्सर्वनाशः स्यात् ॥ २।२।४२ ॥

---

12–C reads संभवति for स भवति ।
19–C om. च after ते ।

## न च कर्तुः करणम् ॥ २।२।४३ ॥

कर्तुः संकर्षणसंज्ञकाज्जीवात्प्रद्युम्नसंज्ञकं मन उत्पद्यत इति तल्लोके न सिद्धम् । न हि कुलालाद्दण्ड उत्पद्यत इति । चकारादग्रिमस्य निराकरणम् ॥ २।२।४३ ॥

५ ## विज्ञानादिभावे वा तदप्रतिषेधः ॥ २।२।४४ ॥

अथ सर्वे परमेश्वरा विज्ञानादिमन्त इति तथा सति तदप्रतिषेध ईश्वराणामप्रतिषेधः । अनेकेश्वरत्वं च न युक्तमित्यर्थः । वस्तुतस्तु स्वातन्त्र्यमेव दोषः ॥ २।२।४४ ॥

## विप्रतिषेधाच्च ॥ २।२।४५ ॥

१० बहुकल्पनया वेदानिन्दया च विप्रतिषेधः । चकाराद्वेदप्रक्रियाविरोधः ॥ २।२।४५ ॥ ८ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणभाष्ये द्वितीयाध्यायस्य द्वितीयः पादः ॥ २।२ ॥

---

# द्वितीयाध्याये तृतीयः पादः ॥

१५ ## १ न वियदित्यधिकरणम् ।

## न वियदश्रुतेः ॥ २।३।१ ॥

श्रुतिवाक्येषु परस्परविरोधः परिह्रियते विप्रतिषेधपरिहाराय । मीमांसायास्तदर्थं प्रवृत्तत्वात् । शक्त्यविरोधाभ्याम् । तथा च ब्रह्मवादे जडजीवयोर्विरुद्धांशनिराकरणाय तृतीयपादारम्भः ।

२० द्विविधा हि वेदान्ते सृष्टिः । भूतभौतिकं सर्वं ब्रह्मण एव । विस्फुलिङ्गन्यायेनैका । अपरा वियदादिक्रमेण । सा चानामरूपात्मना नामरूपत्ववत्त्वेनाभिव्यक्तिः । स जडस्यैव कार्यत्वात्तस्य जीवस्य त्वंशत्वेनैव न नामरूपसंबन्धः ।

**अनित्ये जननं नित्ये परिच्छिन्ने समागमः ।**
२५ **नित्यापरिच्छिन्नतनौ प्राकट्यं चेति सा त्रिधा ॥ २८ ॥**

तत्र क्रमसृष्टौ संदेहः । छान्दोग्ये हि--सदेव सौम्येदमग्र आसी-देकमेवाद्वितीयम् ( छां. ६।२।१ )इत्युपक्रम्य--तदैक्षत तत्तेजोसृजत ( छां. ६।२।३ ) इति तेजोबन्नसृष्टिरुक्ता न वाय्वाकाशयोः । तैत्तिरीयके पुनः--ब्रह्मविदाप्नोति परम् ( तै. २।१ ) इत्युपक्रम्य--तस्माद्वा एत-५ स्मादात्मन आकाशः संभूतः ( तै. २।१ ) इत्याकाशादिसृष्टिरुक्ता । उभयमपि क्रमसृष्टिवाचकमित्येकवाक्यता युक्ता । छान्दोग्ये मुख्यतया सृष्टिस्तैत्तिरीये गौणी । मुख्या त्वग्रे वक्ष्यते--सोकामयत ( तै. २।६ ) इत्यादिना ।

तत्र संशयः । किमाकाशमुत्पद्यते न वेति । किं तावत्प्राप्तं नोत्पद्यत १० इति । कुतः । अश्रुतेः । श्रुतिवादिनां श्रुत्यैव निर्णयः । श्रुतौ पुनर्मुख्ये क्रमसृष्टौ न श्रूयते ॥ २।३।१ ॥

## अस्ति तु ॥ २।३।२ ॥

तुशब्दः पक्षं व्यावर्तयति । तैत्तिरीयके वियदुत्पत्तिरस्ति । यद्य-पि मुख्ये नास्ति तथापि विरोधाभावादन्यत्रोक्तमप्यङ्गीकर्तव्यमेकवाक्य-१५ त्वाय । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञानुरोधाच्च ॥ २।३।२ ॥

## गौण्यसंभवात् ॥ २।३।३ ॥

वियदुत्पत्तिर्गौणी भविष्यति । कुतः । असंभवात् । न ह्याकाश-स्योत्पत्तिः संभवति । निरवयवत्वात् । व्यापकत्वाच्च । मुख्ये चाभावात् । एकविज्ञाने सर्वविज्ञानप्रतिज्ञा तु तदधिष्ठानत्वेन जीववत्तदंशत्वेन वा २० तच्छरीरत्वेन वैकविज्ञानकोटिनिवेशात् । लोकेप्यवकाशं कुर्वित्यादौ गौणप्रयोगदर्शनात् ॥ २।३।३ ॥

## शब्दाच्च ॥ २।३।४ ॥

वायुश्चान्तरिक्षं चैतदमृतम् (बृ. २।३।३) इति । आकाशवत्सर्व-गतश्च नित्यः इति । न ह्यमृतस्य ब्रह्मदृष्टान्तभूतस्योत्पत्तिः संभवति॥२।३।४॥

---

10–C reads मुख्यक्रम for मुख्ये क्रम ।

15–A and C om. प्रतिज्ञा after विज्ञान ।

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ २।३।५ ॥

ननु कथं वियदुत्पत्तिर्गौणी भविष्यति । तत्र हि संभूतमित्येक-मेव पदमुत्तरत्रानुवर्त्यते । तथा सत्युत्तरत्र मुख्याकाशे गौणीति युगपद्वृत्ति-द्वयविरोध इति चेन्न । एकस्यापि स्यात्क्वचिन्मुख्या क्वचिद्गौणीति । ब्रह्म-
५ शब्दो यथा—तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्म ( तै. ३।२ ) इति । प्रथमवाक्ये मुख्या द्वितीये गौणी । नचात्र प्रयोगभेदोस्तीति वाच्यम् । संभूतशब्दोप्यावर्तते । न तु तादृशार्थयुक्तोपि । आत्मसत्त्वेनैव तत्सत्त्वमिति सत्त्वगुणो वचनहेतुः । तत्तद्भावापन्नं ब्रह्मैव सर्वत्र कारणमिति नानेकल-क्षणा । तद्भावापत्तिविशेषणव्यावृत्त्यर्थमपि न लक्षणा । स्वभावतोपि
१० ब्रह्मणः सर्वरूपत्वात् । तस्माद्गौण्याकाशसंभूतिश्रुतिरित्येवं प्राप्त इदमाह ॥ २।३।५ ॥

## प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥२।३।६ ॥

भवेदेतदेवं यदि छान्दोग्यश्रुतिर्न विरुध्येत । कथम् । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा बाध्यते । अव्यतिरेकात् । अनुद्गमात् । यदि संब-
१५ द्धमेव ब्रह्मणाकाशं तिष्ठेत् तदा ब्रह्मविज्ञानेनाकाशविषयीकरणे तन्नै-कविज्ञानम् । आकाशस्य चालौकिकत्वात्तज्ज्ञानं सर्वज्ञतायामपेक्षित-मेव । न च जीववत् । लौकिकत्वात् । व्यवहारमात्रविषयत्वान्नातीन्द्रि-यत्वादिचिन्ता ।

अनुद्गमेपि वस्तुसामर्थ्यात्कथं प्रतिज्ञा हीयत इत्यत आह ।
२० शब्देभ्यः । येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भवति ( छां. ६।१।१ ) इति शब्दात्प्रकृतिविकारभावेनैव व्युत्पादयति ज्ञानम् । शब्देभ्यो हेतुभ्यः प्रतिज्ञाहानिरिति योजना ॥ २।३।६ ॥

## यावद्विकारं तु विभागो लोकवत् ॥ २।३।७॥

तुशब्द आकाशोत्पत्त्यसंभावनशङ्कां वारयति । यद्यद् विकृतं तस्य

---

9—क reads तत्तद्भावापत्ति for तद्भावापत्ति ।

सर्वस्य विभाग उत्पत्तिः । आकाशमपि विकृतम् । लौकिकव्यवहारविषयत्वात् । यथा लोके विकृतमात्रमुत्पद्यते ।

आकाशोत्पत्तौ श्रुत्या सिद्धायाम् आकाशवत्सर्वगतश्च नित्यः । आकाशशरीरं ब्रह्म ( तै. १।६।२ ) स यथानन्तोयमाकाश एवमनन्त ५ आत्मा वेदितव्यः । आकाश आत्मा ( तै. १।७ ) इत्यादिश्रुतयः । समोनेन सर्वेण य आकाशे तिष्ठन् ( बृ. ३।७।१२ ) सर्वमात्मा ( मै. ६।७ ) इत्येवमादिभिरेकवाक्यतां लभन्ते ।

व्यवहारे त्वज्ञबोधनं वाक्यानामुपयोगः ॥ २।३।७ ॥ १ ॥

---

## २ एतेन मातरिश्वेत्यधिकरणम् ।

### एतेन मातरिश्वा व्याख्यातः ॥ २।३।८ ॥

आकाशोत्पत्तिसमर्थनेन मातरिश्वोत्पत्तिः समर्थिता । सैषानस्तमिता देवता ( बृ. १।५।२२ ) इति भौतिकवायुव्यावृत्त्यर्थमलौकिकपदम् ॥ २।३।८ ॥ २ ॥

---

## ३ असंभवाधिकरणम् ।

### १५ असंभवस्तु सतोनुपपत्तेः ॥ २।३।९ ॥

ननु ब्रह्मणोप्युत्पत्तिः स्यात् । आकाशवत्सर्वगतश्च नित्यः । इति श्रुतेराकाशन्यायेन सर्वगतत्वनित्यत्वयोरभावे इतीमामाशङ्कां तुशब्दः परिहरति । सतः सन्मात्रस्योत्पत्तिर्न संभवति । न हि कुण्डलोत्पत्तौ कनकोत्पत्तिरुच्यते । नामरूपविशेषाभावात् । उत्पत्तिश्च स्वीक्रियमाणा नोपप- २० द्यते स्वतो न संभवति । अन्यतस्त्वनवस्था । यदेव च मूलं तदेव ब्रह्मेति ॥ २।३।९ ॥ ३ ॥

---

## ४ तेजोत इत्यधिकरणम् ।

### तेजोतस्तथा ह्याह ॥ २।३।१० ॥

तेजोतो वायुतः । तथा ह्याह । वायोरग्निः ( तै. २।१ ) इति श्रुतेः ।

हिशब्देनैवमाह । छान्दोग्यश्रुतिः प्रतिज्ञाहानिनिराकरणार्थं तैत्तिरीयकमपेक्षते वाय्वाकाशयोरुत्पत्त्यर्थम् । तथा चोपजीव्यस्य प्राधान्याद् वायुभावापन्नमेव सत्तेजस उत्पादकमिति स्वीकरोति । ब्रह्मण एव सर्वोत्पत्तिपक्षस्त्वविरुद्धः ॥ २।३।१०॥४ ॥

---

५ ५ आप इत्यधिकरणम् ।

आपः ॥ २।३।११ ॥

तथा ह्याहेत्येव । इदमेकमनुवादसूत्रमविरोधख्यापकम् । न श्रुत्योः सर्वत्र विरोध इति ॥ २।३।११॥५ ॥

---

## ६ पृथिव्यधिकारेत्यधिकरणम् ।

१० पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ २।३।१२ ॥

ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहि ( छां. ६।२।४ ) इति । ता अन्नमसृजन्त ( छां. ६।२।४ ) इति । तत्रान्नशब्देन व्रीह्यादय आहोस्वित्पृथिवीति संदेहः । ननु कथं संदेहः पूर्वन्यायेनोपजीव्यश्रुतेर्बलीयस्त्वादिति चेत् । उच्यते । अद्भ्यः पृथिवी पृथिव्या ओषधय ओषधी-
२० भ्योऽन्नम् ( तै. २।१ ) इत्यग्रे वर्तते । तथा सति पृथिवीमोषधीश्च सृष्ट्वापोऽन्नं सृजति । आहोस्विदन्नशब्देनैव पृथिवीति ।

नन्वेवमस्तु पृथिव्योषधिसृष्ट्यनन्तरमन्नसृष्टिरिति चेत् । न । छान्दोग्यश्रुतेरपेक्षाभावान्महाभूतमात्रस्यैवाभिलषितत्वात् । एकपदलक्षणापेक्षया तत्स्वविकारस्यगुरुत्वात्पूर्वोक्त एव संशयः । तत्रान्नमयं हि सोम्य
२५ मन आपोमयः प्राणस्तेजोमयी वाक् ( छां. ६।५।४ ) इति त्रयाणां सहचारः सर्वत्रोपलभ्यते । लोकप्रसिद्धिर्वर्षणभूयिष्ठलिङ्गं च । तस्मात्पृथिव्योषध्यन्नानां मध्ये भेदविवक्षया यत्किंचिद्वक्तव्येऽन्नमुक्तमित्यवं प्राप्ते ।

उच्यते । अन्नशब्दे पृथिवी । कुतः । अधिकाररूपशब्दान्तरेभ्यः । अधिकारो भूतानामेव । न भौतिकानाम् । नीलं च रूपं पृथिव्या एव ।

भूतसहपाठात् । शब्दान्तरमद्भ्यः पृथिवीति । तस्मादन्नशब्देन पृथिव्येव ॥ २।३।१२ ॥ ६ ॥

---

## ७ तदभिध्यानादेवेत्यधिकरणम् ।

### तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ २।३।१३ ॥

५ आकाशादेव कार्याद्वाय्वादिकार्योत्पत्तिं तुशब्दो वारयति । स एव परमात्मा वाय्वादीन् सृजति । कथं तच्छब्दवाच्यतेति चेत्तदभिध्यानात् । तस्य तस्य कार्यस्योत्पादनार्थं तदभिध्यानं ततस्तदात्मकत्वं तेन तद्वाच्यत्वमिति । ननु यथाश्रुतमेव कुतो न गृह्यत इत्यत आह । तल्लिङ्गात् । सर्वकर्तृत्वं लिङ्गं तस्यैव सर्वत्र वेदान्तेष्ववगतम् । जडतो देवताया वा १० यत्किंचिज्जायमानं तत्सर्वं ब्रह्मण एवेति सिद्धम् ॥ २।३।१३ ॥ ७ ॥

---

## ८ विपर्ययेणेत्यधिकरणम् ।

### विपर्ययेण तु क्रमोत उपपद्यते ॥ २।३।१४ ॥

यथोत्पत्तिर्न तथा प्रलयः किंतु विपर्ययेण क्रमः । अत उत्पत्त्यनन्तरं प्रलयः । कुतः । उपपद्यते । प्रवेशविपर्ययेण हि निर्गमनम् । १५ क्रमसृष्टावेवैतत् ॥ २।३।१४ ॥ ८ ॥

---

## ९ अन्तरा विज्ञानमनसी इत्यधिकरणम् ।

### अन्तरा विज्ञानमनसी क्रमेण तल्लिंगादिति चेन्नाविशेषात् ॥ २।३।१५ ॥

तैत्तिरीयक आकाशाद्यन्नपर्यन्तमुत्पत्तिमुक्त्वान्नमयादयो निरूपिताः। २० तत्रान्नमयस्य प्राणमयस्य च सामग्री पूर्वमुत्पन्नोक्ता । आन्दमयस्तु परमात्मा मध्ये विज्ञानमनसी विद्यमाने क्वचिदुत्पन्ने इति वक्तव्ये तत्र क्रमेणोत्पन्ने इति वक्तव्यम् । क्रमस्तु प्रातिलोम्येन । सूत्र विपर्ययानन्तरकथनात् । अन्तरेति च वचनात् । तेजोबन्नानामन्नमये गतत्वात् । वाय्वा-

23–A and C read वचनाच्च for च वचनात ।

काशयोः प्राण एव गतत्वात् । आकाशात्पूर्वं विज्ञानमनसी उत्पन्ने इति वक्तव्यम् । तयोरग्रे वचनमेव लिङ्गमिति । अतस्तयोरुत्पत्तिर्वक्तव्येति चेन्न । अविशेषात् । नामरूपविशेषवतामेवोत्पत्तिरुच्यते न त्वनयोः । विज्ञानमयस्य जीवत्वान्मनोमयस्य च वेदत्वात् । अतो भूतभौतिकप्रवेशाभावान्न ५ तयोरुत्पत्तिर्वक्तव्या ॥ २।३।१५ ॥

**चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥ २।३।१६ ॥**

ननु विज्ञानमयस्य जीवस्यानुत्पत्तौ सर्वव्यवहारोच्छेदः । उत्पत्तिस्तु त्रिविधा निरूपिता । अनित्ये जननं नित्ये परिच्छिन्ने समागम १० (आ. का. २८) इति । तथा न जीवस्य समागमलक्षणाप्युत्पत्तिर्न स्यादितीमामाशङ्कां निराकरोति तुशब्दः । चराचरे स्थावरजङ्गमे शरीरे तयोर्विशेषणापाश्रय आश्रयः शरीरसंबन्ध इति यावत् । स तु स्यान्न तु स्वतः । ननु शरीरस्योत्पत्तौ जीवोऽप्युत्पद्यते । अन्यथा जातकर्मादीनामभावप्रसंगादिति चेन्न । तद्व्यपदेशस्तस्य शरीरस्य जन्ममरणधर्मवत्त्वेन १५ जीवव्यपदेशो भाक्तो लाक्षणिकः । कुतः । तद्भावभावित्वात् । शरीरस्यान्वयव्यतिरेकाभ्यामेव जीवस्य तद्भावित्वम् । देहधर्मो जीवस्य भाक्तः । तत्संबन्धेनैवोत्पत्तिव्यपदेश इति सिद्धम् ॥ २।३।१६ ॥ ९ ॥

---

## १० नात्माश्रुतेरित्यधिकरणम् ।

**नात्माश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ २।३।१७ ॥**

२० ननु जीवोऽप्युत्पद्यतां किमिति भाक्तत्वं कल्प्यत इति चेत् । न । आत्मा नोत्पद्यते । कुतः । अश्रुतेः । न ह्यात्मन उत्पत्तिः श्रूयते । देवदत्तो जातो विष्णुमित्रो जात इति देहोत्पत्तिरेव । न तु तद्व्यतिरेकेण पृथग् जीवोत्पत्तिः श्रूयते । विस्फुलिङ्गवदुच्चरणं नोत्पत्तिः । नामरूपसंबन्धाभावात् । एतस्य गुणाः स्वरूपं चाग्रे वक्ष्यते । किंच । नित्यत्वाच्च ताभ्यः श्रुतिभ्यः । २५ अयमात्माजरोमरः (बृ. ४।४।२५) न जायते म्रियते (कठ. १।२।१८) इत्येवमादिभ्यः ॥ २।३।१७ ॥ १० ॥

---

तथापि बहुवादिविप्रतिपन्नत्वाद् युक्तिभिः साधयति । ब्रह्मवैलक्षण्यार्थमु-त्क्रान्तिपूर्वकत्वमुक्तम् ॥ २।३।१९ ॥

## स्वात्मना चोत्तरयोः ॥ २।३।२० ॥

उत्क्रान्तिगत्यागतीनां संबन्ध इन्द्रियादिभिः परिष्वङ्गोऽप्यस्ति ।
५ ततः संदेहोपि भवेत् किमुपाधित एतेषां संबन्धो भवेत्स्वतो वेति ॥

उत्तरयोर्गत्यागत्योः स्वात्मना केवलस्वरूपेण ।
ऊर्णनाभिर्यथा तन्तून्सृजते संचरत्यपि ॥
जाग्रत्स्वप्ने तथा जीवो गच्छत्यागच्छते पुनः ॥

ब्रह्मोपनिषत् । अनेन जीवेनात्मनानुप्रविश्य ब्रह्माप्येति । काम-
१० रूप्यनुसंचरन् ( तै. उ. ३।१० ) इति वा ।

अथवोत्क्रान्तिगत्यागतीनां जीवसंबन्ध एव बोध्यते नाणुत्वम् । स्वात्मना चोत्तरयोरित्यणुत्वम् । अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ( म. भा. ३।२९७।१७ ) इत्युत्क्रमे गत्यतिरिक्ते स्वातन्त्र्याभावात् । स्वात्मना जीवरूपेण चकारादिन्द्रियैश्च गत्यागत्योः संबन्धी जीव इत्यर्थः ।
१५ अतो मध्यपरिमाणमयुक्तमित्यणुरेव भवति ॥ २।३।२० ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २।३।२१ ॥

जीवो नाणुर्भवितुमर्हति । कुतः । अतच्छ्रुतेः । अणुत्वविपरीतव्या-पकत्वश्रुतेः । स वा एष महानज आत्मा योयं विज्ञानमयः (बृ. ४।४।२२) इति चेन्न । इतराधिकारात् । इतरः परं ब्रह्म । तस्याधिकारे महानज
२० इति वाक्यम् । प्रकरणेन शब्दाश्च नियम्यन्ते । अन्यपरा अपि योगेन ब्रह्मपरा भविष्यन्ति ॥ २।३।२१ ॥

## स्वशब्दोन्मानाभ्यां च ॥ २।३।२२ ॥

स्वयं विहत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिति ( बृ. ४।३।९ ) इति स्वशब्दोणुपरिमाणं जीवं बोधयति । न हि स्वप्ने
२५ व्यापकस्य वा शरीरपरिमाणस्य वा विहरणं संभवति । वालाग्रशतभागस्य शतधा कल्पितस्य तु । भागो जीवः स विज्ञेयः ( श्वे. ५।८ ) इति आरा-

ग्रमात्रो ह्यपरोपि दृष्टः ( श्वे. ५।८ ) इति चोन्मानम् । चकारात्स्वप्नप्रबोधयोः संधावागतिदर्शनम् ॥ २।३।२२ ॥

**अविरोधश्चन्दनवत् ॥ २।३।२३ ॥**

अणुत्वे सर्वशरीरव्यापि चैतन्यं न घटत इति विरोधो न भवति ५ चन्दनवत् । यथा । चन्दनमेकदेशास्थितं सर्वदेहसुखं करोति महातपतैलस्थितं वा तापनिवृत्तिम् ॥ २।३।२३ ॥

**अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २।३।२४ ॥**

चन्दनेवस्थितिवैशेष्यमनुपहतत्वचि सम्यक्तयावस्थानं तस्मात् । त्वच १० एकत्वात् तत्र भवतु नाम नतु प्रकृते तथा संभवतीति चेन्न । अभ्युपगमात् । अभ्युपगम्यते जीवस्यापि स्थानविशेषः । हृदि हि । हृदि जीवस्य स्थितिः । गुहां प्रविष्टाविति हि श्रुतिः ॥ २।३।२४ ॥

**गुणाद्वालोकवत् ॥ २।३।२५ ॥**

जीवस्य हि चैतन्यं गुणः स सर्वशरीरव्यापी । यथा मणिप्रवेकस्य १५ कान्तिर्बहुदेशं व्याप्नोति तद्वत् । प्रभाया गुणत्वमेव स्पर्शानुपलम्भात् । उदकगतौष्ण्यवत् । न च विजातीयस्यारम्भकत्वं प्रमाणाभावात् लोकप्रतीतिस्तु सर्वैर्वादिभिरुपपाद्या । तत्र गुणिकल्पनापेक्षया गुण एव स्थलान्तर आरभ्यत इति कल्प्यताम् । तथैव लोकप्रतीतेः । पुष्परागादेरपि प्रभारूपमेव तावद्देशं व्याप्नोतीति मणिस्वभावादेवाङ्गीकर्तव्यम् । आरम्भकस्य २० तेजसस्तत्राभावात् । कान्तिः प्रभा रूपमिति हि लोके पर्यायः । वाशब्दो यथालोकं युक्तिः कल्पनीयेति सूचयति । ब्रह्मसिद्धान्ते तु यथैव लोके दृश्यते तथैव ब्रह्मणो जातमिति न कल्पनालेशोपि ॥ २।३।२५ ॥

**व्यतिरेको गन्धवत् ॥ २।३।२६ ॥**

सिद्धं दृष्टान्तमाह । यथा चम्पकादिगन्धश्चम्पकव्यवहितस्थलेप्युपल- २५ भ्यते वेदोक्तत्वादस्य दृष्टान्तत्वम् । यथा वृक्षस्य संपुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाति ( ना. ११ ) इति । अन्यथा कल्पना त्वयुक्तेत्यवोचाम ॥ २।३।२६ ॥

## तथा च दर्शयति ॥ २।३।२७ ॥

हृदयायतनमणुपरिमाणत्वं चात्मनोभिधाय तस्यैवालोमभ्य आनखाग्रेभ्य इति चैतन्येन गुणेन समस्तशरीरव्यापित्वं दर्शयति ॥ २।३।२७ ॥

## पृथगुपदेशात् ॥ २।३।२८ ॥

५ प्रज्ञया शरीरं समारुह्य ( कौ. ३।६ ) इति करणत्वेन पृथगुपदेशाच्चैतन्यं गुणः ॥ २।३।२८ ॥ १२ ॥

---

## १३ तद्गुणसारत्वादित्यधिकरणम् ।

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २।३।२९ ॥

ननु तत्त्वमस्यादिवाक्यैः परमेव ब्रह्म जीव इति कथमणुत्वमिती-
१० मामाशङ्कां निराकरोति तुशब्दः । तस्य ब्रह्मणो गुणाः प्रज्ञाद्रष्टृत्वादयस्त एवात्र जीवे सारा इति जडवैलक्षण्यकारिण इत्यमात्ये राजपदप्रयोगवज्जीवे भगवद्व्यपदेशः । मैत्रेयीति संपूर्णे ब्राह्मणे भगवत्त्वेन जीव उक्तः ।

ननु कथमन्यस्यान्यधर्मवत्त्वेन कथनम् । नहि निरूपणस्थल एवोपचारः संभवति । तत्राह । प्राज्ञवत् । तद्यथा प्रियया स्त्रिया संप-
१५ रिष्वक्तः ( बृ. ४।३।२१ ) इत्यत्र—एवमेवायꣳ शारीर आत्मा प्राज्ञेनात्मना संपरिष्वक्तः ( बृ. ४।३।२१ ) इत्यभिधाय प्राज्ञस्वरूपमाह । तद्वा अस्यैतदतिच्छन्दोपहतपाप्माभयꣳ रूपमशोकान्तरमत्र पिता अपिता भवति ( बृ. ४।३।२२ ) इत्यादि । प्राज्ञश्च सुषुप्तसाक्षी । न हि तस्यापहतपाप्मत्वमस्ति ब्रह्मलिङ्गात् । एवमेव शारीरस्यापि जीवस्य ब्रह्म-
२० धर्मबोधिकाः श्रुतयः ।

इदमत्र वक्तव्यम् । सर्वोपनिषत्सु ब्रह्मज्ञानं परमपुरुषार्थसाधनमिति तन्निर्णयार्थं भगवान् व्यासः सूत्राणि चकार । तत्र ब्रह्मसूत्रे विचारं प्रतिज्ञाय जगत्कर्तृत्वाद्यसाधारणलक्षणं ब्रह्मणः प्रतिज्ञाय समन्वयनिरूपणे जीववाक्यानि दूरीकृत्याविरोधे ऐक्येऽप्यहिताकरणादिदो-
२५ षमाशङ्क्य—अधिकं तु भेदनिर्देशात् ( ब्र. सू. २।१।२२ ) इति परिहृत्य जीवस्याणुत्वमुपचाराद् ब्रह्मत्वमंशत्वं पराधीनकर्तृत्वादिकं प्रति-

पाद्य तस्यैव दक्षिणमार्गेण पुनरावृत्तिमुक्त्वा ससाधनेन ब्रह्मज्ञानेनार्चिरादिद्वारा ब्रह्मप्राप्तिमुक्त्वा—न स पुनरावर्तते ( कालाग्नि. २ ) इत्यनावृत्तिं वदञ् छास्त्रपर्यवसानेन सर्वान् वेदान्तानव्याकुलतया योजितवान् ।

तत्र कश्चित् तद्व्यपदेशेन प्रोक्तानि तत्त्वमस्यादिवाक्यानि स्वीकृत्य जीव-
५ मात्रं च ब्रह्म स्वीकृत्य तदतिरिक्तस्य सर्वस्य कारणांशकार्यरूपस्य मिथ्यात्वं परिकल्प्य तद्बोधकश्रुतीनामर्थवादत्वेन मिथ्यात्वं स्वीकृत्य सुषुप्तिसंपत्त्योर्भगवता प्रकटीकृतमानन्दरूपत्वं तत्प्रतिपादकवाक्यानां सद्योमुक्तिरूपफलवाचकत्वमुक्त्वा क्रममुक्तिमुपासनापरत्वेन योजयित्वा वेदसूत्राणि व्याकुलीचकार । तद् वेदान्तानां ब्रह्मपरत्वं जीवपरत्वं वेति यदत्र युक्तं तत्सद्भि-
१० रनुसंधेयम् ॥ २।३।२९ ॥

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ २।३।३० ॥

ननु कथमन्यस्य नीचस्य सर्वोत्कृष्टव्यपदेशोपि । न हि प्रामाणिकैः सर्वथायुक्ते व्यपदेशः क्रियते । न चोक्तगुणसारत्वाद् ब्रह्मण आनन्दांशस्य प्राकट्यादिति वाच्यम् । तथा सति प्राज्ञवत्पुनास्तिरोहितं
२० स्यादिति तस्य तद्व्यपदेशो व्यर्थोयुक्तश्चेति चेत् । नायं दोषः । कुतः । यावदात्मभावित्वात् । पश्चाद्यावत्पर्यन्तमात्मा नित्यत्वात् । सर्वदानन्दांशस्य प्राकट्यात् । तस्य तथैव दर्शनमस्ति । अनावृतैश्वर्यादीनामुक्तत्वात् । प्राज्ञात्संपन्नत्वं विशेषः । चकारात्तस्य चानन्दः प्रकटित इति न दूषणगन्धोपि ।

२५ व्यपदेशो वा नात्यन्तमयुक्तस्य । यावदात्मा ब्रह्म भवत्यानन्दांशप्राकट्येन तावदेव तद्व्यपदेशः । राजज्येष्ठपुत्रवत् । एतदेवोक्तम् ।

व्यापकत्वश्रुतिस्तस्य भगवत्त्वेन युज्यते ॥ २९ ॥
आनन्दांशाभिव्यक्तौ तु तत्र ब्रह्माण्डकोटयः ॥
प्रतीयेरन्परिच्छेदो व्यापकत्वं च तस्य तत् ॥ ३० ॥

१० इति ॥ २।३।३० ॥

## पुंस्त्वादिवत्त्वस्य सतोभिव्यक्तियोगात् ॥ २।३।३१ ॥

व्यपदेशदशायामप्यानन्दांशस्य नात्यन्तमसत्त्वम् । पुंस्त्वादिवत् । यथा पुंस्त्वं सेकादिसामर्थ्यं बाल्ये विद्यमानमेव यौवने प्रकाशते तथानन्दांशस्यापि सत एव व्यक्तियोगः ॥ २।३।३१ ॥

## नित्योपलब्ध्यनुपलब्धिप्रसंगोन्यतरानियमो वान्यथा ॥ २।३।३२ ॥

५

ननु कथमेवं स्वीक्रियते । इदानीं संसारावस्थायां सच्चित्प्राकट्यमेव । मोक्षे त्वानन्दांशोपि प्रकट इति तन्निवारयति । तथा सति नित्यमुपलब्धिः स्यादानन्दांशस्य । तथा सति न संसारावस्थोपपद्येत । अथानुपलब्धिः सर्वदा तथा सति मोक्षदशा विरुध्येत । अथान्यतरानियमः । १० जीवो निरानन्द एव ब्रह्म त्वानन्दरूपम् । तथा सति ब्रह्मैव सन् ब्रह्माप्येति ( बृ. ४।४।६ ) इति श्रुतिविरोधः । तस्मात्पूर्वोक्त एव प्रकारः स्वीकर्तव्य इति सिद्धम् ॥ २।३।३२ ॥ १३ ॥

---

## १४ कर्ता शास्त्रार्थवत्त्वादित्यधिकरणम् ।

## कर्ता शास्त्रार्थवत्त्वात् ॥ २।३।३३ ॥

१५ सांख्यानां प्रकृतिगतमेव कर्तृत्वमिति तन्निवारणार्थमधिकरणारम्भः । कर्ता जीव एव । कुतः । शास्त्रार्थवत्त्वात् । जीवमेवाधिकृत्य वेदेभ्युदयानिःश्रेयसफलार्थं सर्वाणि कर्माणि विहितानि ब्रह्मणोनुपयोगात् । जडस्याशक्यत्वात् । संदिग्धेपि तथैवाङ्गीकर्तव्यम् ॥ २।३।३३ ॥

## विहारोपदेशात् ॥ २।३।३४ ॥

२० तस्यैव गान्धर्वादिलोकेषु—यद्यत्कामयते तत्तद्भवति—इति विहार उपदिष्टः । ततश्च कर्तृत्वभोक्तृत्वयोः साधुकारी साधुर्भवति—इति सामानाधिकरण्यश्रवणाज्जीव एव कर्ता ॥ २।३।३४ ॥

## उपादानात् ॥ २।३।३५ ॥

तदेषां प्राणानां विज्ञानेन विज्ञानमादाय ( बृ. २।१।१७ ) इति

---

17–M om. अभ्युदय after वेदे ।

जीवेन सर्वेषां विज्ञानमुपादीयते । तस्मादिन्द्रियादीनां करणत्वमेव । स्वातन्त्र्यादस्यैव कर्तृत्वम् । यस्तु मन्यते बुद्धिसंबन्धाज्जीवस्य कर्तृत्वमिति । स प्रष्टव्यः । किं बुद्धिकर्तृत्वं जीवे समायाति । अथवा जीवगतमेव कर्तृत्वं बुद्धिसंबन्धादुद्गच्छति । अथवा शशविषाणायितमेव कर्तृत्वं संबन्धे ५ समायाति । नाद्यः । जडत्वात् अनङ्गीकारात्पूर्वं निराकृतत्वाच्च । द्वितीये त्विष्टापत्तिः उपादानविरोधश्च । तृतीये शास्त्रविरोधः ब्रह्मणि सिद्धत्वाच्च । असत्कार्यस्य निराकृतत्वात् । सर्वविप्लवस्तु माध्यमिकवदुपेक्ष्यः ॥ २।३।३५ ॥

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ २।३।३६ ॥

१० व्यपदेशो—विज्ञानं यज्ञं तनुते कर्माणि तनुतेपि च ( तै. २।५ ) इति । अत्र सांख्ये बुद्ध्यादीनामेव कर्तृत्वं न जीवस्येति क्रियायां यागादिकर्मसु न तु भोगे । जीवस्य कर्तृत्वं न चेत् । न । तथा सति निर्देशस्य विपर्ययो भवेत् । विज्ञानेन विज्ञानमादाय ( बृ. २।१।१७ ) इति श्रुत्यनुरोधात् । प्रकृतेपि तृतीयान्ततापद्येत । अथ स्वव्यापारे कर्तृत्वं १५ तथापि पूर्वनिर्देशस्य विज्ञानमयस्य विपर्ययः स्यात् । विकारित्वं स्यात् । तच्चासंगतम् । ज्यच्त्वात् । विज्ञानमादायेत्यत्र विपर्यय एवैकस्य प्रदेशभेदेनार्थभेदोपि । भगवति सर्वे शब्दाः स्वभावत एव प्रवर्तन्ते । औपचारिकत्वज्ञापकाभावात् । यज्ञो यजमान इति श्रद्धादीनां शिरस्त्वादिः । तस्माद्विज्ञानमयो जीव एव । जडस्य स्वातन्त्र्याभावान्न २० कर्तृत्वम् ॥ २।३।३६ ॥

## उपलब्धिवदनियमः ॥ २।३।३७ ॥

ननु जीवस्य कर्तृत्वे हिताकरणादिदोषप्रसक्तिरिति चेत् । न । उपलब्धिवदनियमः । यथा चक्षुषेष्टमनिष्टं चोपलभत एवमिन्द्रियैः कर्म कुर्वन्निष्टमनिष्टं वा प्राप्नोति ॥ २।३।३७ ॥

## २५ शक्तिविपर्ययात् ॥ २।३।३८ ॥

नन्वीश्वरवत्स्वार्थमन्यथा न कुर्यादिति चेत् । शक्तिविपर्ययात् । तथा सामर्थ्याभावात् । इत एव दैवादहितमपि करोति ॥ २।३।३८ ॥

## समाध्यभावाच्च ॥ २।३।३९ ॥

जीवस्य क्रियाज्ञानशक्ती योगेन सिध्यतः। समाध्यभावाच्छक्त्यच्च-भाव इत्यर्थः। चकारात्तादृशमन्त्राभावोपि । न च सहजकर्तृत्वेनिर्मोक्षः। पराधीनकर्तृत्व एवैतदिति सांख्यस्य तन्मतानुसारिणो वान्यस्य भ्रम ५ एव । कर्तृत्वे न मुक्तिरिति । नपुंसक एवमुच्येतेति बाह्यवत् । निरि-न्द्रियस्यैव समाधिरित्यपि । करणत्वेन बुद्धिवन्न केनापि दूष्यते। तस्माज्जीवस्य स्वाभाविकं कर्तृत्वम् । ध्यायतीव लेलायतीव (बृ. ४।३।७) इत्यपि परधर्मानुकरणम् । अयमप्येको धर्मः ।

स्वाप्ययसंपत्त्योर्ब्रह्मण्यपदेशं पुरस्कृत्य सर्वविप्लवं वदन्नु-१० पेक्ष्यः ॥ २।३।३९ ॥

## यथा च तक्षोभयथा ॥ २।३।४० ॥

ननु कर्मकारिणां कर्तृत्वभोक्तृत्वभेदो दृश्यते तत् कर्तृभोक्तृत्वयो-र्भेदो भविष्यतीति चेन्न । यथा तक्षा रथं निर्माय तत्रारूढो विहरति पीठं वा । स्वतो वा न व्याप्रियते वाश्यादिद्वारेण वा । चकारादन्येपि स्वार्थ-१५ कर्तारः । अन्यार्थमपि करोतीति चेत्तथा प्रकृतेपि । सर्वहितार्थं प्रयत-मानत्वात् । न च कर्तृत्वमात्रं दुःखरूपम् । पयःपानादेः सुखरूपत्वात् । तथा च स्वार्थपरार्थकर्तृत्वं कारयितृत्वं च सिद्धम् ॥ २।३॥४०॥१४ ॥

---

## १५ परात्तु तच्छ्रुतेरित्यधिकरणम् ।

## परात्तु तच्छ्रुतेः ॥ २।३।४१ ॥

२० कर्तृत्वं ब्रह्मगतमेव । तत्संबन्धादेव जीवे कर्तृत्वं तदंशत्वादैश्वर्या-दिवत् । न तु जडगतमिति । अतो-नान्योतोऽस्ति (बृ. ४।३।२२) इति सर्वकर्तृत्वं घटते । कुत एतत् । तच्छ्रुतेः । तस्यैव कर्तृत्वकारयि-तृत्वश्रवणात् । यमधो निनीषति तमसाधु कारयति (कौ. ३।९)

---

4-D and F read ब्रह्मवत् for इति ।

12-A and C read तथा for तत् ।

इति । सर्वकर्ता सर्वभोक्ता सर्वनियन्तेति । सर्वरूपत्वान्न भगवति दोषः ॥ २।३।४१ ॥

**कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥२।३।४२॥**

ननु वैषम्यनैर्घृण्ययोर्न परिहारः । अनादित्वेन स्वस्यैव कारयि-
५ तृत्वादिति पक्षं तुशब्दो निवारयति । प्रयत्नपर्यन्तं जीवकृत्यम् । अग्रे तस्याशक्यत्वात्स्वयमेव कारयति । यथा बालं पुत्रं यतमानं पदार्थगुणदोषौ वर्णयन्नपि तत्प्रयत्नाभिनिवेशं दृष्ट्वा तथैव कारयति । सर्वत्र तत्कारणत्वाय तदानीं फलदातृत्वे येच्छा तामेवानुवदति । उन्निनीषति । अधोनिनीष-तीति । अन्यथा विहितप्रतिषिद्धयोर्वैयर्थ्यापत्तेः । अप्रामाणिकत्वं च ।
१० फलदाने कर्मापेक्षः । कर्मकारणे प्रयत्नापेक्षः । प्रयत्ने कामापेक्षः । कामे प्रवाहापेक्ष इति मर्यादारक्षार्थं वेदं चकार । ततो न ब्रह्मणि दोषगन्धोपि । न चानीश्वरत्वम् । मर्यादामार्गस्य तथैव निर्माणात् । यत्रान्यथा स पुष्टिमध्य इति ॥ २।३।४२ ॥ १५ ॥

---

## १६ अंशो नानाव्यपदेशादित्यधिकरणम् ।

१५ **अंशो नानाव्यपदेशादन्यथा चापि दाशकित-वादित्वमधीयत एके ॥ २।३।४३ ॥**

जीवस्य ब्रह्मसंबन्धि रूपमुच्यते । जीवो नाम ब्रह्मणोंशः । कुतः । नानाव्यपदेशात् । सर्व एवात्मानो व्युच्चरन्ति कपूयचरणा रमणीय-चरणाः इति च । ननु ब्रह्मणो निरवयवत्वात्कथं जीवस्यांशत्वमिति वाच्यम् ।
२० न हि ब्रह्म निरंशं सांशमिति वा क्वचिल्लोके सिद्धम् । वेदैकसमधि-गम्यत्वात् । साच श्रुतिर्यथोपपद्यते तथा तदनुल्लङ्घनेन वेदार्थज्ञानार्थं युक्तिर्वक्तव्या । सा चेत्स्वयं नावगता तपो विधेयम् । अभिज्ञा वा प्रष्टव्या इति । न तु सर्वविप्लवः कर्तव्य इति ।

तत्रैषा युक्तिः ।

२५ विस्फुलिङ्गा इवाग्नेर्हि जडजीवा विनिर्गताः ।
सर्वतः पाणिपादान्तात्सर्वतोक्षिशिरोमुखात् ॥ ३१ ॥

**निरिन्द्रियात्स्वरूपेण तादृशादिति निश्चयः ।**
**सदंशेन जडाः पूर्वं चिदंशेनेतरे अपि ॥**
**अन्यधर्मतिरोभावा मूलेच्छातोस्वतन्त्रिणः ॥ ३२ ॥**

इति ।

५ ब्रह्मवादेंशपक्ष एव ।

नन्वंशत्वे सजातीयत्वमायाति । श्रुत्यन्तरे पुनः—ब्रह्मदाशा ब्रह्मेमे कितवा उत । (आथर्वणिकब्रह्मसूक्ते) अत्र सर्वस्यापि ब्रह्मविज्ञानेन विज्ञान-प्रतिज्ञानाद् दाशादीनामपि ब्रह्मत्वं प्रतीयते । तत्कार्यत्व एव स्यादिति चेन्न । अन्यथा प्रकारान्तरेणाप्येके शाखिनो दाशकितवादित्वमधीयते १० शरीरत्वेनांशत्वेन च । स्वरूपतः कार्याभावेपि प्रकारभेदेन कार्यत्वात् । तथा च न साजात्यम् । आनन्दांशस्य तिरोहितत्वात् । धर्मान्तरेण तु साजात्यमिष्टमेव ॥ २।३।४३ ॥

## मन्त्रवर्णात् ॥ २।३।४४ ॥

पुरुष एवेदꣳ सर्वम् ( ऋ. सं. १०।९०।२ ) इत्युक्त्वा—पादोस्य १५ विश्वा भूतानि ( ऋ. सं. १०।९०।३ ) इति भूतानां जीवानां पादत्वं पादेषु स्थितत्वेन वांशत्वमिति ॥ २।३।४४ ॥

## अपि स्मर्यते ॥ २।३।४५ ॥

वेदे स्वतन्त्रतयोपपाद्य वेदान्तरेपि तस्यार्थस्यानुस्मरणम् । ममैवांशो जीवलोके जीवभूतः सनातनः ( भ. गी. १५।७ ) इति ॥ २।३।४५ ॥

२० 

## प्रकाशादिवन्नैवं परः ॥ २।३।४६ ॥

जीवस्यांशत्वे हस्तादिवत् तद्दुःखेन परस्यापि दुःखित्वं स्यादिति चेन्न । एवं परो न भवति । एवमिति प्रकारभेदः । द्विष्टत्वेनानुभव इति यावत् । अन्यथा सर्वरूपत्वात्कुत एवं तत्राह । प्रकाशादिवत् । नाग्नेर्हि तापो न हिमस्य तत्स्यात् ( भा. ११।२३।५६ ) इति । प्रकाशग्रहणं २५ धर्मत्वद्योतनाय । दुःखादयोपि ब्रह्मधर्मा इति । अतो द्वैतबुद्ध्यांशस्यैव दुःखित्वं न परस्य । अथवा प्रकाशः प्राकाश्यदोषेण यथा न दुष्टः । पापस्यापि तदंशत्वादिति ॥ २।३।४६ ॥

## स्मरन्ति च ॥ २।३।४७ ॥

स्मरन्ति च सर्वेप्यृषयोंशिनो दुःखासंबन्धमंशस्य दुःखसंबन्धं स्मरन्ति । तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः । न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा इति । कर्मात्मा त्वपरो योसौ मोक्षबन्धैः स
५ युज्यते । एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्यः ( क. २।५।११ ) चकारात्—तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति ( श्वे. ४।६। ) इति ॥ २।३ ४७ ॥

## अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ २।३।४८ ॥

ननु जीवस्य भगवदंशत्वे विधिविषयत्वाभावात्कर्मसंबन्धाभावेन
१० कथं फलसंबन्धः । जीवस्य च पुनरनेकदेहसंबन्धात् कः शूद्रः का भार्येति ज्ञानमप्यशक्यम् । अतः कर्ममार्गस्य व्याकुलत्वात् कथं जीवस्यापि दुःखित्वमित्याशङ्क्य परिहरति । अनुज्ञापरिहारौ विधिनिषेधौ जीवस्य देहसंबन्धाद्यो देहो यदा गृहीतस्तत्कृतौ । यथा शवाग्निश्चाण्डालभाण्डस्थमुदकं तद्धटादिश्च परिह्रियते । एवमुत्कृष्टं परिगृह्यते तथा जीवेपि देहसंबन्ध-
१५ कृतः । संबन्धश्चाध्यासिको भगवत्कृतश्च । आध्यासिको हि ज्ञानान्निवर्तते । द्वितीयो भगवतैव । जीवन्मुक्तानामपि व्यवहारदर्शनात् । श्रुतिस्तु भगवत्कृतसंबन्धमेवाश्रित्याग्निहोत्रादिकं विधत्ते । अन्यथा विद्यां स्वाज्ञानं च बोधयन्ती कर्माणि न विदध्यात् । शब्दज्ञानस्य पूर्वमेव सिद्धत्वात् । कथं सिद्धवद्यावज्जीवं विदध्यात् । न्यासोपि देहसंबन्ध एव ॥ २।३।४८ ॥

२०

## असंततेश्चाव्यतिकरः ॥ २।३।४९ ॥

ननु देहस्यापि बाल्यकौमारादिभेदात्कथं कर्मकाले ब्राह्मणत्वादि । जीवैक्यादितिचेद् देहान्तरेपि स्यादिति तत्राह देहान्तरे संततिरपि नास्ति । बाल्यादिभेदे पुनः संततिरेका । अतः संततिभेदान्न कर्मणां सांकर्यमिति ॥ २।३।४९ ॥

२५

## आभास एव च ॥ २।३।५० ॥

ननु सच्चिदानन्दस्य ब्रह्मणोंशः सच्चिदानन्द एव भवेदतः कथं प्रवाहे प्रवेशो भगवतश्च सर्वकार्याणि तत्राह । आभास एव जीवः । आनन्दां-

शस्य तिरोहितत्वात्। चकारादाकारस्याप्यभावः। न तु सर्वथा प्रतिबिम्ब-
वन्मिथ्यात्वं जलचन्द्रवदित्येकस्यानेकत्वे दृष्टान्तः। तथा सत्यध्यासश्च
स्वस्य न स्यात्। तत्र वृत्त्यादिदोषप्रसंगश्च। अतो न मिथ्यात्वरूप आभा-
सोत्र विवक्षितः॥ २।३।५०॥

५ **अदृष्टनियमात्॥ २।३।५१॥**

ईशित्वाय नैयायिकाद्यभिमतं जीवरूपं निराकरोति। नानात्मानो
व्यवस्थात इति भोगव्यवस्थया जीवनानात्वमङ्गीकृतम्। तत्रादृष्टस्य
नियामकत्वं तन्मते सिद्धम्। देशान्तरवस्तूत्पत्त्यन्यथानुपपत्त्या
व्यापकत्वं चाङ्गीकृतम्। एवं च क्रियमाणे मूल एव कुठारः स्यात्।
१० सर्वेषामेव जीवानामेकशरीरसंबन्धात् कस्यादृष्टं तद्भवेत्। न च मिथ्याज्ञा-
नेन व्यवस्था। तत्रापि तथा। न चानुपपत्त्या परिकल्पनम्। श्रुत्यैवोपपत्तेः।
एतेन विरोधादृषिप्रामाण्यमपि निराकृतम्॥ २।३।५१॥

**अभिसंध्यादिष्वपि चैवम्॥ २।३।५२॥**

ननु मनःप्रभृतीनां नियामकत्वात्तेषामीश्वरेच्छया नियतत्वान्न
१५ दोष इति चेन्न। पूर्ववदेव दोषप्रसक्तिः। तादृशेश्वरकल्पना च पूर्वमेव निरा-
कृता॥ २।३।५२॥

**प्रदेशादिति चेन्नान्तर्भावात्॥ २।३।५३॥**

आत्मनो विभुत्वेपि प्रदेशभेदेन व्यवस्था। आत्मानि तादृशः प्रदे-
शविशेषोस्ति येन सर्वमुपपद्यत इति चेन्न। अन्यस्यापि प्रदेशस्तत्रान्त-
२० र्भवति। तस्यैव वा देशस्य देशान्तरगमने पूर्वदेशस्य त्यक्तत्वात्सोंशोंत-
र्भवेत् तिरोभवेदिति॥ २।३।५३॥ १६॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये
द्वितीयाध्यायस्य तृतीयः पादः॥ २।३॥

---

21–A and C read तिरोभूतो भवेत् for तिरोभवेत्।

# द्वितीयाध्याये चतुर्थः पादः ॥

## १ तथा प्राणा इत्यधिकरणम् ।

### तथा प्राणाः ॥ २।४।१ ॥

जीवशरीरवर्तिनां प्राणादीनां विचारार्थं पादारम्भः । तत्र जीवं
५ निरूप्य तादृशधर्मवत्त्वं प्राणेतिदिशाति । प्राणशब्दप्रयोगः प्रियत्वाय प्राणा
इन्द्रियाणि । मनसो मुख्यत्वादेकवचनम् । उत्क्रान्तिगत्यागतीनामित्या-
रभ्य सर्वोपपत्तिरत्रातिदिष्टा चिदंशस्यापि तिरोभाव इति पृथङ् निरू-
पणम् । ननु तद्गुणसारत्वादयः कथमुपदिश्यन्त इति चेत् । न । सत्य-
मस्ति । तत्रापि ये प्राणं ब्रह्मोपासते ( तै. २।३ ) इति ॥ १ ॥

१०

### गौण्यसंभवात् ॥ २।४।२ ॥

ननूत्क्रान्त्यादिश्रुतिर्गौणी भविष्यति । न । गौण्यसंभवात् । सा
श्रुतिर्गौणी न संभवति । एकैव श्रुतिर्जीवे मुख्या प्राणे गौणीति कथं
संभवति ॥ २।४।२ ॥

### तत्प्राक् श्रुतेश्च ॥ २।४।३ ॥

१५ जडत्वेनाधिकविचारोत्र क्रियते । सृष्टेः पूर्वमपि प्राणादीनां स्थितिः
श्रूयते । असद्वा इदमग्र आसीत्तदाहुः किं तदसदासीदिति ऋषयो वाव तेग्रे
असदासीत्तदाहुः के ते ऋषय इति प्राणा वा ऋषयः ( बृ. २।२।३ )
इति । ननु—सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ( छां. ६।२।१ )
इति विरोध इति चेत् । न । स्वरूपोत्पत्तिरेवात्र निषिध्यते । जीववत् ।
२० न तूद्गमः । उद्गमात् पूर्वं तु सदेवेति श्रुतिः । चकारान्मोक्षे तस्यापि
संपत्तिः श्रूयते स्थलान्तरे । एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च
( मुं. २।१।३ ) इति श्रुतिर्विस्फुलिङ्गसदृशी ॥ २।४।३ ॥

### तत्पूर्वकत्वाद्वाचः ॥ २।४।४ ॥

मनः पूर्वरूपं वागुत्तररूपमिति । तस्य यजुरेव शिरः ( तै. २।३)
२५ इति । तथा च वेदानां स्वत उत्पत्त्यभावात्तत्पूर्वरूपमनसः कथ-
मुत्पत्तिः ॥ २।४।४ ॥

25–B om. रूप before मनसः ।

## सप्तगतेर्विशेषितत्वाच्च ॥ २।४।५ ॥

तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति ( बृ. ४।४।२ ) इति पूर्वोक्तानां चक्षुरादीनां–अथारूपज्ञो भवतीत्येकीभवति न पश्यतीत्याहुः ( बृ. ४।४।२ ) इत्यादिभिर्जीवगतिः ५ सप्तानां गतिभिर्विशेष्यते । सप्त गतयस्तेन विशेषिता एकीभवन्तीति । अतो जीवसमानयोगक्षेमत्वाज्जीवतुल्यतेति । चकारात्तत्तदुपाख्यानेषु चक्षुःप्रभृतीनां देवतात्वं संवादश्च । अतश्चेतनतुल्यत्वम् ।

केचिदिदं सूत्रमुत्तरसूत्रपूर्वपक्षत्वेन योजयन्ति । तत्रायमर्थः । ते प्राणाः कतीत्याकाङ्क्षायां– सप्त प्राणाः प्रभवन्ति तस्मात्सप्तार्चिषः समिधः १० सप्त जिव्हाः । अष्टौ ग्रहा अष्टावतिग्रहाः ( मुं. २।१।८ ) इति । सप्त इति । सप्त वै शीर्षण्याः प्राणा द्वाववाञ्चौ ( तै. सं ५।१।७।१ ) इति । नव वै पुरुषे प्राणा नाभिर्दशमी । दश वै पशोः प्राणा आत्मा एकादशः ( बृ. ३।९।४ ) इत्येवमादिषु नानासंख्या प्राणानां प्रतीता । तत्र श्रुतिविप्रतिषेधे किं युक्तमिति संशये सप्तैवेति प्राप्तम् । कुतः । गतेः । १५ सप्तानामेव गतिः श्रूयते । सप्त इह लोका येषु चरन्ति प्राणा गुहाशया निहताः सप्त सप्त ( मुं. २।१।८ ) इति । किंच । विशेषितत्वाच्च । जीवस्योत्क्रमणसमये सप्तानामेव विशेषितत्वम् । अन्ये तु पुनरेतेषामेव वृत्तिभेदाद् भेदा इत्येवं प्राप्ते ॥२।४।५ ॥ १ ॥

उच्यते ।

---

२० 

### २ हस्तादय इत्यधिकरणम् ।

## हस्तादयस्तु स्थितेतो नैवम् ॥ २।४।६ ॥

पूर्वसंबन्ध उत्सूत्रं पूर्वपक्षः । तुशब्दः पूर्वपक्षं व्यावर्तयति । हस्तादयः सप्तभ्योधिकाः हस्तौ चादातव्यं च । उपस्थश्चानन्दयितव्यं च । पायुश्च विसर्जयितव्यं च । पादौ च गन्तव्यं च ( प्र. ४।८ ) इति ।

---

10–A and C om. सप्त इति before सप्त वै ।

चक्षुरादिगणनायामेतेपि चत्वार इन्द्रियत्वेन गणिताः । स्थिते साति श्रुतौ गणनया चक्षुरादितुल्यत्वे साति । अतो हेतोः सप्तैवेति न किंत्वेकादश । अवान्तरगणना सूचनयासंभवाभिप्राया । अधिकसंख्यान्तःकरणभेदादिति । एकादशैवेन्द्रियाणीति स्थितम् ॥ २।४।६ ॥ २ ॥

५

## ३ अणवश्चेत्यधिकरणम् ।

### अणवश्च ॥ २।४।७ ॥

सर्वे प्राणा अणुपरिमाणाः । गतिमत्त्वेन नित्यत्वेणुत्वमेव । परिमाणप्रमाणाभावात्पुनर्वचनम् ॥ २।४।७ ॥ ३ ॥

## ४ श्रेष्ठश्चेत्यधिकरणम् ।

१०

### श्रेष्ठश्च ॥ २।४।८ ॥

मुख्यश्च प्राणो नित्यगतिमानणुपरिमाणश्च । चकारादतिदेशः । नासदासीदित्यत्र—आनीदवातं स्वधया तदेकम् ( ऋ. ८।७।१७ तै. ब्रा. २।८ ) इति अननात्मकस्य पूर्वसत्ता प्रदर्शिता ॥ २।४।८ ॥

### न वायुक्रिये पृथगुपदेशात् ॥ २।४।९ ॥

१५ ननु मुख्यः प्राणो वायुरेव भविष्यति । इन्द्रियाणां क्रिया वा । एवं हि श्रूयते । यः प्राणः स वायुः । एष वायुः पञ्चविधः । प्राणोपानो व्यान उदानः समानः ( बृ. १।५।३ ) इति । सामान्यकरणवृत्तिः प्राणाद्या वायवः पञ्च ( सां. का. २९ ) इति । तत्रान्तरीया आचक्षते । तदुभयमपि न । कुतः । पृथगुपदेशात् । एतस्माज्जायते प्राणो मनः सर्वेन्द्रि-
२० याणि च । खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी ( मुं. २।१।३ ) इति प्राणवाय्वोः पृथगुपदेशात् । वृत्तिवृत्तिमतोरभेदेन ततोपि पृथगुपदेशाच्च ॥ २।४।९॥४ ॥

## ५ चक्षुरादिवत्त्वित्यधिकरणम् ।

### चक्षुरादिवत्तु तत्सहशिष्ट्यादिभ्यः ॥ २।४।१० ॥

२५ स प्राणः स्वतन्त्रः परतन्त्रो वेति विचारे स्वतन्त्र इति तावत्प्रा-

प्तम् । सुप्तेषु वागादिषु प्राण एको मृत्युनानाप्तः प्राणः संवर्गो वागादीन् संवृक्ते प्राण इतरान् प्राणान् रक्षति मातेव पुत्रान् इति । इमामाशङ्कां निराकरोति तुशब्दः । चक्षुरादिवदयमपि प्राणोस्वतन्त्रः । मुख्यतो भगवदधीनः । व्यवहारे जीवाधीनः । कुतः । तत्सहशिष्ट्या-
५ दिभ्यः । चक्षुरादिवत्सहशासनात् । इन्द्रियजयवत्प्राणजयस्यापि दृष्टत्वात् । आदिशब्देन जडत्वादयः ॥ २।४।१० ॥

## अकरणत्वाच्च न दोषस्तथाहि दर्शयति ॥ २।४।११ ॥

ननु प्राणस्य जीवोपकरणत्वेन तदुपकारकव्यापारवत्त्वमपेक्ष्यते । तत्रैकादशैव वृत्तयः तन्त्रान्तरेपि सिद्धाः । एकादशामी मनसोपि वृत्तय
१० आकूतयः पञ्च धियोभिमानः । मात्राणि कर्माणि पुरं च तासां वदन्ति चैकादश वीर भूमीः ( भा. ५।११।९ ) इति । तथा कश्चित्प्राणस्य व्यापारोस्तीति चेत् । नैष दोषः । कुतः । अकारणत्वात् । करणस्यैव हि व्यापारोपेक्षितः । अन्यस्य कार्यमात्रमपेक्षितम् । तत्राह । तथाहि कार्यवत्त्वं युक्तं तच्छ्रुतिरेव दर्शयति । तस्मिन्नुत्क्रामत्यथेतरे (प्र. २।४) इत्यादि-
१५ श्रुतिभिः । प्राणनिमित्तैव शरीरास्थितिरिति । तस्माद्व्यापाराभावेपि स्वरूपस्थितिमात्रेण तस्योपकारित्वम् ॥ २।४।११ ॥

## पञ्चवृत्तेर्मनोवद् व्यपदिश्यते ॥ २।४।१२ ॥

व्यापारव्यतिरेकेणोपकारित्वमसमञ्जसमिति चेत्तत्राह । पञ्चवृत्तेः । अहमेवैतत् पञ्चधात्मानं विभज्यैतद्बाणमवष्टभ्य विधारयामि ( प्र. २।३ )
२० इति । यथा मनसो द्वारभेदेनैवैकादश वृत्तयः स्वरूपत एव । एवमेव प्राणस्यापि पञ्चधात्मानं विभज्य कार्यकारणं व्यपदिश्यते ॥ २।४।१२ ॥

## अणुश्च ॥ २।४।१३ ॥

अतिदेशेन प्राप्तमप्यणुत्वं पञ्चधात्मानं विभज्येति वचनात्संदिग्धं पुनर्विधीयते । आसन्योप्यणुः । चकारात्पूर्वोक्तसर्वसमुच्चयः ॥२।४।१३॥५॥

---

## ६ ज्योतिराद्यधिष्ठानं त्वित्यधिकरणम्।

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ २।४।१४ ॥

वागादीनां देवताधिष्ठानवतां प्रवृत्तिः स्वत एव वा। जीवाधिष्ठान-ब्रह्मप्रेरणयोर्विद्यमानत्वादिति संशयः। विशेषकार्याभावान्न देवतापेक्षेति ५ पूर्वपक्षं निराकरोति तुशब्दः। वागादीनां ज्योतिराद्यग्न्याद्यधिष्ठानमवश्यमङ्गीकर्तव्यम्। कुतः। तदामननात्। तथाम्नायते—अग्निर्वाग्भूत्वा मुखं प्राविशत् (ऐ. २।४) इत्यादि।

अयमर्थः।

योऽध्यात्मिकोयं पुरुषः सोसावेवाधिदैविकः।

१० यस्तत्रोभयविच्छेदः स स्मृतो ह्याधिभौतिकः (भा० स्कं० २।१०।८)

इत्याध्यात्मादिकानां स्वरूपं वागादयश्चानुरूपा नित्याः। तत्र यदि त्रैविध्यं न कल्प्येत तदैकस्मिन्नेव शरीर उपक्षीणं शरीरान्तरे न भवेत्। कल्प्यमाने त्वग्निर्देवतारूपोनेकरूपभवनसमर्थो वाग्रूपो भूत्वा सर्वत्र प्रविष्ट इति संगच्छते। ते चाग्न्यादयश्चेतना भगवदंशास्तिरोहि-१५ तानन्दाः सामर्थ्ययुक्ता इति कार्यवशादवगम्यते। आध्यात्मिकाधिदैविकयोरेकत्वाद् वदनादिकार्यार्थमाध्यात्मिका एव निरूपिताः। उद्गमने—एतस्माज्जायते प्राणः (मुं. २।१।३) इत्यादिषु वागादीनां नियमेन तत्तज्जीवसांनिध्यं स्वतश्चानिर्गमनं मृत्युरूपश्रमेण तत्र लयः पुनरुद्गमनं समष्टिव्यष्टिभावश्च नोपपद्येत। आधिभौतिककृतश्चायं भेद इत्यग्रे २० व्यक्तीकरिष्यते। एवमेव ब्रह्मणोपि। अनेन जीवेनात्मनानुप्रविश्य (छां. ६।३।२) इत्यपि निःसंदिग्धं द्रष्टव्यं यदज्ञानात्सर्वोविप्लवव्यामोहः ॥ २।४।१४। ॥ ६ ॥

---

## ७ प्राणवतेत्यधिकरणम्।

## प्राणवता शब्दात् ॥ २।४।१५ ॥

---

19–A and C read अन्यथा before नोपपद्येत।
21–A and C read इत्यत्रापि for इत्यपि।

यदधिष्ठानमग्न्यादि तत्किं स्वत एवान्यसाहितं वेति संदेहः । किं तावत्प्राप्तम् । स्वत एवेति । पूर्वोक्तन्यायेन तावतैव सिद्धेरनवस्थानाच्च देवतात्वव्याघातश्चेत्येवं प्राप्ते । उच्यते । प्राणवताधिष्ठितं वागादि । कुतः । शब्दात् । सोयमग्निः परेण मृत्युनातिक्रान्तो दीप्यते(बृ० १।३।१२)इत्यादि ।
५ अयमर्थः । द्वया ह प्राजापत्याः ( बृ० १।३।१ ) इत्यत्राधिष्ठातृत्वमग्नीनामुक्तम् । देवा इत्यविशेषेणेन्द्रियाधिष्ठात्र्योन्याश्च । तेषां प्रतिबन्धकासुरातिक्रमेण स्वर्गलोके गमनेच्छा बभूव । तत्र यज्ञेनैव स्वर्ग इति । तत्र जनको ह वैदेह ( बृ० ३।१।१ ) इति ब्राह्मणे केनाक्रमेण यजमानः स्वर्गं लोकमाक्रमते इत्युद्गात्रर्त्विजा वायुना प्राणेनेत्युद्गात्रैवाक्रमणामिति
१० सिद्धम् ।

तत्रान्योन्योद्गातृत्ववरणे तथोद्गाने यो वाचि भोगस्तं देवेभ्य इत्याम्नातम् । तदनु श्रमरूपपाप्मना वेधानन्तरमप्रतिरूपं वदतीति निरूपितम् । सोपि दोषो देवानां प्राप्नोति । तच्छ्रुतिविप्रतिषिद्धम् । न ह वै देवान्पापं गच्छति ( बृ० १।५।२० ) इति । तदनु प्राण एवोद्गाता सिद्धः ।
१५ तेनान्येषामपि पापसंबन्धो निवारितः । ततः परेण तस्य चेति सूत्रेण मृत्युमतिक्रान्तो दीप्यत इति । अतो दीप्यमानस्यैवाधिष्ठातृत्वात्प्राणवतैवाधिष्ठानामिति सिद्धम् ॥ २।४।१५ ॥

## तस्य च नित्यत्वात् ॥२।४।१६ ॥

अग्न्यादेः प्राणसंबन्धो नित्य इति सर्वदाधिष्ठातृत्वम् । प्राणस्य
२० तत्संबन्धस्य चेति चकारार्थः । प्राणसहायेनैव यथोचितवर्णोद्गम इति लोके स्वामिभृत्यभावेन जीवे भोगः फलिष्यति ॥ २।४।१६ ॥ ७ ॥

---

## ८ तदिन्द्रियाणि तद्व्यपदेशादित्यधिकरणम् ।

## तदिन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ २।४।१७ ॥

---

15–A and C om. तस्य चेति सूत्रेण before मृत्युमतिक्रान्तो ।
21–A, C, M, D and F read स्वामिभृत्यन्यायेन for स्वामिभृत्यभावेन ।

इदमत्र विचार्यते । इन्द्रियाणां प्राणाधीनसर्वव्यापारत्वात्तन्नामव्यपदेशाच्च प्राणवृत्तिरूपाणीन्द्रियाणि तत्त्वान्तराणि वेति संशयः । तत्त्वान्तराण्येवेति सिद्धान्तः । तानीन्द्रियाणि तत्त्वान्तराणि । कुतः । तद्व्यपदेशात् । इन्द्रियशब्देन व्यपदेशात् । एतस्माज्जायते प्राणो मनः सर्वे-
५ न्द्रियाणि च ( मुं. २।१।३ ) इति भिन्नशब्दवाच्यानां क्वचिदेकशब्दवाच्यत्वेपि नैकत्वम् । आसन्येपि तर्हि भेदः स्यादित्यत आह अन्यत्र श्रेष्ठात् । तस्य ते यौगिकाः शब्दा इति ॥ २।४।१७ ॥

## भेदश्रुतेः ॥ २।४।१८ ॥

यत्रापि प्राणशब्दप्रयोगस्तत्रापि भेदेन श्रूयते—तमुत्क्रामन्तं
१० प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति (बृ० ४।४।२) इति ॥ २।४।१८ ॥

## वैलक्षण्याच्च ॥ २।४।१९ ॥

वैलक्षण्यं च प्राणस्य चेन्द्रियाणां च । सुप्तेषु वागादिषु प्राणो जागर्ति । स्वामिसेवकवच्चानेकं वैलक्षण्यम् ॥ २।४।१९ ॥ ८ ॥

---

१५ 

## ९ संज्ञामूर्तिक्लृप्तिस्त्वित्यधिकरणम् ।

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २।४।२० ॥

भूतभौतिकसृष्टिः परमेश्वरादेवेति निर्णीय नामरूपव्याकरणमपि परमेश्वरादेवेति निश्चयार्थमधिकरणारम्भः । लोके नामरूपकरणं कुलालादिजीवेषु प्रसिद्धमिति । अलौकिकेपि स्थावरजङ्गमे मयूरादिसंज्ञां
२० मूर्तिं च जीवादेव हिरण्यगर्भादेर्भविष्यतीति वन्ह्यादिदेवानां जीवरूपाणामेव वागादिरूपेणानुप्रवेशात् तत्साहचर्येण नामरूपयोरपि जीव एव कर्ता भविष्यतीत्याशङ्कां निराकरोति तुशब्दः । संज्ञामूर्त्योः क्लृप्तिर्नामरूपयोर्निर्माणम् । त्रिवृत्कुर्वतः यस्त्रिवृत्करोति तस्मात् । सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि ( छां. ६।३।२ ) इति । तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति

त्रिवृत्कर्ता परमेश्वरः । स एव नामरूपयोरपि कर्ता । कुतः । उपदेशात् । उप समीप एकवाक्य उभयकरणस्य प्रतिज्ञानात् । जीवस्य तु त्रिवृत्करणानन्तरं शरीरसंबन्धे कर्तृत्वात् । तस्मान्नामरूपप्रपञ्चस्य भगवानेव कर्तेति सिद्धम् ॥ २।४।२० ॥ ९ ॥

---

५

## १० मांसादिभौममित्यधिकरणम् ।

### मांसादिभौमं यथाशब्दमितरयोश्च ॥ २।४।२१ ॥

इदमिदानीं विचार्यते । अन्नमाशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति । यो मध्यमस्तन्मांसम् । योणिष्ठस्तन्मनः । आपः पीतास्त्रेधा विधीयन्ते । तासां यः स्थविष्ठो धातुस्तन्मूत्रं यो मध्य-
१० मस्तल्लोहितं योणिष्ठः स प्राणः । तेजोशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तदास्थि भवति । यो मध्यमः सा मज्जा योणिष्ठः सा वाक् । अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वाक् (छां. ६।५।१) इति । तत्र संशयः वाक्प्राणमनांसि किं भौतिकानि । आहोस्वित्स्वतन्त्राणीति । एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च ( मुं. २।१।३ )
१५ इति श्रुतिविप्रतिषेधात्संशयः । त्रिवृत्करणप्रसंगेनोदितामाशङ्कां निराकरोति । तत्र पूर्वपक्षमाह । मासांदि भौमं पुरीषमांसादि तेजोबन्नप्रकृतिकम् । कुतः । यथाशब्दम् । अन्नमाशितमित्यादिश्रुतितो निःसंदिग्धं प्रतिपादनात् । किमतो यद्येवम् । तदाह । इतरयोश्च । वाचि तुल्यत्वान्न संदेहः । इतरयोर्मनःप्राणयोरपि भौतिकत्वं यथाशब्दम् । उद्गमश्रुतिस्तु
२० स्तुतित्वेनानुवादपरा भविष्यति । उपपादकश्रुतिबाधात् । तस्माद्भौतिकान्येव मनःप्रभृतीनीत्येवं प्राप्ते ॥ २।४।२१ ॥

उच्यते ।

### वैशेष्यात्तु तद्वादस्तद्वादः॥ २।४।२२॥

अन्नादिभिर्विशेष्यते । मनःप्रभृति सम्यक् कार्यक्षमं भवति । तथा
२५ दर्शनादुपादानाच्च । अतो वैशेष्यादेव हेतोरन्नमयत्वादिवादः ।

ननु कथमेतदवगम्यते । वैशेष्याद् गौणो वाद इत्युच्यते । अथात्मनेन्नाद्यमागायदित्यत्र प्राण एव सर्वस्यान्नस्यात्ता निर्दिष्टः । स कथं तत्परिणामकार्यं स्यात् । वागादयश्च तत्रान्नार्थमनुप्रविष्टाः । सृष्टौ प्रथमतो भिन्नतया निर्देशात् । अतो न भौतिकानि मनःप्रभृतीनि । किंतु ५ तत्त्वान्तराणीति सिद्धम् । तद्वाद इतिवीप्साध्यायसमाप्तिसूचिका ॥ २।४।२२ ॥ १० ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये द्वितीयाध्यायस्य चतुर्थः पादः ॥ २।४ ॥

**समाप्तोयं द्वितीयोध्यायः ॥ २ ॥**

---

2-B reads आत्मनो for आत्मने ।

# अथ तृतीयाध्यायस्य प्रथमः पादः ॥

## १ तदन्तरप्रतिपत्तावित्यधिकरणम्[1] ।

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः**
**प्रश्ननिरूपणाभ्याम् ॥ ३।१।१ ॥**

५ सर्वोपनिषदां सिद्धो ह्यविरोधे समन्वयः ।
कथं बोधकता तासां सा तृतीये विचार्यते ॥ ३३ ॥
एकं वाक्यं प्रकरणं शाखाः सर्वाः सहैव वा ।
एकां विद्यामनेकां वा जनयन्तीति चिन्त्यते ॥ ३४ ॥
ससाधने हि पुरुषे जन्मना कर्मणा शुचौ ।
१० केवले वा यथायोगे प्रथमं तद्विचार्यते ॥ ३५ ॥
विचारपूर्वकं तस्य ब्रह्मभावाप्तियोग्यता ।
अधिकारे ततः सिद्धा विषयावधृतिस्ततः ॥ ३६ ॥
अन्तरङ्गविचारेण गुणानामुपसंहृतिः ।
बहिरङ्गविचारेण कर्मणामिति सा द्विधा ॥ ३७ ॥

१५ तस्मादधिकारिणो जन्मनिर्द्धारः । तदनु तस्य ब्रह्मभावयोग्यता । ततो गुणोपसंहारः । ततोङ्गविचार इति ।

तत्र प्रथमे पादे जीवस्य ब्रह्मज्ञानौपयिकं जन्म विचार्यते । तत्र पूर्वजन्मनि निष्कामयज्ञकर्तुर्ज्ञानरहितस्य मरणे ज्ञानाभावेन यज्ञाभिव्यक्त्यभावाद् भूतसंस्कारक एव यज्ञो जात इति निष्कामत्वाच्च तदधि-
२० कारिदेवाधीनान्येव भूतानीति ते देवास्तत्र तत्र हुत्वा तस्य शरीरं संपादयन्तीति पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति ( छां० ५।३।३ ) इति श्रुतिः ।

तत्र जीवेन्द्रियाणां होमाभावेनाशुद्धिमाशङ्क्य तेषामपि होमं वक्तुमिदमधिकरणमारभते । नच पञ्चाहुतयो धूममार्ग एव । तत्र गम-

---

१ अस्याधिकरणस्य नामास्मत्संगृहीताधिकरणमालायां नोपलभ्यते ।

नागमनयोर्बहुविशेषश्रवणात् । तद्य इत्थं विदुर्ये चेमेरण्ये श्रद्धातप इत्युपासते तेर्चिषमभिसंभवन्ति ( छा० ५।१०।१ ) इति तज्ज्ञानवतोपि यत्रार्चिःप्राप्तिस्तत्र । तथा देवहुतानां कथं सा न स्यात् । ज्ञानार्थमेव च तथोत्पत्तेः । पुनरावृत्तिः परं तुल्या । निष्काम एव ५ धूममार्गः । योगी प्राप्य निवर्तते ( भ. ८।२५ ) इति स्मरणात् । भोगार्थमेव धूमादिलोकाः । निष्पत्तिस्तु पञ्चाग्नावेव । अन्ने प्रविष्टानामन्येषामपि रेतोद्वारा योनित उत्पत्तिरिति कपूयचरणवर्णनम् ।

एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते ( भ० गी० ९।२१ ) इति कामनायां भिन्न एव प्रकारः । पृथगुपदेशात् । तस्माद्योग्यशरीरनि-१० ष्पत्तये स्वयमेव गच्छति भूतसहितः । श्रद्धाहोमानन्तरं सोमभावे वा संबन्ध इति संशयः । भिन्नपक्षे योनौ वेति । तत्र श्रौतेर्थे श्रौतन्यायेनैव निर्णयस्योचितत्वादाहुतावपां गौणत्वापत्तेः । संस्कृतभूतानामपामुपस्थापकत्वाभावाच्छरीरवियोगे देवानां च तावद्विलम्बे कारणाभावाच्च श्रद्धारूपा आप एव हूयन्ते । अतो न तैः परिष्वक्तो गच्छतीत्येवं प्राप्ते ।

१५ उच्यते । तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् । तस्य जीवस्य यज्ञादिकर्तुरन्तरप्रतिपत्तौ अन्तरे मध्ये मुख्यप्रतिपत्तेर्मोक्षलक्षणाया अर्वाग् योग्यशरीरनिष्पत्त्यर्थम् । न हि वस्तुतो यज्ञानामिदं फलं भवति । अतो मुख्ये विलम्बात्प्रतिपत्तिरेषा तस्य मुख्यफलस्य वान्तरे या प्रतिपत्तिस्तदर्थं वा तत्कारणभूतैः संपरिष्वक्त एव रंहति मरणानन्त-२० रमेव कर्मसमाप्तेः । सम्यग्भूतानि तदेव संस्कृतानि प्रतिदिनसंस्कारार्थं च नैकट्यमपेक्षन्ते । अतः सम्यगेव च परिष्वक्तः । पूर्वं शरीरेण व्यवधानाच्छरीरदाहे वा तद्गतानि भूतसूक्ष्माणि सम्यक् तमेवासक्तानि । तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ( बृ० ४।४।२ ) इति । जीवपक्षे ज्ञानकर्मणी । कर्मणो हि स्वरूपभूता आपः । तत्र हेतुः प्रश्ननिरूपणाभ्याम् । २५ वेत्थ यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति ( छां० ५।३।३ )

4—A and C om. च after ज्ञानार्थमेव ।

इति प्रश्नः । असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समित्
( छां. ५ ।४।१ ) इति निरूपणम् । प्रश्ने हि पुरुषत्वं वदति न
देहमात्रम् । तज्जीवाधिष्ठितानामेव भवति । सिद्धवत्कारवचनाच्च निरूप-
णेपि चन्द्रो भवतीति । तत्रापि सोमो राजा चेतनः । न ह्यन्याधिष्ठाने
५ ह्यन्यस्य शरीरं भवेत् तथान्तरेतोगर्भाश्च । अन्यथापि विनियोगसंभवात् ।
जीवसाहित्येप्यपामेव मुख्यत्वम् । शरीरवत् । अयं होमस्तत्र तथा तं
जनयन्ति इति न दुःखहेतुः । तस्मात् प्रश्ननिरूपणान्यथानुपपत्त्या
परिष्वक्त एव संस्कृतैर्भूतै रंहतीति सिद्धम् ॥ ३।१।१ ॥

## त्र्यात्मकत्वात्तु भूयस्त्वात् ॥ ३।१।२ ॥

१० ननु कथं भूतसंस्कारमात्रत्वमवगम्यते यावता प्रश्ननिरूपणाभ्या-
माप एवावगम्यन्ते । नच तावन्मात्रसंस्कारकत्वम् । नियामकाभावात् ।
अस्थि चैव तेन मांसं च यजमानः संस्कुरुते इति विरोधश्चेति शङ्कां
निराकरोति तुशब्दः ।

अपामेव ग्रहणेन तेजोबन्नानि गृहीतानि ज्ञातव्यानि । कुतः । त्र्या-
१५ त्मकत्वात् । लोकादिनिर्माणानन्तरभावित्वात् । ता आपस्त्रिवृत्कृता एव ।
अतस्त्रयोपि गृहीता अपां ग्रहणेन । उपलक्षणत्वेप्यपामेव ग्रहणे हेत्वन्त-
रमाह । भूयस्त्वात् शुद्धत्वाद्विशेषाभावान्मध्यमभावाच्च दीक्षिततुल्यत्वेन
भारूपत्वेनाग्रे वक्तव्यत्वात् । शुद्धापामेवेदं शरीरं बहुहेतुकत्वमेव भूयस्त्वम् ।
बहुधा परिणामाच्च । द्रव्यभूयस्करत्वं च तस्मान्नियामकानां भूयस्त्वाद-
२० पामेव ग्रहणम् ॥ ३।१।२ ॥

## प्राणगतेश्च ॥ ३।१।३ ॥

वैदिकीं युक्तिमुक्त्वा लौकिकीमाह । प्राणस्य गतिः प्राणगतिः ।
तमुत्क्रामन्तं प्राणोनूत्क्रामति ( बृ० ४।४।२ ) इति प्राणाप्यायनज-
नकत्वादपाम् । प्राणो गच्छन् स्वाप्यायकं गृहीत्वैव गच्छति । जलौका-

---

4-C reads इत्यादि for इति ।

8-C reads संपरिष्वक्तः for परिष्वक्तः ।

वदन्यत्र देहसंबन्धः । मुक्तौ न प्राणा गच्छन्ति । क्रममुक्तावपि देहसंबन्ध इति पौराणिकाः । देवभाव इत्यौपनिषदाः । अतो दूरे प्राणगतिरत्रैव । अतोषां संश्लेषो वक्तव्यः । चकारात् विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ( बृ० ४।४।२ ) इति स्वकर्मसहभावं बोधयति श्रुतिः ।
५ तस्मादद्भिः परिष्वक्तो गच्छति ॥ ३।१।३ ॥

## अग्न्यादिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ३।१।४ ॥

श्रुतिविरोधं परिहरति । परस्परविरोधे व्यवस्था वा बोध्यते । ननु- यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणः ( बृ० ३।२।१३ ) इत्यादिनाग्न्यादिमातिः प्राणानां श्रूयते । नच—औषधीर्लोमानि वनस्पती-
१० न्केशाः ( बृ० ३।२।१३ ) इत्यत्र प्रत्यक्षविरोधाद् बाधितविषयेयं श्रुतिरिति वाच्यम् । आध्यात्मिकेन्द्रियमध्यपाताल्लोमकेशा अप्याध्यात्मिका एव ग्राह्याः । यैः कण्डूलावण्यप्रतीतिः । दृश्यमानानि तु गोलकस्थानानि । तस्मात्प्राणोत्क्रमणश्रुतिरग्न्यादिभावश्रुत्या बाध्यत इति चेन्न । भाक्तत्वात् । प्रकरणव्यतिरेकेणामुक्तविषये प्रवृत्ता भाक्ता भवति ।
१५ अथ हैनं जारत्कारव आर्तभागः पप्रच्छ ( बृ० ३।२।१ ) इत्यत्र ग्रहनिरूपणानन्तरं मृत्युं दृष्ट्वा म्रियमाणप्रश्ने—नामैव न जहात्यन्यज्जहाति इति प्रतिज्ञाते प्राणोत्क्रमणप्रश्ने नेति प्रतिवचने वागादीनामग्न्यादिभावानुवादः । ततो मन्त्रणाज्जीवस्य ब्रह्मभावोवगम्यते । सामग्न्या गतत्वात् । तौ ह यदूचतुः—इति कर्मप्रशंसा भिन्नप्रश्नोत्तरा । उभयोर्वचनविरोधात् ।
२० ब्रह्मविद्या च गोप्या । उत्क्रमणश्रुतिस्तु—स यत्रायꣳ शारीर आत्मा ( बृ० ४।३।३५ ) इति ब्राह्मणे जीवस्य परलोकविहारार्थं निष्क्रामति चक्षुषो वा मूर्ध्नो वा ( बृ० ४।४।२ ) इत्यादिना प्राणानां विहारसाधकानां निर्गमनमाह । अतो मुक्तामुक्तविषयभेदस्य व्यवस्थापकस्य विद्यमानत्वादग्न्यादिभावश्रुतिर्नोत्क्रमणश्रुतिबाधिका ।

२५ तस्मादन्यत्र सिद्धो धर्मोन्यत्रावस्थासाम्याद् योज्यमानो भाक्तो भवति । अतः प्राणोत्क्रमणमस्ति । तस्मात्संपरिष्वक्तो गच्छतीति सिद्धम् ॥ ३।१। ४ ॥

## प्रथमेऽश्रवणादिति चेन्न ता एव ह्युपपत्तेः ॥ ३।१।५ ॥

किंचिदाशङ्क्य परिहरति । असौ वाव लोको गौतमाग्निः इत्यत्र देवाः श्रद्धां जुह्वतीति श्रुतेरापो न संकीर्तिताः । अपां हि पञ्चम्यामाहुतौ पुरुषवचनम् । श्रद्धा मनोधर्मः स कथं हूयत इति चेन्न ।
५ मनसा सह भविष्यति । तथाप्यरुणान्यायेन धर्ममुख्यत्वम् । तर्हि कथं प्रश्नोपसंहारौ । परोक्षवादाद् भविष्यति । चमसवत् । श्रद्धा वा आपः –इति श्रुतेः । शुद्धिहेतुत्वसाम्यात् । चन्द्रमा मनसो जातः ( ऋ० सं. १०।९०।१३ ) इति श्रुतेश्चेत्येवंपरा भविष्यति । तस्मात्प्रथमाहुतावपामश्रवणान्न ताभिः संपरिष्वक्तो गच्छतीति चेन्न । ता एवाप एव श्रद्धाश-
१० ब्देनोच्यन्ते । हि युक्तोयमर्थः । यथा कर्मकाण्ड आपः श्रद्धाशब्देनोच्यन्ते तथा प्रकृतेपि । परं नोपचारः । उपपत्तेः । उपक्रमोपसंहारयोर्बलीयस्त्वात् । ननु मध्ये श्रुतेन श्रद्धाशब्देनोपक्रमोपसंहारावन्यथाकर्तुं युक्तौ । श्रद्धासहभावः संस्कारेण संस्कृतेषु भूतेषु सिद्धः । तेन मनःस्थान आप एव वाच्याः । चन्द्रमा मनसो जात इति तु भिन्ना सृष्टिः । श्रद्धाप्रयोगस्तु
१५ कामनाकृतव्यावृत्त्यर्थः । तत्र फल एव श्रद्धा न कर्माणि । यो यच्छ्रद्धः स एव सः ( भ० गी. १७।३ ) इति श्रद्धाया आश्रयस्य विषयभावजनकत्वात् कर्तुः कर्मभावाय श्रद्धाप्रयोगः । ततः संस्कृता आपो यजमानरूपा हूयमाना भवन्तीति सिद्धं भवति । तस्मात् प्रथमेप्यपामास्ति श्रवणम् ॥ ३।१।५ ॥

## २० अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ३।१।६ ॥

स्थितमेतज्जीवः संपरिष्वक्तो रंहतीति । तत्र विचार्यते । सर्वे जीवाः संपरिष्वक्ता गच्छन्त्याहोस्विज्ज्ञानोपयोगिन इति विमर्शः । तत्र पञ्चाहुतिब्राह्मणेनाधिकारिणः श्रुताः । वेदे हि श्रुतानुसारिणी कल्पना । अतो विशेषस्याश्रुतत्वात् सर्वेषामेव पञ्चाहुतिप्रकार इति चेन्न । इष्टादि-

---

13–A and C read संस्कारद्वारेण for संस्कारेण ।

21–C reads तत्रेदं for तत्र ।

कारिणां प्रतीतेः । साधारणपक्षं दूषयति । कुतः । इष्टादिकारिणां प्रतीतेः । इष्टादिकारिणः प्रतीयन्ते । श्रद्धापदेन देवकर्तृत्वेन च । सोमभावसाम्याच्च । इष्टादिकारिणां धूममार्गेण्युत्पादने सोमभाव उक्तः । अत्रापि प्रथमाहुतिफलं सोमभाव उच्यते । अतः श्रुतिसाम्यादपीष्टादिकारिणो ५ रंहन्तीति सिद्धम् ३।१।६ ॥

## भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति ॥ ३।१।७ ॥

किंचिद् दूषणं परिहरति । ननु यदि श्रुतिसाम्येन सोमभावादिष्टादिकारिणो रंहन्तीत्युच्यते तदा सोमभावे तेषामप्यनिष्टं श्रूयते । तद्देवानामन्नं तं देवा भक्षयन्ति ( छां० ५।१०।४ ) इति समानश्रुतौ च—आ- १० प्यायस्वापक्षीयस्वेत्येवमेतांस्तत्र भक्षयन्ति(बृ. ६।२।१६) इति चन्द्रदृष्टान्तेन ते च भक्ष्यन्ते । ततश्च देवाः स्वान्नं पर्जन्येऽग्नौ कथं जुहुवुः । अतः पञ्चाहुत्यभाव इत्याशङ्क्य परिहरति वाशब्दः । तेषां सोमभावो गौणः । भक्षणं च । प्रकृतेप्यङ्गारत्वाच्चन्द्रमसः कथमाहुतिफलं भवेत् । सोमभावस्य भाक्तत्वमग्रे निरूपयिष्यामः । इदानीं भक्षणस्य गौणत्वं निरूपयति । १५ अन्नभावे हि मुख्यं भक्षणं भवति । तदन्यस्यान्नभावो नोपपद्यते । ब्रह्मज्ञाने तु भवति । स सर्वं भवति । तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदे अहं मनुरभवं सूर्यश्च ( बृ० १।४।१० ) इति । प्रकृते तु तन्न । अनात्मवित्त्वात् । तथा सति मोक्ष एव भवेत् । अतो भक्षणमपि गौणम् । तथाहि श्रुतिरेव गौणभावं शब्दस्य बोधयति । अथ योन्यां देवतामुपास्ते २० ( बृ० १।४।१० ) इत्यत्र यथा पशुशब्दः । एवमत्रापि भक्षणं सहक्रीडनं सेवकभावः । चन्द्रतुल्यापदेशाय तथा वचनम् । तथा सति तेषाममरत्वेन तथा स्तुतिः । चन्द्रस्य भक्षणं तु क्षयादनुमीयते श्रुत्या—प्रथमां पिबते वन्हिः—इत्यादिरूपया । देवानामक्षणं भगवदवयवानामेव । अशनानशने तस्याविरुद्धे । आधिभौतिकानां देवानामशनमेव । २५ तस्माद्भक्षणस्य गौणत्वात्सोमभावे न काचिच्चिन्ता ॥ ३।१।७ ॥ १ ॥

---

15—A and C read तदन्यस्यान्यभावो for तदन्यस्यान्नभावो ।

## २ कृतात्ययाधि णम् ।

### कृतात्ययेनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ३।१।८ ॥

प्रथमाहुतिः सफला विचारिता। द्वितीयां विचारयितुमधिकर-
५ णारम्भः। सोमस्य पर्जन्यहोमे वृष्टित्वमिति। सोमाद्वृष्टिभावे रूपरसादीनां
हीनतया प्रतीयमानत्वाद्यागस्यावान्तरफलं तत्र भुङ्क्त इति निश्चितम्। तत्र
संशयः।किं सर्वमेवावान्तरफलं तत्र भुङ्क्ते। आहोस्विदनुशयवान् वृष्टिर्भवती-
ति। तद्वासनयाग्रिमजन्मानि सदाचारयुक्त एव स्यादिति। आचारहीनं न
पुनन्ति वेदाः (व. स्मृ.) इति बाधोपलब्धेः। अतो विचार उचितः।
१० तत्रावान्तरफलस्यावशेषेवान्तरफलत्वबाधाज्ज्ञानौपयिकशरीरभावादेव स-
दाचारासिद्धेः प्रयोजनाभावाच्च निरनुशय एव वृष्टिभावं प्राप्नोतीत्येवं
प्राप्ते। उच्यते। कृतात्ययेनुशयवान् कृतस्य सोमभावस्यात्यये नाशे सति
अनुशयवानवान्तरफलसाधकलेशसहित एव वृष्टिभावं प्राप्नोति। कुतः।
दृष्टस्मृतिभ्याम्। दृष्टं तावद् भोगसाधकमूलद्रव्यनाशेपि भोगसाधकतादृश-
१५ देहवस्त्रादिसहित एव तस्मात्स्थानादपगच्छति। अन्यथा सद्य एव देह-
पातः स्यात्। अतो यथा लोके सानुशयस्तथात्रापि। स्मृतिश्च—यद्यत्र नः
स्वर्ग्यसुखावशेषितं स्विष्टस्य दत्तस्य कृतस्य शोभनम्। तेनाजनाभे
स्मृतिमज्जन्म नः स्याद्वर्षे हरिर्यद्भजतां शं तनोति (भा० ५।२०।२८)
इति देवगाथा॥ अतो ज्ञानौपयिकजन्मानुशयवत एव भवति। अन्यथा पूर्व-
२० जन्मस्मृत्यभावे विषयासक्तिः प्रसज्यते।

नन्वनुशयसहकृत एव जीवो नाद्भिः परिष्वक्तो भवेदत आह।
यथेतम्। यथागतम्। अन्यथा प्रश्ननिरूपणयोर्बाधः स्यात्। तर्हि ताव-
दवान्तरफलसाधकसहितः स्यादत आह। अनेवं च। एवंप्रकारयुक्ता-
गमनं नास्ति। भोगस्य जातत्वात्। चकाराद्वैराग्यसहितोपि। तस्मादनु-
२५ शयवान् भिन्नप्रकाराद्भिः परिष्वक्तो देवकृपासाहितो वृष्टिर्भवतीति॥३।१।८॥

---

8–A and C read सद्वासनया for तद्वासनया।
16–A and C read भवेत for स्यात।

## चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ३।१।९॥

किंचिदाशङ्क्य परिहरति । ननु नात्रोत्तमजन्मार्थमनुशयोपेक्ष्यते चरणादेव भविष्यति । तथ इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ( छां० ५।१०।७ ) इत्यादिना यः पूर्वजन्मनि ५ विहिताचरणं करोति स उत्तमं जन्म प्राप्नोति । यस्तु निषिद्धाचरणं करोति स श्वादियोनिं प्राप्नोतीति—साधुकारी साधुर्भवति ( बृ० ४।४।५) इत्यादिश्रुत्या च प्रतिपाद्यते । प्रकृते तु तस्य रमणीयचरणस्य चरणादेव तस्य सम्यग् जन्म भविष्यति किमनुशयसहभावेनेति चेत् । न । चरणश्रुतौ या योनिरुक्ता सोपलक्षणार्था । अनेन पूर्वजन्मनि समीचीनं १० कृतमिति ज्ञापिका । न तु तस्मिञ्जन्मनि समीचीनकरणे नियामिका । अन्यथा ब्राह्मणानां निषिद्धकरणं न स्यात् । तस्मादनुशयोपेक्ष्यते ज्ञानोपयोगार्थमिति कार्ष्णाजिनिराचार्यो मन्यते ।

कार्ष्णाजिनिग्रहणं पञ्चाग्निविद्यायां भिन्नप्रकारत्वज्ञापनार्थम् । तस्मादस्य स्वमते भिन्नत्वान्न शङ्का न चोत्तरम् । नहि पञ्चाग्निविद्यायां १५ पुरुषादन्यभावः संभवति । प्रकरणपरिगृहीता श्रुतिर्नान्यत्र न्यायसंपादिका ॥ ३।१।९ ॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ ३।१।१०॥

नन्वेवं सति चरणश्रुतिरनार्थिका । ज्ञापनायां प्रयोजनाभावात् । अतो विधायकत्वं श्रुतेरिष्टानिष्टफलबोधकश्रुतिवत् । अतः कर्मतारतम्येन २० फलविधानान्निष्कामकर्मकर्तुर्ज्ञानोपयोगिदेहविधानं भविष्यतीत्यनुशयसहभावो व्यर्थ इति चेन्न । तदपेक्षत्वात् । धूमादिमार्गस्य तस्याः श्रुतेरपेक्षत्वात्काम्येष्टादिकारिणः फलभोगानन्तरमुत्पत्तौ सुखानन्तरं दुःखमिति न्यायेन पापस्यैवोपस्थितत्वादसमीचीनशरीरप्राप्तिर्मा भवत्विति रमणीयानुष्ठातॄणां रमणीयशरीरप्राप्तिरेव बोध्यते । न न्यायेनासमीचीनशरीरामिति । तस्मा- २५ दन्यनिषेधार्थं सार्थकत्वान्नानुशयप्रतिषेधिका ।

24–C om. न्यायेन after न ।

किंच। रमणीययोनिः किमाकस्मिकी सकारणा वा। नाद्या वेदवादिनाम्। द्वितीये तु स्वकर्मणा पितृलोक इति वस्वादित्यरूपता च वक्तव्या। प्रजामनु प्रजायन्ते स्मशानान्तक्रियाकृत इति च। त्रैविद्या मां सोमपा (भ. गी. ९।२०) इत्यादिनेन्द्रलोकभोगानन्तरं तथैव पुनर्भवनं च ५ वक्तव्यम्। न च सर्वेषामैक्यम्। भिन्नरूपत्वात्। तस्मात्कर्मकर्तृवैचित्र्येण श्रुतिस्मृतिभेदाः समर्थयितव्या नत्वेकमपरत्र निविशते। उपरोधप्रसंगात्। तथा च प्रकृतेप्यनुशयाभावे भक्षणभवनयोर्नियमो न स्यात्। ब्राह्मणादीनामप्यन्ने बलिहरणे श्वचण्डलयोर्भक्षणम्। ब्राह्मणभक्षणेपि मलभावे शूकरभक्षणम्। अनुशयस्य नियामकत्वे तुषादिष्वन्नभाव एव यावत् समी- १० चीनेरेतोभावः। तस्मादुपलक्षणतैव चरणश्रुतेर्युक्ता। तस्मादनुशयसहित एव वृष्टिभावं प्राप्नोतीति सिद्धम् ॥ ३।१।१० ॥

**सुकृतदुष्कृते एवेति तु बादरिः ॥ ३।१।११ ॥**

फलांश एवानुशय इति तु स्वमतम्। कर्म फलं च द्वयमेवेश्वरेच्छया नियतम्। कर्म पुनर्भगवत्स्वरूपमेव ब्रह्मवादे। सोभिव्यक्तः फलपर्यन्तं १५ तदादिसंयोग इति स्वमतम्। अन्तसंयोगपक्षमाहैकदेशित्वज्ञापनाय। सुकृतदुष्कृते एव विहितनिषिद्धकर्मणी अनुशय इति बादरिराचार्यो मन्यते। तेन मोक्षपर्यन्तमनुशयोनुवर्तिष्यत इति सूत्रफलम्। तुशब्देन निरनुशयपक्षशङ्कैव नास्तीत्युक्तम्। एवं द्वितीयाहुतिर्निर्धारिता ॥ ३।१।११ ॥ २ ॥

---

## ३ अनिष्टादिकारिणामित्यधिकरणम्।

२० **अनिष्टादिकारिणामपि च श्रुतम् ॥ ३।१।१२ ॥**

तुल्यत्वेन विचार ऐक्ये वा पञ्चाहुतिधूममार्गयोः सोमभावं गतस्य पुनरावृत्त्युपसंहार उपलक्षणेनापि पापाचारवतामुपसंहारदर्शनात्तेषामप्याहुतिसंबन्धो धूममार्गश्च प्राप्नोति। तन्निराकरणार्थमधिकरणारम्भः। नन्वनिष्टादिकारिणामपि सोमभावः श्रूयते। इष्टादिकारिव्यतिरिक्तानां—ये वैके २५ चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति ( कौ० १।२ ) इति कौषीतकिनः समामनन्ति। अत्र च कपूयां योनिमापद्यन्त इति पर्यवसा-

नम् । तेन सर्वे चन्द्रमसं गच्छन्ति । अयमाशयः । कर्माकर्मविकर्मेति त्रिविधकर्मविधायको वेदः । अग्निहोत्रं जुहुयात् । यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् । न हिंस्याद् भूतजातानि । ब्राह्मणादीनामपि त्रिविधकरणं संभवति । न हि सर्वोऽप्येकान्ततो विहितं वा प्रतिषिद्धं ५ वा करोति। ततो विहितकर्तुरपि त्रयसंभवाज्ज्ञानाभावेन फलभोगनैयत्यात् सोमभावानन्तरमेवाकर्मविकर्मविभागो वक्तव्यः । अत एवाविशेषोपसंहारौ । तस्मात्सोमभावानन्तरमेव सर्वेषां जन्मेति प्राप्तम् ॥ ३।१।१२ ॥

## संयमने त्वनुभूयेतरेषामारोहावरोहौ
१० तद्गतिदर्शनात् ॥ ३।१।१३ ॥

तुशब्दः पक्षं व्यावर्तयति । विहितव्यतिरिक्तकर्तॄणां संयमने यमसंनिधाने सुखं दुःखं वानुभूयारोहावरोहौ। अनुभवार्थमारोहोनुभूयावरोहः। कुतः । तद्गतिदर्शनात् । तेषां गतिर्विसदृशी दृश्यते । वेदे हि प्रथमं विहिता द्वेधा गतिः । सकामा निष्कामा चेति। सकामा यथाकाममनन्तविधा । १५ निष्कामा ज्ञानरहिता द्विविधा वैदिकगृह्यस्मार्तभेदेन । तत्र गृह्यस्मार्ते यमः। श्रौते सोमभावः । तत्र त्रेताग्निविधानेन निष्कामानामदम्भानां पुण्यं स्यादित्यधिकारिविशेषणात्। विशेषतः सामान्यतश्च प्रायश्चित्तविधानात्। यदर्वाचीनमेनो भ्रूणहत्यायास्तस्मान्मुच्यते (तै.आ.२।८)इति—तरति ब्रह्महत्याम् ( तै. सं. ५।३।१२ ) इति च सर्वप्रायाश्चित्तविधानात् । ब्रह्मानुभवाभावे २० सोमगतिरेव ।

पूर्वजन्मधर्मस्य चित्तशुद्धावुपयोगः । तदानीन्तनस्य गङ्गास्नानादेः श्रौताङ्गत्वम् । अतः पापस्याभावात्पुण्यस्योपक्षीणत्वात्तस्य पञ्चाग्निप्रकार एव । ज्ञानोपयोगिजन्मानि पापसंश्लेषाभावोपायमग्रे वक्ष्यति । पितृमेधप्रथमाहुतिमन्त्रस्तु मन्त्रत्वाच्चमसवन्न गतिनियामकः । त्रेताग्नि- २५ विद्यारहितानां पुण्यपापोपभागो यम एव । वैवस्वते विविच्यन्ते यमे राजनि ते जनाः । ये चेह सत्येनेच्छन्ते य उ चानृतवादिनः ॥ ( तै. आ. ६।५ ) इति ।

यमगतेः पञ्चाग्निविद्यायाश्चैषा व्यवस्था । चित्तशुद्धिभावाभावाभ्यां वावश्यं काण्डद्वयव्यवस्था एकस्यैतद् वक्तव्यम् । सकामनिष्कामभेदो वा वेदान्तिनामपि पापार्थं यमापेक्षणात्सा गतिर्वक्तव्यैव । तस्मान्न सर्वेषां सोमगतिः ॥ ३।१।१३ ॥

५ **स्मरन्ति च ॥ ३।१।१४ ॥**

स्मरन्ति व्यासादयः । यमेन पृष्टस्तत्राहं देवदेव जगत्पते । पूर्वं त्वमशुभं भुङ्क्ष्व उताहो नृपते शुभम् इत्यादि । चकाराल्लोकप्रसिद्धिः ॥ ३।१।१४ ॥

**अपि सप्त ॥ ३।१।१५ ॥**

१० चेत्यनुवर्तते । पापोपभोगार्थं यमालयगमनमङ्गीकर्तव्यम् । यतस्तत्र नरकाः सप्त सन्ति रौरवादयः । सप्तसंख्या संख्याभेदेष्ववरकक्षा । सर्वथा निराकरणाभावाय सप्तग्रहणम् । तस्माद्यमगतिरस्ति ॥ ३।१।१५ ॥

**तत्रापि च तद्व्यापारादविरोधः ॥ ३।१।१६ ॥**

किंचिदाशङ्क्य परिहरति । ननु नरकेषु चित्रगुप्तादयो भिन्ना १५ एवाधिकारिणः सन्ति । तथा सति तृतीयः पक्षः स्यादत आह । तत्र नरकादिषु येऽधिकारिणस्ते यमायत्तास्तत्सेवकाः । अतो यमस्यैव तत्रापि व्यापारान्न तृतीयपक्षप्राप्तिः । चकारात्सुखदुःखभोगेऽपि । तृतीयपक्ष एव विरोधः ।

अथवा यमगतेर्मन्त्रलिङ्गसिद्धे पापस्य च पौराणिकत्वे चन्द्रगतिरे- २० कैव स्यादिति विरोधः । तेषां यमसेवकत्वे तु मन्त्रलिङ्गपोषकत्वान्मार्गद्वयसिद्धेरविरोधः । तस्माद्यमगतिरस्तीति सिद्धम् ॥ ३।१।१६॥३ ॥

---

## ४ विद्याकर्मणोरित्यधिकरणम् ।

**विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ ३।१।१७ ॥**

साधारणत्वाभावाय पूर्वोक्तार्थसाधकमधिकरणमारभते । ननु—ये के २५ चास्माल्लोकात्प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ति ( कौ. १।२ )

इत्यस्याः श्रुतेः का गतिः । पञ्चाग्निविद्याप्रस्तावे वा यमगतिः कुतो नोक्ता । तस्माद् वेदविरोधान्न तृतीयपक्षसिद्धिरित्याशङ्कां परिहरति तुशब्दः । अत्र वेदान्ते गौणमुख्यफलदेहार्थं विद्याकर्मणोरेव हेतुत्वेन निरूपणं विद्यया देवयानं कर्मणा सोमभाव इति तयोरेव प्रकृतत्वात् कारणत्वात् ।
५ तेन कौषीतकिब्राह्मणेपि प्रकृतत्वात् कर्मिण एव सर्वशब्देनोक्ताः । अत्रापि न यममार्ग उक्तः । तस्माद्विद्याकर्मणोर्मुख्यत्वान्मार्गद्वयमेवोक्तं नैतावता तृतीयबाधः ॥ ३।१।१७ ॥

## न तृतीये तथोपलब्धेः ॥ ३।१।१८ ॥

ननु द्वयोः स्तुत्यर्थं यस्तृतीयो मार्ग उक्तः । अथैतयोः पथोर्न
१० कतरेण चन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति ( छां. ५।१०।८ ) इत्यादिना जुगुप्सेतेत्यन्तेन तृतीयनिन्दया द्वयोः स्तुतिरिति स एव तृतीयोस्तु किं यममार्गेणेत्यत आह । न तृतीये मार्गे तथा पुण्यपापयोरुपभोग उपलभ्यते । यतः समानब्राह्मणे—कीटः पतङ्गो यदि दन्दशूकम् ( बृ. ६।२।१६ ) इति योनौ निर्वृतेर्विद्यमानत्वान्न महापा-
१५ पोपभोगः । नापि कीटादिषु महासुखोपभोगः । एकवाक्यता चोभयोर्युक्ता । यद्यपि महाराजादिराजदण्डादिषु तथोपभोगः संभवति तथापि रम्भादि-संयोगे नरके च यथा तथा न संभवति । जडे तु पञ्चम्याहुतिर्भरत एव हीश्वरेच्छया जन्मद्वयमधिकम् । त्रिभिरिति वचनात् । भरतोहमिति प्रतीतेश्च । ततः पूर्ववदस्मरणाद्बाल्यादिवदेव जन्मत्रयम् । तस्माज्जाय-
२० स्वेत्यादिवैलक्षण्यादतिरिक्तो यममार्गः । पञ्चाहुतिनियमाभावस्तु ज्ञानो-पयोगिदेहेप्यंशावतरणे पुष्टिमार्गत्वान्न तत्र दोषः ॥ ३।१।१८ ॥

## स्मर्यतेपि च लोके ॥ ३।१।१९ ॥

साधकान्तरमाह । अपि च लोकेपि मूर्च्छादिषु यमलोकगमन-संभाषणपुनरागमनानि स्मर्यन्ते ॥ ३।१।१९ ॥

२५

## दर्शनाच्च ॥ ३।१।२० ॥

यमपुरुषा दृश्यन्तेपि कैश्चिदजामिलप्रभृतिभिः । चकारात्तेषां

वाक्यादिश्रवणम् । तस्माद्वैवस्वतमार्गे न किमपि बाधकमिति सिद्धम् ॥
॥ ३।१।२०॥४ ॥

## ५ शब्दावरोधाधिकरणम् ।

### तृतीये शब्दाविरोधः संशोकजस्य ॥ ३।१।२१ ॥

५ तृतीयामाहुतिं विचारति । तत्र वृष्टेरन्नामिति तृतीयाहुतिः सफला । पूर्वद्वयं शब्दैकसमधिगम्यम् । वृष्टेरन्नामिति साधनफलयोः प्रत्यक्षत्वान्न वृष्टिमात्रेणान्नं भवति बीजव्यतिरेकेण । बीजस्य हि फलम् । न निमित्त-मात्रेण तद्भावो वक्तुं शक्यते । तस्मादसंगतं वृष्टेरन्नामित्याशङ्क्याह । तृतीये शब्दावरोधः । तृतीयाहुतौ शब्देन शब्दसाम्येन कारणभूतस्य १० जलस्यावरोधो ग्रहणम् । सदेव सोम्येदमग्र आसीत् ( छां. ६।२।१ ) इत्यत्र । तत्तेज ऐक्षत बहु स्यां प्रजायेयेति । तदपोसृजत तस्माद्यत्र क्च शोचति स्वेदते वा पुरुषस्तेजस एव तदध्यापो जायन्ते ( छां. ६।२।३ ) इत्यत्र कारणरूपाणां निरूपणे शोकजत्वमपामुक्तम् ।

अग्रेच—तस्माद्यत्र क्च वर्षति तदेव भूयिष्ठमन्नं भवति ( छां. १५ ६।२।४ ) इति । अतः पञ्चाग्निविद्यायामपि देवहोमात्कारणभूतैव वृष्टि-र्जातेति नात्र बीजान्तरापेक्षा । शोकपदेन यदश्रवश्रीयत तद्रजतꣳ हिरण्य-मभवत् ( तै० सं. १।५।१ ) इति सहायः सूचितः । यद्यपि तत्रान्नशब्देन पृथिवी तथाप्यत्र पृथिव्या अग्निसमिद्रूपत्वादन्नमेव । तस्मात्कारणशक्ति-युक्ताया वृष्टेरन्नं भवतीति न काप्यनुपपत्तिः ॥ ३।१।२१ ॥

### २० साभाव्यापत्तिरुपपत्तेः ॥ ३।१।२२ ॥

किंचिदाशङ्क्य परिहरति । ननु कारणजलरूपवृष्टिरत्र वक्तुं न शक्यते । यतः समानधूममार्गश्रुतौ वृष्टेरन्नभाव ऐक्ये वा—तस्मिन्यावत्संपा-तमुषित्वा अथैतमेवाध्वानं पुनर्निवर्तते यथेतमाकाशमित्यादिना तिलमाषा

---

5–A and C read वृष्टेरन्नं भवतीति for वृष्टेरन्नामिति ।
22–ख om. यतः before समान ।

इति जायन्त इत्यन्तेन । तत्र यथेतमित्याकाश एव । आकाशाच्चन्द्रमसमिति पूर्वमुक्तत्वात् आकाशस्य मार्गतैव । वायुर्भूत्वा धूमो भवतीत्यादिषु तत्तद्भावः श्रूयते । ते च विकृताः । तदनन्तरभावित्वाद् वृष्टिरपि विकृतैव । तस्मान्न कारणत्वमित्याशङ्क्य परिहरति । सा वाय्वादिरूपा-
५ पत्तिराभाव्यापत्तिरेव । वायुवदाभानं मध्ये वायुमण्डलमागच्छन्त्याहुतिर्वायुभवनशब्देनोच्यते । आकृतेरेव पदार्थत्वाद् व्यापत्तिशब्देनोच्यते । आकृतेरेव पदार्थत्वाद् व्यापत्तिशब्देन च तेजोभावापन्नस्य जलभावापत्तौ कान्तिनाशान्नाश इवेति द्योतयति । कुतः । उपपत्तेः । तथैवोपपद्यते चित्रतुरगादिषु विकारस्य विकारान्तरापत्ताविययमेव व्यवस्था । उपासनायां
१० न तदपि । न च भूत्वाश्रुतेर्बाधः । प्रतिनियतपदार्था हि ते । भवनावरोहाभ्यामेव तथा वचनात् । अन्यस्यान्यभावं वदन्ती श्रुतिरेव गौणत्वं वदति । कारणांशभावव्यतिरिक्तस्थले तथैव प्रतीतेः । तस्मात्तदाकृतिमात्रेण न स्वरूपान्यथाभावः ॥ ३।१।२२ ॥

## नातिचिरेण विशेषात् ॥ ३।१।२३ ॥

१५ उपपत्त्यन्तरमाह । तद्रूपता च नातिचिरेण । न बहुकालं तद्रूपता । कुतः । विशेषात् । अन्नभावापन्नस्यैव बहुकालश्रवणात् । अतो वै खलु दुर्निष्प्रपततरमिति । प्रापतरं प्रपतरं वा । वर्णलोपश्छान्दसः । अतस्तृतीयाहुतौ न चिरेणेत्यायाति । बहुकालस्थितौ हि तद्रूपता । कारणवशाद्देवानां मनुष्यभावात् । भिन्नपक्षे न कोपि दोषः । ऐक्यपक्षेपि
२० ज्ञानवतो गृहस्थस्य दुर्लभत्वादेवं वचनम् । तस्माद्वृष्टेरन्नं भवतीति सिद्धम् ॥ ३।१।२३ ॥ ५ ॥

---

## ६ अन्याधिष्ठित इत्यधिकरणम् ।

## अन्याधिष्ठिते पूर्ववदभिलापात् ॥ ३।१।२४ ॥

चतुर्थ्याहुतिर्विचार्यते । ननु—संसर्गजैः कर्मदोषैर्याति स्थाव-
२५ रतां नरः—इति कथमस्यान्नत्वम् । अपूर्वान्नत्वेपि कण्डनपाकादिषु क्लेशेन जीवस्यापगमात्कथं रेतोभावः । चर्वणौदर्यपाकस्त्वावश्यक एव । न

च जीवस्य जडभावो मर्यादाभङ्गप्रसंगात् । तस्मात्कथमन्नस्य रेतोभाव इत्याशङ्क्य परिहरति । अन्याधिष्ठिते वृष्टेरन्नभावसमय एवान्यैर्जीवैर-धिष्ठितो व्रीह्यादिस्तस्मिन्नपूर्ववत् तद्भावापत्तिः । अतिथिवत् । पूर्ववैलक्ष-ण्येन वा । कुतः । अभिलापात् । व्रीहियवा ओषधिवनस्पतयास्तिलमाषा ५ इति पूर्ववत्तत्तद्भावमात्रं न वदति । किंतु जगति स्थितव्रीह्यादिभाव एवाभिलप्यते । तथा सति यथान्येषु व्रीह्यादिषु तदधिष्ठातृदेवतया नियुक्ता जीवास्तानात्मत्वेनाभिमन्यन्ते एवमत्रापीति न कोपि दोषः । अधिष्ठाने हि वेदनामरणानन्तरं कृमिभावस्य दृष्टत्वात् । तस्मादन्नस्य रेतोभावो युक्तः ॥ ३।१।२४ ॥

१० **अशुद्धमिति चेन्न शब्दात् ॥ ३।१।२५ ॥**

किंचिदाशङ्क्य परिहरति । नन्वन्याधिष्ठानेङ्गीक्रियमाणे यातना-जीवानामशुद्धत्वादशुद्धमन्नं स्यात् । तथा च कथं योग्यदेह इति चेन्न । शब्दात्—देवा अन्नं जुह्वति तस्या आहुते रेतः संभवति (छां० ५।७।२) इति देवैराहुतिरूपेण होमवचनाच्छुद्धत्वम् । अन्यस्य हि संस्कारेणैव शुद्धिः। १५ अन्यथा यावज्जीवं का गतिः स्यात् तस्मात्संस्कारशब्दाच्छुद्धमेवान्नम् ॥ ॥ ३।१।२५ ॥ ६ ॥

---

## ७ रेतःसिगधिकरणम् ।

**रेतः सिग्योगोथ ॥ ३।१।२६ ॥**

पञ्चमीमाहुतिं विचारयति । ननु कथं पुरुषेन्नहोमाद्रेतोभावः । २० बाल्यकौमारवार्द्धकेषु व्यभिचारात् । तारुण्येपि न हि सर्वमन्नं रेतो भवति । जातमपि न नियमेन योनौ सिच्यते । नापि देवापेक्षा । पुरुष-प्रयत्नस्य विद्यमानत्वादित्याशङ्क्य परिहरति । रेतःसिग्योगः । पुरुष-शब्देन पौरुषधर्मवानुच्यते । पौरुषं च देशकालसंनिधानेन मन्त्रवद्रेतः-सेकसामर्थ्यम् । न ह्येतत्सार्वजनीनं सार्वत्रिकं वा । तदर्थं देवापेक्षा ।

---

3–ख reads भावापत्तिः for तद्भावापत्तिः ।
19–A and C read पञ्चमाहुतिं for पञ्चमीमाहुतिम् ।

तथा सति न कोपि व्यभिचारः । कथं पुरुषशब्दमात्रेण च ज्ञायते[1] तत्राह । अथ आनन्तर्यात् । शरीरार्थमेव देवैस्तत्र तत्र होमः कृतः । तत्कथं पञ्चमाहुतावेवान्यथा भवेत् । तस्मादानन्तर्यात्पुरुषाहुतिर्नात्र रेतःसिग्योगः । योगशब्देनात्राप्यन्याधिष्ठानेन रेतःसिग्यो-
५ गाभावः ॥ ३।१।२६ ॥ ७ ॥

## ८ योनेः शरीरमित्यधिकरणम् ।

### योनेः शरीरम् ॥ ३।१।२७ ॥

हूयमानं निरूप्य फलं निरूपयति । तस्या आहुतेर्गर्भः संभवतीत्युच्यते । तत्र संदेहः । योनावन्तःस्थितमेव फलं बहिर्निर्गतं वेति । तत्र
१० गर्भशब्देनान्तस्थित एव । शरीरपरत्वे श्रुतिबाधः स्यात् । उपसंहारोप्यग्रे कर्तव्याभावादुपपद्यते । ततश्च षण्मासानन्तरं गर्भे ज्ञानसंभवाज्जननानन्तरं न गुरूपसत्त्यादि कर्तव्यमित्याशङ्क्य परिहरति । योनेर्निर्गतं शरीरं गर्भशब्देनोच्यते । अग्रेरुत्थितस्यैव फलरूपत्वात् । मध्यभावस्याप्रयोजकत्वात् । मातृपरिपाल्यत्वाय गर्भवचनम् । कलिलादिभावे
१५ पुरुषवचनत्वाभावादुपसंहारानुपपत्तिश्च । शरीरशब्देन वैराग्यादियुक्तः सूचितः । न तु स्वयं तदभिमानेन जात इति । तस्माद्योग्यदेहः साधनसहितो ब्रह्मज्ञानार्थं निरूपितः ॥ ३।१।२७ ॥ ८ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये तृतीयाध्यायस्य प्रथमः पादः ॥ ३।१ ॥

२०
# तृतीयाध्याये द्वितीयः पादः ॥

## १ संध्याधिकरणम् ।

### संध्ये सृष्टिराह हि ॥ ३।२।१ ॥

पूर्वपादेधिकारियोग्यदेहो निरूपितः । द्वितीये जीवस्य मुक्ति-

1–A reads विज्ञायते for च ज्ञायते ।

योग्यता निरूप्यते । तत्र प्रथमं स्वप्नं निरूपयति । स्वप्नस्य सत्यत्वे तत्कृतगुण-
दोषसंबन्धो जीवस्य भवेत् । ततश्च निरूपिता शुद्धिर्व्यर्था स्यात् । अतः
स्वप्नस्य मिथ्यात्वं प्रदर्शयितुमाधिकरणारम्भः । तत्र पूर्वपक्षमाह । संध्ये
स्वप्ने सृष्टिराह । तस्य वा एतस्य पुरुषस्य द्वे स्थाने भवत इदं च पर-
५ लोकस्थानं च संध्यं तृतीयं स्वप्नस्थानम् ( बृ. ४।३।९ ) इत्यु-
पक्रम्य—न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथ-
योगान्पथः सृजते ( बृ. ४।३।१० ) इत्यादिना सृष्टिराह । संध्ये
स्थाने सृष्टिरस्ति । यतः श्रुतिः स्वयमेवाह । युक्तश्चायमर्थः । यथा
श्रुतिर्वदति तथैव स्वप्ने दृश्यते । देवादिवाक्यानां प्रबोधेपि बाधाभावात् ।
१० नचेयमेव सृष्टिस्तत्र दृश्यते । न तत्र रथा इत्यादिना निषेधात् । श्रुति-
वादिनां श्रुतिरेव प्रमाणम् । किं पुनरनुभवसंवादिनी । तस्मात्स्वप्ने
सृष्टिरस्ति ॥ ३।२।१ ॥

## निर्मातारं चैके पुत्रादयश्च ॥ ३।२।२ ॥

काठके चतुर्थवल्ल्यां श्रूयते । य एष सुप्तेषु जागर्ति कामं कामं
१५ पुरुषो निर्मिमाणः । तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते ( क० ४।८ )
इति निर्मातारमेके वदन्ति । यद्यपि सुषुप्त्युत्क्रान्त्योर्भेदेनेत्यत्र न तत्र
रथा इत्यपि ब्रह्मप्रकरणं तथापि नियतधर्मपक्षे जीव एव कर्तेति प्रतिभाति।
तदर्थं निःसंदिग्धं वचनमुदाहरति । भगवन्निर्मितत्वात् स्वप्नस्थस्यापि
सत्यत्वम् । न हि कर्तुः स्वापोस्ति येन भ्रमः स्यात् । जागर्तीति वच-
२० नात् । इच्छापूर्वकं च सर्वं सृजति । शतायुषः पुत्रपौत्रानिति काम-
विषयाः पुत्रादय उक्ताः । तेच निर्मिताः परलोकसाधका इति लोकत्रय-
कल्पना । चकारद्वयेन कार्यकारणगताः सर्वे धर्मा उक्ताः । तस्माच्छ्रु-
त्युपपत्तिभ्यां स्वप्नप्रपञ्चस्य सिद्धत्वात् तत्कृतगुणदोषसंबन्धे पूर्वोक्तदेह-
निर्माणं व्यर्थमिति प्राप्तम् ॥ ३।२।२ ॥

## २५ मायमात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३।२।३ ॥

तुशब्दः पक्षं व्यावर्तयति । स्वप्नसृष्टिर्मायामात्रम् । तत्र हेतुः

कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् । कृत्स्नत्वेन यस्य यादृशं स्वरूपं देशकालवस्तुसापेक्षं तथाभिव्यक्तिः कार्त्स्न्येनाभिव्यक्तिस्तदभावात् ।

अयमाशयः । श्रुतिः सृष्टिमेवाह न तस्य सत्यत्वमपि । यथा ऐतदात्म्यमिदं सर्वं तत्सत्यम् ( छां. ६।८।५ ) इति । आत्मानꣳ स्वय-
५ मकुरुत । तत्सत्यमित्याचक्षते । कथमसतः सज्जायेत ( छां. ६।२।२ ) इत्यादिश्रुतिसहस्रेभ्योस्य सत्यत्वं प्रतीयते । नैवं स्वप्नप्रपञ्चस्य श्रुतिराह । सत्यप्रयोजनाभावाच्च । स्वप्नमात्रविहारस्तु महामायावित्त्वान्माययापि सिध्यति । नापि भिन्नः प्रपञ्चः । जीवस्यैकत्वात् । अविद्यया मन्यते इति वचनान्न तत्सुखदुःखभोगार्थमपि सत्यत्वमङ्गीकर्तव्यम् । स्थानद्वय-
१० प्रतिज्ञा च विरुध्येत। जीवतो मृतांश्च पश्यतीति जीवद्वयदर्शनम् । अतो लोकद्वयप्रतिच्छायरूपत्वान्मायया क्रीडायामन्यानुरोधाभावेनातिसुखत्वाद् भगवत्कृतमात्रवाचकत्वाच्च श्रुतेरतिरिक्तकल्पनायां प्रमाणाभावाज्ज्योतिःशास्त्रनियमाभावाच्च मायामात्रमेव स्वप्न इति न तत्कृतगुणदोषसंबन्धः । दीक्षितस्यान्नभोजनप्रायश्चित्तं तु भगवत्क्रीडायामपि प्रतिच्छायत्वात्क्रियते।
१५ तदानीं कर्तृत्वस्यारोपात् । अन्यदा कर्तृत्वस्याशास्त्रत्वान्न धर्माधर्मजनकत्वम् । देवताज्ञादिस्तु जीवब्रह्मणोर्विद्यमानत्वाद्युक्ता । अलौकिकज्ञाने हि प्रतिच्छायत्वात्संवादः । क्वचिद्भगवदावेश ईषत्संवादोपि । तस्मात्स्वतन्त्रसत्यतायां प्रमाणाभावान्मायामात्रं स्वप्नप्रपञ्च इति सिद्धम् ॥ ३।२।३ ॥

## सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ३।२।४ ॥

२० ननु तर्हि जीवसाक्षिकमेकदेशेन किमिति सृजति तत्राह । सूचकः शुभाशुभफलसूचको भवति स्वप्नः । चकारात् क्वचिदाज्ञाविशेषदानम् । कलिकालादेः प्रत्यक्षे बाधकत्वात् । युक्तश्चायमर्थः । प्रातःसूचकफलस्यैव दृष्टत्वान्न तु स्वप्नपदार्थस्य । सूचकत्वे प्रमाणमाह ।

यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति ।
२५ समृद्धिं तत्र जानीयात्तस्मिन् स्वप्ननिदर्शने ॥

( छां० ५।२।२ )

10—A and C read जीवद्वय for लोकद्वय ।

इत्यादिश्रुतेः । किंच । आचक्षते च तद्विदः । स्वप्नाध्यायविदस्त-थैवाचक्षते । आरोहणं गोवृषकुञ्जराणाम् इत्यादिना । तस्मात्सूचनार्थं जीवदर्शनमिति ॥ ३।२।४ ॥

## पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ३।२।५ ॥

किंचिदाशङ्क्य परिहरति । ननु जीवाय भगवान् सृष्टिं करोति प्रदर्शयति च सर्वलीलाम् । अंशश्चायम् । कथमस्य दुःखित्वमित्याशङ्क्य परिहरति तुशब्दः । अस्य जीवस्यैश्वर्यादि तिरोहितम् । तत्र हेतुः पराभिध्यानात् परस्य भगवतोभितो ध्यानं स्वस्यैतस्य च सर्वतो भोगेच्छा तस्मादीश्वरेच्छया जीवस्य भगवद्धर्मतिरोभावः । ऐश्वर्यतिरोभावाद्दीनत्वम् पराधीनत्वम् । वीर्यतिरोभावात्सर्वदुःखसहनम् । यशस्तिरोभावात्सर्वहीनत्वम् । श्रीतिरोभावाज्जन्मादिसर्वापद्विषयत्वम् । ज्ञानतिरोभावाद्देहादिष्वहंबुद्धिः सर्वविपरीतज्ञानं चापस्मारसहितस्येव । वैराग्यतिरोभावाद्विषयासक्तिः । बन्धश्चतुर्णां कार्यं विपर्ययो द्वयोः । तिरोभावादेवैवं नान्यथा । युक्तोयमर्थः । एकस्यैकांशप्राकट्येपि तथाभावात् । आनन्दांशस्तु पूर्वमेव तिरोहितो येन जीवभावः । अत एव काममयः । अकामरूपत्वादानन्दस्य । निद्रा च सुतरां तिरोभावकर्त्री भगवच्छक्तिः । अतोस्मिन्प्रस्तावे जीवस्य धर्मतिरोभाव उक्तः । अन्यथा भगवत ऐश्वर्यादिलीला निर्विषया स्यात्तस्मान्न जीवस्वरूपपर्यालोचनया किंचिदाशङ्कनीयम् ॥ ३।२।५ ॥

## देहयोगाद्वा सोपि ॥ ३।२।६ ॥

ईश्वरेच्छयैश्वर्यादितिरोभावं स्वमते निरूप्य मतान्तरेणापि नियतधर्मवादेन निरूपयति । देहयोगाद्वा । देहसंबन्धादेवास्य सर्वतिरोभावः । विपर्ययो वा । अपिशब्दादन्यत् । अस्मिन्पक्षे देहवियोग एव पुनरैश्वर्यादिप्राप्तिः । पूर्वस्मिन्कल्पे विद्यमानेपीति शेषः । न त्वीश्वरेच्छया विकल्पः ।

---

21–ख reads ईश्वरेच्छयैवैश्वर्यादि for ईश्वरेच्छयैश्वर्यादि ।

23–ख reads तस्मिन् for अस्मिन् ।

कश्चित्परशब्देन देहादिमाह । तदाभिध्यानयोगयोराकस्मिकता स्यात् । सर्वस्य वशी सर्वस्येशानः ( बृ० ४।४।२२ ) इति विरोधश्च । कश्चित्तु—तस्याभिध्यानात् तृतीयं देहभेदः—इति श्रुत्यनुरोधेन जीवकर्तृकाभिध्यानं मत्वातिरोहितमिति कल्पयति । विपर्ययशब्देन च मोक्षम् ।
५ बह्वध्याहारेण च सूत्रद्वयं योजयति । तद् ब्रह्मवादापरिज्ञानादसंगतेश्च साधनोपदेशस्य भ्रान्तोक्तमित्युपेक्ष्यम् । निद्राया विवेकज्ञानाभावावसरत्वाद्यथाव्याख्यात एवार्थः ॥ ३।२।६।१ ॥

---

## २ तदभावो नाडीष्वित्यधिकरणम् ।

## तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ३।२।७ ॥

१० प्रसंगाज्जीवस्याज्ञानं निरूप्य सुषुप्तौ केवलमज्ञानं निरूपयितुं स्थानस्वप्नाभावे निरूपयति । एवं श्रूयते । नाडीरनुक्रम्य—तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यति । अथास्मिन्प्राण एवैकधा भवति ( कौ० ४।१९ ) इति । तथा—प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम् ( बृ० ४।३।२१ ) इति । तत्र संशयः । स्वप्नवत्प्रपञ्चसृष्टिं
१५ मायिकीमपि भगवान्करोति नवेति संशयः । तत्र य एष सुप्तेषु जागर्ति ( क. २।५।८ ) इत्यत्र जीवस्वापमात्रे भगवत्सृष्टेरुक्तत्वात्—स्वप्नं न कंचन पश्यति ( कौ० ४।१९ ) इत्यत्रापि दर्शनमात्रनिषेधात्—न बाह्यं किंचन वेद नान्तरम् ( बृ० ४।३।२१ ) इति च जागरणस्वप्नप्रपञ्चयोरविशेषेणादर्शनकथनात्सुषुप्तावपि प्रपञ्चनिर्माणमस्तीत्यवगन्तव्यम् । ततश्च
२० कस्यामप्यवस्थायां प्रपञ्चव्यतिरेकाभावान्मुक्तावपि स्यात् । स्वाप्ययसंपत्त्योरज्ञानमात्रविशेषात् । सति संपद्य न विदुः । सति संपद्यामहे ( छां० ६।९।२) इति । तस्माद् बाह्यसत्संपदोर्विद्यमानयोरपि यथा ज्ञानाभावादग्रहणमेवं प्रपञ्चस्यापीत्येवं प्राप्ते ।

उच्यते । तदभावो नाडीषु । तस्य स्वप्नस्याभावो नाडीषु । तथा-
२५ त्मनि च । कुतः । तच्छ्रुतेः । प्रपञ्चाभावश्रुतेः । कामनया हि प्रपञ्चः । सु-

षुप्तावस्थाया अकामरूपत्वश्रुतेः । तद्वा अस्यैतदात्मकाममाप्तकाममकाम५-
रूपम् ( बृ० ४।३।२१ ) इति नाडीष्वात्मनि चेति ग्रहणात्सुषुप्तिर्द्विवि-
धेति सूचयति । तथा हि हिता नाम नाड्यः पुरीतत्यन्ता हृदयदेशा-
द्बाह्याः । आभ्यन्तरः परमात्मा । हृदयदेशस्तु जीवस्येन्द्रियाणां च स एव
५ देशः । तत्र निद्रया भगवच्छक्त्या बहिर्दृष्ट्याच्छादने भगवल्लीलायां तां
पश्यति । तत्राप्याच्छादने गाढसुप्तो ज्ञानरहितः क्रियाशक्त्यान्तर्भगवन्तं
वा प्रविशति । बहिर्नाडीषु वा समायाति । अत एव बृहदारण्यकषष्ठे-यत्र
सुप्तो न कंचन कामं कामयते ( बृ० ४।३।१९ ) इति वारद्वयमाह । ता
वा अस्यैता हिता नाम नाड्यः । तद्वा अस्यैतदात्मकामम् (बृ०४।३।२१)
१० इति भेदेन । सुषुप्तिस्तूभयत्र ज्ञानशक्तेः सर्वथा तिरोधानात् । तस्मात्सुषुप्तौ
न प्रपञ्चसृष्टिः ॥ ३।२।७।२ ॥

---

## ३ अतः प्रबोध इत्यधिकरणम् ।

### अतः प्रबोधोस्मात् ॥ ३।२।८ ॥

प्रबोधे संदेहः । प्रतियोन्याद्रवति बुद्धान्तायैव (बृ०४।३।१५) इति
१५ जीवसमानधर्मप्रकरणे निरूपितम् । ततो नाडीभ्यः पुनर्हृदयदेशं गत्वा
भगवतो वा समागत्य जागर्तीति । आहोस्विद्यत्र स्थितस्तत एव जागर्तीति ।
तत्र श्रुत्यनुरोधाद्धृदयदेशमागत्य जागर्तीत्येवं प्राप्ते ।

उच्यते । अतो नाडीभ्य एव प्रबोधः । गर्तपतितस्य प्रबोधे हि
ततो गमनम् । प्रतियोन्याद्रवणं तु भगवत इति । किंच । प्रबोधोस्मात् ।
२० अस्मादात्मनः सकाशादेव प्रबोधः । प्रिययेव संपरिष्वक्तस्य बोधाभावे
कथमागमनम् । अत एव संपरिष्वक्तो निबिडनिद्रः । तस्माद्यत्रैव तिष्ठति
तत एव प्रबोध इति सिद्धम् ॥ ३।२।८ ॥

### स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ३।२।९ ॥

किंचिदाशङ्क्य परिहरति । ननु प्रिययेव प्राज्ञेनात्मना परिष्व-
२५ क्तस्य ब्रह्मलोकं गतस्य प्रबोधेन ज्ञाने मुक्त एव भवेन्न तु पुनरागच्छेत् ।

अतो भगवदिच्छया देहनिर्वाहाय तत्स्थाने नियुक्तोन्य एव जीवः समायातु । अन्यतः प्रबोधे तु स एव । व्यवहारस्तु तावता सेत्स्यति । मुक्त्यर्थं प्रयत्नस्तु न कर्तव्य इत्याशङ्क्य परिहरति तुशब्दः । अस्मादपि प्रबोधे स एव । कुतः । कर्मानुस्मृतिशब्दविधिभ्यः । चत्वारो हेतवः । लौकिकवैदि-
५ कयोर्ज्ञानकर्मभेदात् । तत्र लौकिके कर्मणि सामिकृतकर्मणः शेषसमापनात् । न हि कश्चिदपि सुषुप्तप्रतिबुद्धः सामिकृतं न समापयतीति क्वचित्सिद्धम् । तथानुस्मृतिः । न हि पूर्वदृष्टं न स्मरतीति क्वचित् सिद्धम् । शब्दाश्च—पुण्यः पुण्येन कर्मणा भवति पापः पापेन ( बृ० ४।४।५ ) क्वैष तदाभूत् कुत एतदागात् ( बृ० २।१।१६ ) इति । तथा सति संप-
१० द्येत्यादयश्च । विधयश्च । श्वोभूते ब्रह्माणं वृणीते । ( आ० सू० ४।४।१ ) श्वोभूते शेषꣳ समाप्नुयात् । एक एव यजेत । द्वादश रात्रीर्दीक्षितः स्यात् ( तै० सं० ५।५।६।७ ) इत्यादि । यः कामयेत वीरो म आजायत ( तै० ब्रा० २।२।१ ) इत्यादयः । भगवतैव मर्यादारक्षार्थं तथा करणम् । पूर्वपक्षेषूक्तयो दुर्बलाः । तस्मात्स एव प्रतिबुध्यते ॥ ३।२।९ ॥

१५ **मुग्धेर्धसंपत्तिः परिशेषात् ॥ ३।२।१० ॥**

किंचिदाशङ्क्य परिहरति । ननु यत्र कर्मानुस्मृतयो न सन्ति तत्रान्यो भविष्यति । क्वचिन्मूर्च्छादिविशेषे सर्वस्मृतिनाशेन मुग्धभावदर्शनात् । तत्र यथा लौकिकवैदिकव्यवहारास्तथान्यत्रापि भविष्यन्ति । अनुस्मरणादयश्च बुद्धिवृत्तयः । गङ्गाप्रवाहजलस्य गङ्गावद् य एव चिदंश-
२० स्तत्रायाति स एव तथा भवतु किं स एवेति निर्बन्धेनेत्याशङ्क्य परिहरति । मुग्धे मुग्धभावेर्धसंपत्तिरेव न सर्वा । न हि मुग्धस्य यज्ञादावधिकारोस्ति । पूर्वप्रवृत्तानि तु जीवनाधिकारात् क्रियन्ते । लौकिकव्यवहारोपि नापूर्वः सिध्यति । पूर्वोक्तहेतुसद्भावे तु न कोपि दोषः । अतो मुग्धेर्धसम्पत्तिः पूर्वैव नोत्तरा । कुत एतत् । परिशेषात् । स एव वा न
२५ वेति निश्चयप्रमाणानामभावादर्थात्संदेहोवशिष्यते । तस्मात् संदेहान्मुग्धेर्धप्रतिपत्तिः । न तत्र प्राणायनविघातकृता मूर्च्छा विचार्यते । तस्याः

22–ख reads वृत्तानि for प्रवृत्तानि ।

प्राणधर्मत्वात्। यथा बाल्यं शरीरधर्मः। व्यर्थश्च विचारः। जीवावस्था एव हि विचार्यन्ते। केवलसाक्षिवादस्तु न ब्रह्मवादः। तस्मादेक एव जीवः स्वप्नादिदोषसंबन्धरहितस्तादृशजन्मयुक्तो भगवज्ज्ञानरहितो ज्ञानाधिकारीति सिद्धम्॥ ३।२।१०॥ ३॥

---

५

## ४ उभयलिङ्गाधिकरणम्।

### न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि॥ ३।२।११॥

इदानीं विषयनिर्धारार्थं ब्रह्मस्वरूपं विचार्यते। तत्र प्रथममन्योन्यविरुद्धवाक्यानां निर्णयः क्रियते। तदर्थमेतावत् सिद्धम्। समन्वयाविरोधाभ्यामेकमेव ब्रह्म प्रतिपाद्यत इति। तत्र यथा कार्यविरोधः परिहृत १० एवं ब्रह्मधर्मविरोधोपि परिहरणीयः। अन्यथाबोधकता स्यात्। तत्र स्वगतधर्माणामविरुद्धानामग्रिमे पादे विचारः। जडजीवधर्मत्वेन प्रतीतानामत्र विचारः क्रियते। तत्र क्वचिज्जडजीवधर्मा भगवति बोध्यन्ते। क्वचिन्निषिध्यन्ते। यथा—सर्वकर्मा सर्वकामः ( छां. ३।१४।२ )। न चैते जीवधर्मा एव न भवन्तीति वाच्यम्। उच्चावचकर्मणां कामानां च जीव- १५ गतत्वप्रतीतेः। नेतरोनुपपत्तेः ( ब्र. सू. १।१।१६ ) इति सर्वत्र वैलक्षण्यस्योक्तत्वात्। कार्यविशेषधर्माणां कारणे वक्तुमशक्यत्वात्। नच कारणधर्मा एव सर्वे कार्यैंशे वा प्रतीयन्त इति वाच्यम्। अस्थूलमनणु ( बृ. ३।८।८ ) इत्यादिवाक्यैः प्रापञ्चिकसर्वधर्मवैलक्षण्यस्योक्तत्वात्।

अत्र केचिदविरोधमेवमाहुः सर्वत्र कारणत्वाद्भगवानस्ति। ततश्चा- २० स्थूलेस्थूलोनणावनणुरुच्चावचकर्तर्युच्चावचकर्तोच्चावचकाम उच्चावचकामः पृथिव्यां सर्वगन्धो जलादावगन्धः। एवं रसादिषु। एवं स्थानतः परस्योभयलिङ्गमुपपद्यते। अथवा कारण एव रूपमरूपं चावच्छेदभेदेनाचिन्त्यसामर्थ्याद्वा। अन्यथासतः सज्जननप्रसंग इत्यपिना संगृहीत इति। एतदुभयमपि न। कुतः। सर्वत्र हि। सर्वत्रैवैतादृशं रूपं भगवत उपदिश्य- २५ ते। हि युक्तोयमर्थः। भगवत्स्वरूपप्रतिपादकानि ह्येतानि वाक्यानि न त्वनुवादकानि। वैयर्थ्यापत्तेः। अचिन्त्यत्वे ज्ञानानुदयः। तमेव विदि-

त्वातिमृत्युमेति ( श्वे. ३।८ ) भक्त्या मामभिजानाति यावान्यश्चास्मि यादृशः । ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ( भ. गी. १८।५५ ) इति ज्ञानानन्तरमेव सायुज्यप्राप्तेः । नच—यस्यामतं तस्य मतं मतं यस्य न वेद सः । अविज्ञातं विजानतां विज्ञातमविजानताम् ( के. २।११ ) इति ५ वाच्यम् । शास्त्रानारम्भप्रसंगात् । अयं च विरोधः परिहरणीयः । सर्वे हि विरोधा अत्र चिन्त्यन्ते । नापि तत्तदुपादानभूतप्रदेशविशेषेणाविरोधः । अनुवादकत्वेन वैयर्थ्यापत्तेः । न च भगवति भेदोस्ति । प्रत्यारम्भमेकमेवाद्वितीयमिति वचनात् । अल्पकल्पनायामपि श्रुतिविरोधः सिद्धः । श्रुत्यविरोधार्थमेव हि प्रवृत्तेः । तस्मान्न मतान्तरानुसारेण जडजीवधर्माणां सत्त्वासत्त्वे परिहर्तुं शक्ये ॥ ३।२।११ ॥

## १० न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ ३।२।१२ ॥

प्रकारान्तरेण समाधानमाशङ्क्य परिहरति । न भवदुक्तो विरोधः संभवति । भेदात् । कारणकार्येषु सर्वत्र भेदाङ्गीकारात् । प्रपञ्चविलक्षणं ब्रह्म भिन्नम् । प्रपञ्चधर्मवद् ब्रह्म भिन्नम् । तथाज्ञातं ज्ञातं च । एकस्य भेदस्याङ्गीकारे सर्वमुपपद्यत इति चेन्न प्रत्येकमतद्वचनात् । अभेदवचनात् । १५ इयं पृथिवी सर्वेषां भूतानां मधु ( बृ. २।५।१ ) इति ब्राह्मणे—अयमेव स योयम् ( बृ. २।५।१ ) इति सर्वत्राभेदवचनात्कार्यकारणरूपप्रकाराणां भेदनिषेधात् । तस्मान्न भेदाङ्गीकारेण श्रुतयो योजयितुं शक्याः ॥३।२।१२॥

## अपि चैवमेके ॥ ३।२।१३ ॥

भेदाङ्गीकारे बाधकमाह । अपिच । एवमेवाभेदमेव भेदनिषेधे- २० नैके शाखिनो वदन्ति । मनसैवेदमाप्तव्यम् । नेह नानास्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ( क. ४।११ ) इति भेददर्शननिन्दावचनात् । तस्मान्न भेदाङ्गीकारः कर्तुं शक्यः । इवशब्दो बहु स्यामिति व्यावृत्त्यर्थः । तस्मादुपनिषत्सु सर्वप्रकारोविरोधः सिद्धः ॥ ३।२।१३॥ ४ ॥

## ५ अरूपवदेव हीत्यधिकरणम् ।

### अरूपवदेव हि तत्प्रधानत्वात् ॥ ३।२।१४ ॥

एकदेशिमतेन समाधानमाह । कथमत्र संदेहो विरोधो वा । जडजीवधर्माणां विधिनिषेधयोर्हि जडजीवधर्मा भवन्ति । अन्यत्र तूपदि-
५ श्यमाना उपासनार्था भवन्ति । ननूक्तो भेदाभावः । सत्यम् । तथापि कार्यकारणांशभावकृतस्य भगवद्विहारार्थं जातस्य भेदस्य निषेद्धुमशक्य-त्वात् । तस्माद् ब्रह्मणि जडजीवधर्माणां निषेधो युक्तः । उपचारात्तु सर्वकर्मा-दयः । विपरीतं किं न स्यादत आह । अरूपवदेव । रूप्यते निरूप्यते व्यवह्रि-यत इति रूपं सर्वव्यवहारविषयत्वं तद्युक्तं रूपवद्विश्वम् । ब्रह्म तु तद्विलक्ष-
१० णम् । कार्यकारणांशांशिनोर्वैलक्षण्यस्य युक्तत्वात् । नन्ववैलक्षण्यमपि युक्तं कारणत्वादत आह । तत्प्रधानत्वात् । तस्य ब्रह्मणः प्रधानत्वान्मुख्यत्वात् । यत्र हि तत्प्रतिपाद्यते तत्र तस्य मुख्यत्वम् । ब्रह्मप्रतिपादने ब्रह्मधर्मा-णामेव मुख्यत्वम् । नान्यधर्माणाम् । यथा प्रशासनस्य मुख्यत्वं तथा सर्वकर्मेति लौकिकधर्मानुवादेन भगवत्संबन्धे स्पष्टमेवामुख्यत्वम् । विशि-
१५ ष्टबोधनेपि सर्वशब्दस्य प्रसिद्धानुवादकत्वादतिरिक्तकल्पनायां गौरवात् प्रमाणाभावाच्च यथाकथंचित्तद्धर्मत्वेन ज्ञानस्यैवोपयोगाल्लोकधर्मानेवानूद्य वैशिष्ट्यबोधनमुचितम् । अरूपमिति वक्तव्येरूपवदिति वचनं भिन्नधर्मा-णामेवैवं निर्णयो न तु प्रशासनवद् भगवद्धर्माणाम् । तस्मात्कार्यवत्तद्ध-र्माणामपि कार्यत्वाद् भगवत्त्वं न भगवद्धर्मत्वमिति सिद्धम् ॥ ३।२।१४ ॥

२० 
### प्रकाशवच्चावैयर्थ्यात् ॥ ३।२।१५ ॥

ननु सर्वव्यवहारातीते शास्त्रवैफल्यम् । मनसैवेदमाप्तव्यम् ( क. ४।११ ) इति विरोधश्च न परिहृतः । तं त्वौपनिषदं पुरुषं पृच्छा-मि ( बृ. ३।९।२६ ) यतो वाचो निवर्तन्ते ( तै. २।९ ) इति चेत्यत आह । प्रकाशवत् । सौरप्रकाशो व्यवहार्योऽव्यवहार्यश्च । न हि स्वतः
२५ संपादयितुं शक्यते स्थापयितुं वा । आगते तु सूर्ये मेघाद्यभावे च सांनि-

---

12–ख reads यत् for तत्र ।

ध्यमात्रेण व्यवहारः कर्तुं शक्यते । तथा लौकिकवाङ्मनोभिर्न शक्यते व्यवहर्तुम् । ईश्वरसंनिधाने तु शक्यत इति द्वयमाह श्रुतिः । कुत एतदवगम्यते तत्राह । अवैयर्थ्यात् । अन्यथा शास्त्रं व्यर्थं स्यात् । चकाराद्धर्माणां तथात्वविरोधः परिहृतः । आसीनो दूरं व्रजति ( क. १।२।२० )
५ अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्णः ( श्वे. ३।१९ ) इत्यादावलौकिका भगवद्धर्मा उच्यन्ते । अकारणककार्यवचनाद् ब्रह्मधर्माणां चाकार्यत्वं बोधयति । तस्मादव्यवहार्येपि न शास्त्रवैफल्यम् ॥ ३।२।१५ ॥

## आह च तन्मात्रम् ॥ ३।२।१६ ॥

१० किंचिदाशङ्क्य परिहरति । नन्वलौकिकानीन्द्रियाणि विरोधाभावाय कथं न कल्प्यन्ते । अन्यथाकारणककार्यत्वं तस्य च नित्यत्वमलौकिकत्वं ततश्च पश्यत्यचक्षुरिति विरोध इत्याशङ्क्य परिहरति । आह च श्रुतिः स्वयमेव तन्मात्रं प्रज्ञाघनमात्रम् । स यथा सैन्धवघनोनन्तरोबाह्यः कृत्स्नो रसघन एवं वा अरेयमात्मानन्तरो बाह्यः कृत्स्नः प्रज्ञानघन
१५ एव ( बृ. ४।५।१३ ) इति स्वरूपातिरिक्तानामिन्द्रियाणामभावात् । च क्रियाभावोपि । वेदविरोधेन तथा कल्पयितुमशक्यत्वात् । वेदानिःश्वासायनभूतसमुत्थानादेरुक्तत्वाच्च । अतो नेन्द्रियाणां परिकल्पना । किंतु सर्वाकारस्वरूपं वस्त्वेव तादृशमिति मन्तव्यम् । कृत्स्नवचनात् । चकारात्—सर्वेन्द्रियविवर्जितम् ( भ. गी. १३।१४ ) इति स्मृतिरपि ।
२० तस्मान्नेन्द्रियकल्पनाविरोधः ॥ ३।२।१६ ॥

## दर्शयति चाथो अपि स्मर्यते ॥ ३।२।१७ ॥

पुनः प्रकारान्तरेण विरोधमाशङ्क्य परिहरति । ननु ब्रह्म जगत्कारणमिति सिद्धम् । तच्च समवायि निमित्तं चेति । कारणधर्मा एव हि कार्ये भवन्ति । असंभावनायां त्वन्यथा कल्पनम् । कामादयो धर्माश्च

---

19–A, C and D read कल्पनया विरोधः for कल्पनाविरोधः ।

श्रुतौ विहिताः । ते ब्रह्मण एव भवितुं युक्ताः । निषेधिकापि श्रुतिः । न हि वेदवादिनामणुमात्रमप्यन्यथा कल्पनमुचितमित्याशङ्क्य परिहरति । दर्शयति श्रुतिरेव जडजीवधर्माणां भगवत्यभाव इति । द्वे वाव ब्रह्मणो रूपे ( बृ. २।३।१ ) इत्युपक्रम्य द्वेधा पञ्च भूतान्युक्त्वा—अथात आदेशो ५ नेति नेति ( बृ. २।३।६ ) इत्याह । इतिशब्दः प्रकारवाची । ब्रह्म पञ्च महाभूतानि भवति नत्वेवंप्रकारकम् । तत्साधयति । न भवत्येव ब्रह्म तादृशम् । हि युक्तोयमर्थः । एतस्माज्जातमिति । न हि कार्यकारणयो-रेकः प्रकारो भवति । अतो नेति नेतीति प्रकारनिषेधोपसंहारः । नतु समवायित्वमात्रत्वम् । किंत्वन्यत्परमस्तीति रूपं निरूप्य नाम निरू-१० पयति । सत्यस्य सत्यमिति । तेन प्रपञ्चातिरिक्तब्रह्मणो विद्यमानत्वात्प्र-पञ्चधर्मवचनं तस्मिन्नौपचारिकमेव युक्तम् । श्रुत्यैव तथा प्रतिपादनात् । चकारः पूर्वयुक्त्यनुसंधानार्थः । अथो इति प्रक्रमभेदोपि । अथात आदेश इति भिन्नप्रक्रमेणाह । श्रुतेरन्यार्थतानिराकरणायाह । अपि स्मर्यते । अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते ( भ. गी. १३।१२ ) १५ इति । सदसतोः क्षेत्रत्वात् । ज्ञेयनिरूपणे निषेधः । प्रपञ्चधर्मा भगवत्यु-च्यन्ते वेदादौ न तु तद्धर्मा भवन्तीति ज्ञापयति । तस्माच्छ्रुतिस्मृतिभ्या-मेव तथा निर्णयः ॥ ३।२।१७ ॥

## अत एव चोपमा सूर्यकादिवत् ॥ ३।२।१८ ॥

प्रपञ्चधर्मा भगवत्युपचारादुच्यन्ते—इत्यत्र निदर्शनमाह । अत एवे-२० ममेव निर्णयमाश्रित्य-समः प्लुषिणा समो नागेन समो मशकेन सम एभिस्त्रिभि-र्लोकैः समोनेन सर्वेण (बृ. १।३।२२) इति निरुपमस्य भगवतो यदुपमानं तत् तद्धर्मसंबन्धात् । न चात्र स्वतन्त्रतादृशधर्मवत्त्वं ब्रह्मणो वक्तुं युक्तम् । नन्विदमपि विरुद्धमित्याशङ्क्य दृष्टान्तमाह । सूर्यकादिवत् । सूर्येण सहितं जलं सूर्यकम् । यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोनु-२५ गच्छन् । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ( ब्र. बिं. १२ )

1—ख reads श्रुतिविहिताः for श्रुतौ विहिताः ।

19—B reads भगवत्युच्यन्ते for भगवत्युपचारादुच्यन्ते ।

इति । यथेतरसंश्लिष्टस्योपमानत्वमेवं—समः प्लुषिणा ( बृ. १।३।२२ ) इत्यपि । चकारस्तु विरोधाभावो वक्तव्योधिकरणं च संपूर्णमेकदेशिन इति सूचयति । तस्माज्जडजीवधर्माणां भगवत्युपचारः । निषेधस्तु मुख्य इति ॥ ३।२।१८ ॥ ५ ॥

---

५ ६ अम्बुवदग्रहणादित्यधिकरणम् ।

## अम्बुवदग्रहणात्तु न तथात्वम् ॥ ३।२।१९ ॥

मुख्यसिद्धान्तं वक्तुमेकदेशिनं दूषयति । तुशब्दस्तथा सिद्धान्तं व्यावर्तयति । तथात्वं समवायातिरिक्तस्य तद्धर्मयोगात् । जडजीवधर्मयोगात्सर्वकामत्वादयो न भवन्ति । कुतः । अम्बुवदग्रहणात् । सर्वपरस्य हि १० प्रतिबिम्बेधिकरणधर्मवत्त्वम् । तत्र रूपरहितं तत्र विद्यमानं च न प्रतिबिम्बत इति वक्तव्यम् । तथापि स्वमतविरोधादम्बुवदग्रहणमिति । स्वच्छमम्बु प्रतिबिम्बं गृण्हाति । न हि तथा धर्मा गृहीतुं शक्नुवन्ति । धर्मत्वाच्च । सर्वाधारत्वेन तथोच्यमाने वैयर्थ्यमिति पूर्वमवोचाम ।

नच भ्रमात्कल्पनं वेदेनोच्यते । अप्रतारकत्वात् सर्वज्ञत्वाच्च । १५ विप्लववादिन एव एवं वचनं न वैदिकस्य । पृथिव्यां तिष्ठन् ( बृ. ३।७।३ ) इत्यादिविरोधश्च । तस्माद्ब्रह्मधर्मा एव सर्वकामादयो न तूपाधिसंबन्धादौपचारिका इति ॥ ३।२।१९ ॥

## वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ ३।२।२० ॥

२० सिद्धान्तेन विरोधपरिहारमाह । विरोधो हि परिहरणीयो लोकवेदाभ्यां तदनुसारेण । महानवकाशोल्पोवकाशो यथावकाशं दश चमसानिति लौकिकवैदिकव्यवहारो वस्तुधर्मविरुद्धो दृश्यते । व्यापकत्वं वृद्धिह्रासौ चाकाशस्यैव । तत्र यथा करके प्रविष्ट आकाशस्तथा व्यपदिश्यते । तथा सत्युभयसामञ्जस्यं भवति । अन्यथैकतरबाधो भवति । एवं तत्तदनुप्रवेशाद् २५ ब्रह्माप्येवम् । न चौपाधिकत्वम् । जपाकुसुमलौहित्यवदन्यधर्मत्वाभावात् ।

अन्यानुविधायित्वेपि स्वधर्मा एव ते । कारणत्वादिवत् । न चागन्तु-
कत्वात्तद्धर्मा एव न भवन्तीति वाच्यम् । अन्यधर्मत्वे प्रमाणाभावात् ।
तद्गतत्वप्रतीतेश्च दृष्टत्वाच्चाविरोधः । अविरोधप्रकारोयम् । यथोभयसामञ्जस्यं
भवति प्रकारोपि तस्यैव तथा वक्तव्यः । तस्माद्यथाकाशस्य वृद्धि-ह्रास-
५ भाक्त्वं करकादिष्वन्तर्भावात्तथैवोभयसामञ्जस्यादेवं ब्रह्मापि वृद्धि-ह्रासपदेन
शरीर आकाशजीवयोरेकमुदाहरणं बोधयति ॥ ३।२।२० ॥

**दर्शनाच्च ॥ ३।२।२१ ॥**

हेत्वन्तरमाह । भगवति सर्वे विरुद्धधर्मा दृश्यन्ते । न हि दृष्टे-
नुपपन्नं नाम । व्याघातात् । तादृशमेव तदास्त्विति त्वध्यवसायः प्रामा-
१० णिकः । चकारादुलूखलबन्धनादिप्रत्यक्षमेवोभयसाधकं दृष्टमिति । अथो
अमुष्यैव ममार्भकस्य ( भा. १०।८।४० ) इति च । तस्माच्छ्रुतिप्रत्यक्षैः
सर्वविरुद्धधर्माश्रयत्वेन ब्रह्मप्रतीतेर्न विरोधः ॥ ३।२।२१ ॥

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥३।२॥२२॥**

परमार्थतो विरोधं परिहृत्य युक्त्यापि प्रतिषेधति । ननु सर्व
१५ विशेषधर्माणामस्थूलादिवाक्यैर्निषेधात् कथमविरोधः प्रत्येतव्य इति चेत्त-
त्राह । नैतावत्त्वं हि प्रतिषेधति । प्रकृते यदेतावत् परिदृश्यमाना यावन्तः
पदार्था लौकिकास्तेषामेव धर्मान् निषेधति । प्रतीतस्यैव हि निषेधात् ।
अतो जगद्वैलक्षण्यमेवास्थूलादिवाक्यैः प्रतिपाद्यते न तु वेदोक्ता ब्रह्मधर्मा
निषेद्धुं शक्यन्ते । कुत एतदवगम्यते तत्राह । ततो ब्रवीति च भूयः ।
२० यत्रैव वाक्ये पूर्वं निषेधति तस्मिन्नेव वाक्ये पुनस्तमेव विधत्ते । यतो वाचो
निवर्तन्ते । अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान् ( तै. २।९ )
इति । तथास्थूलवाक्येपि—एतस्यैव प्रशासने ( बृ. ३।८।९ ) एतद्विदित्वा
( बृ. ३।८।१० ) आकाश ओतश्च प्रोतश्च ( बृ. ३।८।११ )
इति । चकारादेकवाक्योपाख्यानभेदौ संगृहीतौ । सर्वत्र लौकिकं
२५ प्रतिषेधत्यलौकिकं विधत्त इति युक्त्या निर्णयः । तस्माद् युक्त्याप्य-
विरोधः ॥ ३।२।२२॥६॥

---

1–A reads न त्वागन्तुकत्वात् for न चागन्तुकत्वात् ।

## ७ तदव्यक्तमाह हीत्यधिकरणम् ।

## तदव्यक्तमाह हि ॥३।२।२३॥

शब्दबलविचारेण विरोधं परिहृत्यार्थबलविचारेणाविरोधप्रतिपादनायाधिकरणमारभते । सर्वाणि विरुद्धवाक्यान्युदाहृत्य चिन्त्यन्ते । न ५ चक्षुषा गृह्यते ( मुं. ३।१।८ ) कश्चिद्धीरः प्रत्यगात्मानमैक्षत् ( क. २।४।१ ) नापि वाचा ( मुं. ३।१।८ ) सर्वे वेदा यत्पदमामनन्ति ( क. १।२।१५ ) अप्राप्य मनसा सह ( तै. २।९ ) मनसैवेदमाप्तव्यम् ( क. ४।११ ) अस्पर्शमगन्धमरसम् ( क. ३।१५ ) सर्वरूपः सर्वगन्धः सर्वरसः ( छां. ३।१४।२ ) अपाणिपादः ( श्वे. ३। १० १९ ) इत्यादि । विश्वतश्चक्षुः ( ऋ. सं. १०।८१।३ ) इत्यादि । निर्गुणश्च । यः सर्वज्ञः सर्वशक्तिः ( छां. ३।१४।२ ) इत्यादि विरुद्धवाक्यानि । न हि वस्तु द्विरूपं संभवति । वाक्यद्वयमपि प्रमाणम् । तथा सति प्रमाणान्तरानुरोधेनैकस्य स्वार्थे प्रामाण्यमन्यस्योपचरितार्थत्वमिति युक्तम् । तत्र प्रत्यक्षानुरोधेन निर्णयो विचार्यते । तत्र पूर्वपक्षमाह । १५ तदव्यक्तम् । तद्ब्रह्माव्यक्तमेव भवितुमर्हति । कुतः । आह हि । श्रुतिप्रत्यक्षाभ्याम् । नेति नेत्यात्मा । अगृह्यो न हि गृह्यते ( बृ. ३।९।२६ ) नहि गृह्यत इत्यनुभवसाक्षिकं प्रमाणं श्रुतिराह । न हि केनचिदपि चक्षुषा मनसा वा ब्रह्म दृष्टमस्ति । सर्वरूपत्वे तु सर्वैरेव द्रष्टुं शक्येत । तस्मात्सर्वधर्मवत्त्वेन प्रतिपादकान्युपचरितार्थान्येव । अनुभवविरोधादि- २० त्येवं प्राप्तम् ॥ ३।२।२३ ॥

## अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ ३।२।२४ ॥

अपीति पूर्वपक्षगर्हायाम् । सर्वथा मूर्खः पूर्वपक्षवादी । यतः संराधने सम्यक् सेवायां भगवत्तोषे जाते दृश्यते । श्रद्धाभक्तिध्यानयोगादवेहि ( कै. १।२ ) । यमेवैष वृणुते तेन लभ्यः ( मुं. ३।२।३ ) भक्त्या त्वनन्यया २५ शक्य अहमेवंविधोर्जुन । ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ( भ. गी.

---

23–A and C read ज्ञान for ध्यान ।

११।५४ ) इति । द्विविधमपि रूपं दृश्यते । ततस्तु तं पश्यते निष्कलं ध्यायमानः ( मुं. ३।१।८) अनेकबाहूदरवक्त्रनेत्रं पश्यामि त्वां सर्वतोनन्तरूपम् ( भ. गी. ११।१६ ) इति । संराधकस्य स्वानुभवो ध्रुवादीनामनुमापकत्वं च । तस्मात्प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यां वा ब्रह्म साकार-
५ मनन्तगुणपरिपूर्णं वेति नाव्यक्तमेवेति निश्चयः । अतो लौकिकालौकिकप्रत्यक्षविषयत्वादुभयवाक्यार्थरूपमपि ब्रह्म ॥ ३।२।२४॥७ ॥

---

## ८ प्रकाशादिवच्चेत्यधिकरणम् ।

### प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥३।२।२५॥

पुनः प्रकारान्तरेण पूर्वोक्तमेव स्थिरीकर्तुमधिकरणान्तरमारभते ।
१० सूत्रद्वयेन पूर्वपक्षद्वयमाह । ननु प्रत्यक्षानुरोधेनोभयविधवाक्यसमाधानं नोपपद्यते । वस्तुशक्त्यैव निर्णय उचितः। नतु श्रुतिप्रत्यक्षाभ्याम् । यथा प्रकाशजलसुवर्णादीनामनेकविधत्वं नाङ्गीक्रियते । सूर्यचन्द्रमणिप्रकाशादिषूष्णशीतानुभवरूपस्पर्शाः प्रतीयन्ते। न हि तेजसि तावन्तः स्पर्शा अङ्गीक्रियन्ते । जले च हिमतप्तकुण्डादिषु । तथा सुवर्णे वर्णभेदाः । न हि
१५ सर्वे स्वाभाविकाः । तेजस्त्वादिस्वभावहानिप्रसंगात् । तथा ब्रह्मणोप्यवैशेष्यमङ्गीकर्तव्यम् । निर्विशेषं हि ब्रह्मेति सर्वप्रसिद्धिः । चकारादेवं साधकाः—अगृह्यो न हि गृह्यते ( बृ. ३।९।२६ ) इत्येवमादयः । ननूक्तं भक्तस्य तथा साक्षात्काराच्चादृशश्रुतेश्च नैकविधत्वमङ्गीकर्तुं शक्यत इति । नैष दोषः । प्रकाशश्च कर्मणि तपःप्रणिधानादिकर्मणि भगवतः
२० प्रकाशः । तत्र तेषां कामस्तथा प्रकटीभवति । चकारादप्रकाशान्यथाप्रकाशौ। तत्र हेतुः । अभ्यासादावृत्तेः। यद्येकवारं प्रकटः स्यात्तदा तद्रूपत्वमङ्गीक्रियेतापि । प्रतिभक्तं प्रतिकर्म चाविर्भावः। अतः प्रकाशोपि कृत्रिम एव । दीपप्रकाशवत् । अन्यथा सर्वदा स्यात् । तस्मान्न भक्तप्रत्यक्षेण निर्णयः ॥ ३।२।२५ ॥

---

3–ख reads साधकस्य for संराधकस्य ।
21–C reads तदा तदा for तदा ।

## अतोनन्तेन तथाहि लिङ्गम् ॥ ३।२।२६ ॥

फलितमाह । अतः—अभ्यासादनन्तरूपेणाविर्भावः । न ह्येकं वस्तु प्रतिक्षणमन्यादृशं भवति निमित्तभेदव्यतिरेकेण । क्वचिद्भक्तकामश्च निमित्तत्वेन प्रतीयते । नाहि निमित्तभेदेन जायमानं वस्तु भवति । ५ किंतु तथा सति लिङ्गं विग्रह एव भवति । युक्तश्चायमर्थः । यद्यद्धिया त उरुगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाय ( भा. ३।९।११ ) इति । अतः श्रुत्या प्रत्यक्षेण वा तथा निर्णयः कर्तुं शक्यः । तस्मात्सर्वागोचरमेव ब्रह्मेत्येवं प्राप्तम् ॥ ३।२।२६ ॥

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ ३।२।२७ ॥

१० तुशब्दः पक्षं व्यावर्तयति । केवलयुक्त्या लोकदृष्टान्तेन निर्णयः शक्यते कर्तुम् । अन्यथेदं शास्त्रं व्यर्थमेव स्यात् । अत्र हि वेदादेव ब्रह्मस्वरूपज्ञानम् । तत्कथं स्वरूपशक्त्या निर्णयः । ब्रह्म तूभयरूपम् । उभयव्यपदेशात् । उभयरूपेण निर्गुणत्वेनानन्तगुणत्वेन सर्वविरुद्धधर्मेण रूपेण व्यपदेशात् । तर्हि कथमेकं वस्त्वनेकधा भासते । तत्राह । अहिकु- १५ ण्डलवत् । यथा सर्प ऋजुरनेकाकारः कुण्डलश्च भवति तथा ब्रह्मस्वरूपं सर्वप्रकारं भक्तेच्छया तथा स्फुरति । कल्पनाशास्त्रे हीदं बाधकम् । अनेककल्पनागौरवं चेति । न तु केवलं श्रुत्येकसमधिगम्ये । न च शास्त्रवैफल्यम् । एवं साधनार्थत्वात् । अत्रैव हि सूरिव्यामोहादन्यशास्त्रोत्पत्तिः । अतः सर्वविरुद्धधर्माणामाश्रयो भगवान् । न हि प्रमाणश्रुतदृष्टेनुपपत्ति- २० रस्ति यदर्थं युक्त्यपेक्षा। लोकेपि शरीरान्तःकरणादीनि परस्परविरुद्धदयामारकत्वादीनि विषयभेदेनैकस्मिन्नपि क्षणे प्रतीयन्ते । तस्मात्सकलविरुद्धधर्मा भगवत्येव वर्तन्त इति न क्वापि श्रुतिरुपचरितार्थेति सिद्धम् ॥ ३।२।२७॥ ८ ॥

---

14–A om. रूपेण before व्यपदेशात ।

18–ख reads अन्यथा for अन्य ।

## ९ प्रकाशाश्रयवद्वेत्यधिकरणम् ।

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ ३।२।२८ ॥

धर्मरूपविचारेण पूर्वोक्तपक्षद्वयं स्थापयितुमाधिकरणारम्भः। ननु धर्मा नाम के ब्रह्मणो भिन्नास्तत्कार्यरूपा आहोस्विद्ब्रह्मैवेति संशयः । तत्र लोके ५ कार्यस्यैव पटरूपादेस्तद्धर्मत्वात्समवेतत्वात्तान्नित्यतायां प्रमाणाभावात्स्वाभाविकत्वमात्रेण नित्यत्वकल्पनायां गौरवापत्तेः—एकमेवाद्वितीयम् ( छां. ६।२।१ ) इति श्रुतिविरोधाच्च । धर्माः प्रपञ्चवत्कार्याः । तथा सति ब्रह्म सर्वकल्पनारहितमेव सेत्स्यतीत्येवं प्राप्ते ।

इदमुच्यते । प्रकाशाश्रयवद्वा । वाशब्दः पक्षं व्यावर्तयति । यथा १० प्रकाशाश्रयाः सूर्यादयः प्रकाशेन न भिन्नाः । पृथक्स्थित्यभावात् । समवेतत्वाच्च । मूलाविच्छेदरूपेण तदाधारतया स्थितत्वाच्च । नापि सूर्य एव । भिन्नप्रतीतेर्विद्यमानत्वाच्च । तादृशमेव तद्वस्तूत्पत्तिसिद्धमिति मन्तव्यम् । कल्पनायामपि यथा सूर्यप्रकाशयोः कल्पनैवं ब्रह्मधर्मयोरपि । न ह्यन्यथा वेदे प्रवृत्तिर्निषेधशेषता सत्यज्ञानानन्तानन्दपदानां १५ सामानाधिकरण्यं वा संभवति । लक्षणायां तु सुतरामेव धर्मापेक्षा । अतो विशिष्टपदार्थ एव तादृशो वेदसिद्ध इति मन्तव्यम् । तत्र हेतुः । तेजस्त्वात् तेजःशब्दवाच्यत्वात् । बहुदूरव्याप्त्यर्थमेव हेतुरुक्तः । आतपादेर्धर्मत्वेन धर्मित्वेन च प्रतीतेः । अपूर्ववदेव दृष्टत्वाच्छ्रुतत्वाच्च न धर्मेष्वपि युक्त्यपेक्षा । तस्मात् सिद्धं यथाश्रुतमेव ब्रह्मेति ॥ ३।२।२८ ॥

## २० पूर्ववद्वा ॥ ३।२।२९ ॥

एकदेशिमतेनापि सर्वसमाधानमाह । अथवा—अरूपवदेव हि ( ब्र. सू. ३।२।१४ ) इत्यादिपञ्चसूत्र्या यः सिद्धान्तः कथितस्तादृशं वा ब्रह्म प्रतिपत्तव्यम् ।

अयमाशयः । वेदस्थापनार्थं हि प्रवृत्तिः । तत्र यथाक्षरमात्र- २५ स्यापि बाधो न भवति तथा वक्तव्यम्। यदर्थमुभयरूपताङ्गीकृता तत्र धर्माणां

---

5–ख reads धर्मत्वात् for तद्धर्मत्वात् ।

14–A and C read वेदप्रवृत्तिः for वेदे प्रवृत्तिः ।

16–ख reads हेतुरुक्तः for हेतुः ।

स्वरूपनिर्वाहार्थमवश्यं ब्रह्मवैलक्षण्यमङ्गीकर्तव्यम् । तथासति एकमेवाद्वितीयम् ( छां. २।२।१ ) इति बाधः प्रसज्येत । तथा चोत्पत्त्या विचारे निर्द्धर्मकमेव पूर्वं ब्रह्मेति प्रतिपत्तव्यम् । उपपत्त्यापि विचारः पूर्वानुरोधेनैव कर्तव्यः । तत्र धर्माणामपि ब्रह्मत्वे एकविज्ञानेन सर्वविज्ञान-
५ मुपपद्यते नान्यथा । ततश्च प्रथमं ब्रह्म स्वधर्मरूपेण भवति । तदनु-क्रियादिरूपेण प्रपञ्चरूपेण च । तावतैव सर्ववेदार्थसिद्धेः । न च लौकिकी युक्तिस्तत्रापेक्ष्यते । येन तादृशस्य कथं सर्वभाव इति पर्यनुयोगो भवेत् । धर्मकल्पनायामपि—नैषा तर्केण मतिरापनेया (क. १।२।९ ) इति समानम् । उत्पत्त्या चोपपत्त्या च विचारद्वयम् । उपपत्त्या पूर्वनयनं
१० स्वसिद्धान्तः । एकदेशिनस्तद्विपरीतम् । उभयमपि सूत्रकारस्य संमत-मिति ॥ ३।२।२९ ॥

## प्रतिषेधाच्च ॥ ३।२।३० ॥

एकदेशिमत उपपत्त्यन्तरमाह । एकमेवेत्युक्त्वा पुनरद्वितीयमिति द्वितीयं प्रतिषेधति । स एवकारेणैव सिद्धो ऽर्थः सन् धर्मनिषे-
१५ धमपि सूचयति । ऐक्षतेति वचनात्तदुत्पत्तिः । चकारादेकविज्ञानेन सर्वविज्ञानोपक्रमः परिगृहीतः । तस्मान्न ब्रह्मणि कश्चिद्विरोध इति सिद्धम् ॥ ३।२।३०॥९ ॥

---

## १० परमतः सेतून्मानेत्यधिकरणम् ।

## परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३।२।३१ ॥

२० धर्मिधर्मविरोधः परिहृतः । धर्म्यन्तरविरोधपरिहारार्थमधिकरणमारभते । तत्र पूर्वपक्षमाह । परमतः । अतोपि ब्रह्मणः परमन्यदुत्कृष्टं फलमस्ति । तत्र वैदिकहेतवः । सेतून्मानसंबन्धभेदव्यपदेशेभ्यः । यद्यपि समन्वय एवैते दोषाः परिहृतास्तथापि स्वरूपविरोधपरिहारप्रस्तावात्पुनरुच्यन्ते । सर्ववाक्यप्रतिपाद्यमेकमेवेत्यपि न सिद्धम् । एतैर्हेतुभिः परिच्छे-

---

6–B om. प्रपञ्चरूपेण before च ।
22–ख om. फलं after उत्कृष्टं ।

देन धर्मिभेदे सिद्धे न पूर्वाधिकरणसिद्धान्तविरोधः । ननु समन्वयेन ब्रह्मत्वमुत्तरपादेनैक्यं पूर्वाधिकरणेनाविरोध इति व्यर्थमिदमधिकरणमिति चेन्न । अर्थबलविचारोयं समन्वये चोत्तरपादे च शब्दबलविचारः । धर्मिविचारान्न पूर्वेण गतार्थत्वम् ।

५ **फलतः साधनेभ्यश्च प्रमेयाच्च प्रमाणतः ।**
**विचारेणाबृहत्तच्चेत् कोन्यः साधयितुं क्षमः ॥ ३८ ॥**

अतो हेतून्बाधकानाह । एकदेशबाधकत्वात् तत्र फलतो बाधहेतुमाह । सेतुव्यपदेशात्—अथ य आत्मा स सेतुर्विधृतिः (छां. ८।४।१) इति दहर उत्तरेभ्यः ( ब्र. सू. १।३।१४ ) इत्यत्र ब्रह्मत्वमस्य सिद्धम् ।
१० अथ य इहात्मानमनुविद्य व्रजन्ति ( छां. ८।१।६ ) इत्युपक्रम्य—सर्वेषु लोकेषु कामचारो भवति ( छां. ८।१।६ ) इत्युक्त्वा कामानुपपाद्याज्ञानव्यवधानं ज्ञानप्रशंसार्थमुक्त्वा ज्ञानानन्तरं संसारसंबन्धाभावाय सेतुत्वं वदति । पापाब्धितरणार्थं यश्च तरति तद्गताश्च दोषा गच्छन्तीति च । अतः संसारफलयोर्मध्ये विद्यमानत्वात्तीर्णस्यैव फलश्रवणात् फलरूपं वस्तु
१५ किंचिदन्यदस्तीति ज्ञायते । निधित्वेन फलवचनमवान्तरफलपरं भविष्यति । एतमानन्दमयमात्मानमुपसंक्रम्य ( तै. ३।५ ) इत्यप्यत्रोदाहरणम् । तथोन्मानव्यपदेशात् । तत्रैव—यावान्वा अयमाकाशस्तावानेषोन्तर्हृदय आकाशः ( छां. ८।१।३ ) इतिसाधनयुक्तिप्रश्न उन्मानेन परिच्छेदं निरूपयति । दृष्टान्तदार्ष्टान्तिकत्वेन ज्ञानं साधनं तत्र बहिराकाशज्ञानमपि साधनं
२० भवति । चतुष्पाच्च ब्रह्म भूतादिपादाश्च ज्ञातव्याः । तथा संबन्धव्यपदेशात् । तत्रैव प्रमेयनिरूपणप्रस्तावे—उभावप्यस्मिन् ( छां. ८।१।३ ) इत्यादिनाधाराधेयसंबन्धो निरूपितः । अत्र च वस्तुपरिच्छेदो निरूपितः । प्राज्ञेनात्मना संपरिष्वक्तः ( बृ. ४।३।२१ ) इति च । तथा भेदव्यपदेशात् । य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते । य एषोन्तरक्षिणि पुरुषो दृश्यते
२५ ( छां. १।७।५ ) इत्यत्र स्थानद्वयस्थितयोः पुरुषयोः परस्परं धर्मातिदेशमाह । अक्षिस्थितनिरूपकमतिदेशः प्रमाणमिति । धर्म्यभेदे तु स एवा-

---

7–C reads बाधमाह for बाधहेतुमाह ।

यमिति वदेत् । अतो देशकालवस्तुस्वरूपपरिच्छेदाच्चतुर्विधपरिच्छेदरहितमन्यत् किंचिदस्तीति प्रतिपत्तव्यमित्येवं प्राप्तम् ॥ ३।२।३१ ॥

## सामान्यात्तु ॥ ३।२।३२ ॥

तुशब्दः पक्षं व्यावर्तयति । समानस्य भावः सामान्यम् । सेतवा-
५ काशादिशब्दास्तद्धर्मातिदेशार्थमुच्यन्ते न तु तद्गतं दोषमपि कल्पयन्ति । संसारसागरोत्तरणोपायत्वात्सेतुत्वं निर्लेपायाकाशत्वम् । कामादिभिर्दोहाय चतुष्पात्त्वम् । अमृतत्वाय षोडशकलत्वम् । अदुर्लभत्वाय संबन्धः । दिव्यत्वाय धर्मातिदेशः । कुण्डपायिनामयने मासाग्निहोत्रवद् गुणार्थमेव वचनम् न दोषार्थमिति न ततोन्यशङ्कोत्पादनीया । तस्मान्न
१० पूर्वोक्ता दोषाः ॥ ३।२।३२ ॥

## बुध्यर्थः पादवत् ॥ ३।२।३३ ॥

अन्यसमानधर्मवत्त्वं कुत्रोपयुज्यत इत्यत आह । बुध्यर्थः । तथा व्यपदेशो बुध्यर्थः । बुद्धिरेव प्रयोजनं यस्य । तथोपासनार्थमयुक्तमित्याशङ्क्य दृष्टान्तमाह । यथा भूतादीनां पादत्वज्ञानमुपासार्थं तथा तत्तद्गु-
१५ णत्वेन ज्ञानार्थं स्वधर्मप्रशंसार्थमेवमुच्यते ॥ ३।२।३३ ॥

## स्थानविशेषात्प्रकाशादिवत् ॥ ३।२।३४ ॥

ननु स एवायमित्यतिदेशेपि तथा बुद्धिः संपद्येतैवेति व्यर्थो धर्मातिदेश इत्याशङ्क्य तथोक्तेपि समानधर्मत्वज्ञानाभावे हेतुमाह । स्थानविशेषादिति । धर्मैक्येपि स्थानविशेषप्राप्त्या न समानधर्मत्त्वं दृश्यते ।
२० अन्यत्रापि न तथात्वमायास्यतीत्यतिदेशो धर्माणामपि कृत इत्यर्थः । अस्मिन्नर्थे दृष्टान्तमाह । प्रकाशादिवादिति । यदादित्यगतं तेजः ( भ. गी. १५।१२ ) इति वाक्यादादित्यचन्द्राग्निगततेजसामैक्येपि न समानप्रकाशत्त्वं यथा तथात्रापीति ज्ञानसंभवादित्यर्थः । आदिपदादेकस्यैव

---

7–C reads अतिदुर्लभत्वाय for अदुर्लभत्वाय ।
23–ख reads तत्रापीति for तथात्रापीति ।

कालस्य यथोपाधिविशेषसंबन्धादुत्तरायणत्वाद्युत्तमधर्मवत्त्वं तद्विपरीतधर्मत्वं तथेत्यपि संगृह्यते ॥ ३।२।३४ ॥

## उपपत्तेश्च ॥ ३।२।३५ ॥

किंच । सत्यज्ञानाद्युक्तधर्मविशिष्टब्रह्मणोन्य उत्तमोस्तीति वदता
५ तत्रेत उत्कृष्टधर्मवत्त्वं वाच्यम् । तच्चाशक्यं प्रमाणाभावात् । साम्येपि तथा विशेषाभावोद्वैतश्रुतिविरोधश्च । तस्मादितः परस्यानुपपन्नत्वादुक्तरूपमेव परमकाष्ठापन्नं वस्त्वित्युपपद्यत इत्यर्थः ॥ ३।२।३५ ॥

## तथान्यप्रतिषेधात् ॥ ३।२।३६ ॥

यथा सेत्वादयः श्रुत्युक्तास्तथैव—न तत्समश्चाभ्यधिकश्च दृश्यते
१० ( श्वे ६।८ ) इति श्रुत्यैव ततोधिकस्य प्रतिषेधात्त्वयाप्यस्मदुक्त एव मार्गोनुसर्तव्य इत्यर्थः । अवतारकाले पूर्वं स्वशक्त्याविर्भावमकृत्वा पश्चात्तदाविर्भावे कुतो लोकानां पूर्वावस्थातो भगवत्येवाधिक्यमिव प्रतीतं भवतीत्यभिप्रायेणान्यपदोपादानम् ॥ ३।२।३६ ॥

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३।२।३७ ॥

१५ प्रकरणमुपसंहरन् फलितमर्थमाह । अनेन सेत्वादिव्यपदेशानां मुख्यार्थकत्वनिराकरणेन व्यापकत्वं ब्रह्मणः सिद्धमित्यर्थ इति केचित् । तन्न । जन्माद्यस्य यत इत्यादिना सर्वदेशगतकार्यकर्तृत्वमुक्तमिति तेनैव व्यापकत्वस्य सिद्धत्वात् । न चाविरोधसाधनप्रकरणत्वात् पूर्वसिद्धं सर्वगतत्वमनेनोक्तग्रन्थेन कृत्वा सेत्वादिवाक्यैः सर्वमविरुद्धमित्यर्थमिति
२० वाच्यम् । अग्रिमपदवैयर्थ्यापत्तेरिति चेत् । अत्रैवं ज्ञेयम् । नोक्तकर्तृत्वेन व्यापकत्वमेकान्ततो ब्रह्मणि रोद्धुं शक्नोति । योगसिद्धदूरश्रवणादिवत्परिच्छिन्नेनाप्यनेकदेशगतकार्यकरणसामर्थ्यविशेषस्य वक्तुं शक्यत्वात् । अन्यथा पूर्वसिद्धव्यापकत्वविरोधेन सेत्वादिव्यपदेशैः परिच्छिन्नत्वेन ब्रह्मणोन्यस्य परत्वं न शङ्केत । विरोधपरिहाराय तु सामान्यात्त्वविरोध
२५ इति वदेत् । तस्मादेवं सूत्रार्थो ज्ञेयः । अनेन ब्रह्मणोन्यस्य परत्व-

---

2—ख reads तथेत्यत्रापि for तथेत्यपि ।

निरासेनायामशब्दादिभ्यो व्यापकत्ववाचकश्रुतिवाक्यादिभ्यः साक्षात्सर्वगतत्वप्रतिपादकेभ्य एव सर्वगतत्वं सिध्यति । न तु गौतमीयानामिव कर्तृत्वाद्यनुपपत्त्येत्यर्थः । ते च शब्दाः—आकाशवत्सर्वगतश्च नित्यः । ज्यायान्दिवो ज्यायानाकाशात् ( छां. ३।१४।३ ) वृक्ष इव
५ स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वम् ( श्वे. ३।९ ) इत्यादयः । आदिपदात् सर्वतः पाणिपादान्तं सर्वतोक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ( भ. गी. १३।१३ ) इत्यादिस्मृतयः संगृह्यन्ते । अनेन ब्रह्मणि श्रुतिरेव मुख्यं प्रमाणम् । अनुमानं तु विलम्बोपस्थितिकत्वेन साध्यसिद्धिपराहतमपीच्छाविशेषेण जननीयं
१० चेदभ्युच्चयमात्रं पर्यवसास्यतीति भावः ॥ ३।२।३७।१० ॥

---

## ११ फलमत इत्यधिकरणम् ।

### फलमत उपपत्तेः ॥ ३।२।३८ ॥

एवं सर्वोत्तमत्वनिरूपणेनोत्तमाधिकारिणां भजनीयत्वप्रयोजकं रूपमुक्त्वा तदितराधिकारिणां तदाह । ते हि फलप्रेप्सव एव भजिष्यन्ति ।
१५ तच्च फलदातृत्व एव संभवतीति तदाह । अत ईश्वरादेव फलं भवति यत्किंचिदैहिकं पारलौकिकं वा । कुतः । उपपत्तेः । सर्वस्य वशी सर्वस्येशानः ( बृ. ४।४।२२ ) इति श्रुतिर्वस्तुमात्रेशित्वमसंकुचितमाह । न ह्यन्यस्य वस्त्वन्यो दातुं समर्थोतो भगवानेव तथेत्यर्थः । केचित्त्वत्रैव कर्मणस्तत्कार्यापूर्वस्य च फलदातृत्वमाशङ्क्य तत्रानुपपत्ति-
२० मत्रोपपत्तित्वेन व्याकुर्वन्ति । तत्त्वग्रे जैमिनिमतोपन्यासस्वमतोपन्यासाभ्यां व्यास एव व्यक्तीकरिष्यतीत्यधुनैवाप्राप्तनिराकरणमग्रिमसूत्रद्वयवैयर्थ्यं स्यादिति चिन्त्यम् ॥ ३।२।३८ ॥

### श्रुतत्वाच्च ॥ ३।२।३९ ॥

---

2–C reads एवं for एव ।

पूर्वसूत्रेण श्रुतमीशितृत्वं फलदान उपपत्तित्वेन निरूपितम् । इह तु साक्षाच्छ्रुतिमेव फलदातृत्ववाचिकां प्रमाणयति। सा च—स वा एष महानज आत्मान्नादो वसुदानः ( बृ. ४।४।२४ ) इत्यादिरूपा। चकारात्—सुखं दुःखं भवो भावः ( भ. गी. १०। ४ ) इत्युपक्रम्य ५ भवन्ति भावा भूतानां मत्त एव पृथग्विधाः ( भ. गी. १०।५ ) इत्यादिरूपा स्मृतिः संगृह्यते ॥ ३।२।३९ ॥

## धर्मं जैमिनिरत एव ॥ ३।२।४० ॥

अत्र कर्मवादी प्रत्यवतिष्ठते । ननु कर्मण एव फलमिति पक्षेप्युपपत्तिश्रवणे तुल्ये । तथाहीश्वरवादिनापि कर्मनिरपेक्षेण तेन फलमिति १० न वक्तुं शक्यम् । विधिवैयर्थ्यप्रवृत्त्यनुपपत्तिप्रसंगाभ्याम् । तत्सापेक्षत्वे तदेवास्तु कृतं तत्सापेक्षेण तेन । न चाचेतनं चेतनाधिष्ठितमेव कार्यक्षममिति केवलेन तेन न फलं संभवतीति वाच्यम् । कर्मस्वरूपं स्वर्गादिकं च न लोकसिद्धम् । किंतु श्रुतिसिद्धम् । तत्र च स्वर्गादिफलसाधकत्वेनैवोत्पत्तिवाक्येष्वर्थवादेषु च—अग्निष्टोमेन स्वर्गकामो यजेत ( आ. १५ सू. १०।२।१ ) अग्निहोत्रं जुहोति प्रजाकामः । इत्यादि । दर्शपौर्णमासाभ्यां स्वर्गकामो यजेत । परमेष्ठिनो वा एष यज्ञोग्र आसीत् तेन स परमां काष्ठामगच्छत् ( तै. सं. १।६।९ ) इत्यादिषु कर्म श्रूयते । स च तत्साध्यत्वेनैव। एवं सति लोकेन्यथा दर्शनेपि धर्मिग्राहकप्रमाणेन तथैव सिद्धत्वान्नात्र काचन शङ्का। ईश्वरवादिनो २० नित्यज्ञानादिमत्त्व इव । आमुष्मिकफलत्वेन तत्प्रतिबन्धकापगमे भवतीत्यावयोस्तुल्यम् । तस्याशुतरविनाशित्वेपि श्रुतिसिद्धकारणतानिर्वाहाय तद्व्यापारोपूर्वं कल्प्यते । अविषमादीश्वराद् विषमफलोत्पत्त्यनुपपत्तिर्वैषम्यनैर्घृण्ये च स्याताम् । अतः कर्मण एव फलमिति जैमिनिर्मनुते॥ ३।२।४० ॥

2–A om. तु after इह ।

8–ख om. अत्र before कर्मवादी ।

12–C reads फलासंभव इति for तेन न फलं संभवतीति ।

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ३।२।४१ ॥

तुशब्दः पूर्वपक्षव्युदासार्थः । बादरायणस्त्वाचार्य इतः पूर्वोक्तमीश्वरमेव फलदत्वेन मनुते । कुतः । हेतुव्यपदेशात् । हेतुत्वेन श्रुतौ व्यपदेशादित्यर्थः । एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य
५ उन्निनीषते । एष उ एवासाधु कर्म कारयति तं यमधो निनीषते (कौ. ३।९) इति श्रुतौ न केवलं कर्मकारयितृत्वमुच्यतेपि तु फलदित्सया तथात्वमतः फलदत्वमीश्वरस्यैव व्यपदिष्टं भवतीति नानुपपत्तिः काचित् । नन्वीश्वरस्य स्वतः फलदाने समर्थस्य फलदित्सायां सत्यां कर्मकारणे को हेतुः । कार्यवैचित्र्यं च कथमित्यादि चोद्यं—कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्या-
१० दिभ्यः (ब्र सू. २।३।४२) इत्यत्र निरस्तम् । विद्वन्मण्डने श्रीविठ्ठलेन च । अतः सकामैरपि स एव भजनीयो नान्य इति सिद्धम् ॥३।२।४१॥११॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये तृतीयाध्यायस्य द्वितीयः पादः ॥ ३।२ ॥

---

# तृतीयाध्याये तृतीयः पादः ।

१५

## १ सर्ववेदान्तप्रत्ययाधिकरणम् ।

## सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ ३।३।१ ॥

पूर्वपादे जडजीवधर्मनिराकरणेन शुद्धस्यैव सच्चिदानन्दविग्रहरूपत्वं ब्रह्मणो निरूपितम् । इह तु ब्रह्मगता एव धर्मा विचार्यन्ते । ते चेदेकस्मिन् वाक्य एव सर्वे पठिता भवेयुस्तदा न विचारणीया भवेयुर्विरोधाभावात् ।
२० पठिताश्च तत्तदुपासनप्रकरणेषु क्वचित्त एव क्वचिद्भिन्नाः । यथा वाजसने-

---

8–C reads फलदानसमर्थस्य for फलदाने समर्थस्य ।

9–B om. कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्य इत्यत्र after चोद्यं ।

17–A and C read शुद्ध for शुद्धस्यैव ।

18–C reads ब्रह्मण एव for ब्रह्मगता एव ।

थिनः पञ्चाग्निविद्यां प्रस्तुत्य षष्ठमन्यमग्निं पठन्ति । तस्याग्निरेवाग्निरिति । छन्दोगास्तु पञ्चसंख्ययैवोपसंहरन्ति । अथ य एतानेवं पञ्चाग्नीन् वेद ( छां. ५।१०।१० ) इति । तथा प्राणसंवादे मुख्यप्राणादन्यांश्चतुरः प्राणान् वाक्चक्षुःश्रोत्रमनांसि पठन्ति । वाजसनेयिनस्तु तमिमं पञ्चमं ५ पठन्ति । अपरं च । अथर्वोपनिषत्सु क्वचिद् गोकुलवृन्दाकाननसंचरद्गोपरूपमनल्पकल्पद्रुमप्रसूनविरचितविचित्रस्थलीककालिन्दीसलिलकल्लोलसंगिमृदुतरपवनचलदलकविराजमानगण्डमण्डलद्युतिमण्डितकुण्डलप्रभानुभावितवामांसमिलन्मूर्धन्यमहामाणिकमुरलिकामुखावलीमिलदतितरलकरकमलयुगलाङ्गुलीवशंवदविविधस्वरमूर्च्छनामोहितव्रजवरानितम्बिनीकदम्ब- १० कटाक्षकुवलयार्चितं क्वचित्कोदण्डमण्डितभुजदण्डखण्डितप्रचण्डदशमुण्डमतिविचित्रचरित्राभिरामं रामस्वरूपं क्वचिदतिकरालवदनवित्रासितकमडाकमलासनवृषभासनादिकं नृकेसरिरूपं क्वचिदुरुक्रमादिकं च निरूप्यते । तथा च द्रव्यदेवताभेदाद् यागभेदवद्धर्माणामावापोद्वापाभ्यां दृष्टादृष्टफलभेदाच्च वेद्यभेदे प्राप्ते ब्रह्मानेकत्वापत्तौ श्रुतिविरोधाद् विनिगमकाभावात्सर्वेषा- १५ मुपासनाविषयाणामब्रह्मत्वमापतितम् । ननूपासनाविषयाणामौपाधिकत्वात् तेषां चाविद्याकल्पितत्वात् तद्विशिष्टानां तथात्वं युक्तमेव । न चैवं तन्निरूपकाणां वेदान्तानामब्रह्मपरत्वप्रसंगः । शुद्धस्य ब्रह्मणो दुर्ज्ञेयत्वेनोपाधिविशिष्टोपासनया चित्तशुद्धौ सत्यां स्वत एव तज्ज्ञानं भविष्यतीत्येतत्तात्पर्यकत्वादिति चेत् । मैवम् । समन्वयविरोधापत्तेः । तासां ब्रह्म- २० विद्यात्वहानेश्च । श्रुतेः प्रतारकत्वापत्तेश्च । अपरं च—योन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेणात्मापहारिणा इत्यन्यथाज्ञानं निन्दन्ती श्रुतिः कथं फलसाधकत्वेन तदुपासनां वदेत् । स्पष्टार्थानां श्रुतिवाक्यानां निर्णयमकृत्वा संदिग्धार्थानां ज्योतिराकाशादिशब्दानां तद्वाचकत्वं न निर्णीयाद् व्यासः । एवं च २५ सत्युक्तरीत्या यागवत्तेषां परस्परं भेदश्चावश्यक इत्युभयतःपाशा रज्जुरिति प्राप्तेभिधीयते । सर्ववेदान्तप्रत्ययम् । अनेकरूपनिरूपकैः सर्व-

9—C reads व्रजरत्न for व्रजवर and ख reads व्रजनर for the same.

वेदान्तैः प्रत्ययो ज्ञानं यस्य तत्तथा । ब्रह्मणोनन्तरूपत्वे यानि यानि रूपाणि विविधैर्जीवैरुपासितुं शक्यानि तानि तानि रूपाणि तैस्तैर्वेदान्तैर्निरूप्यन्त इति तावद्रूपात्मकमेकमेव ब्रह्मेत्यर्थः । तत्र हेतुश्चोदनाद्यविशेषादिति । चोद्यते कर्तव्यत्वेन बोध्यतेनेनेति चोदना विधिवाक्य-
५ मिति यावत् । तस्याविशेषादित्यर्थः । यथैकस्मिन्नग्निष्टोमे शाखाभेदेपि चोदना तथैव भवति—अग्निष्टोमेन यजेत् ( आ. सू. १०।२।१ ) इति । तथेहापि सर्वेषु वेदान्तेषु ब्रह्मत्वेनैवोपासना विधीयते इति तथा । आदिपदात्साक्षात्परंपराभेदेन मोक्षफलकत्वकथनमप्युपासनानामविशिष्टमिति प्रयोजनसंयोगः संगृह्यते ॥ ३।३।१ ॥

१० **भेदान्नेति चेदेकस्यामपि ॥ ३।३।२ ॥**

ननु द्रव्यदेवताभेदाद् यागभेदवदुपास्यानां धर्मभेदेन मिथोभेदादुक्तहेत्वसिद्धिं भेदान्नेति चेदित्यनेनाशङ्क्य तत्परिहारमाह सूत्रकार एकस्यामपीति सूत्रावयवेन । यथैकस्यामपि गृहीतषोडशिकायामतिरात्रव्यक्तावगृहीतषोडशिकायाः सकाशाद् गुणाधिक्येपि नातिरात्रभिन्नयागत्वम् ।
१५ अतिरात्रलक्षणकर्मैवाधिकृत्य तद्ग्रहणाग्रहणयोर्विधानादेवमिहापि ब्रह्मैवाधिकृत्य तत्तद्धर्मवैशिष्ट्यावैशिष्ट्ययोरुक्तत्वान्न ब्रह्मोपासनभिन्नत्वमुपासनासु । तथा च ब्रह्मधर्मत्वेनाभेदस्य विवक्षितत्वात्त्वदुक्तहेत्वसिद्धिः । एवं सति यत्रैकस्मिन्नुपास्ये रूपेन्यस्माद्रूपादधिका गुणा उच्यन्ते । तत्र तेषामुपसंहार उचित इति भावः । अत्रायं विशेषो ज्ञेयः । उपासनाविषये-
२० ष्वखिलेष्वविशिष्टं ब्रह्मत्वं ज्ञात्वैतेष्वेकतरं रूपं य उपास्ते तस्य तत्र सर्वे गुणा उपसंहर्तुमुचिताः । यस्त्वनन्तेषु विभूतिरूपेषु ॐ इत्येतदक्षरं ब्रह्म इति ज्ञात्वोपास्ते तस्य शाखान्तरीया अप्येतदक्षरोपासनप्रकरणोक्ता एवोपसंहर्तव्या नान्ये । तद्रूपमधिकृत्यैव तेषां गुणानां कथ-

8–ख reads फलककथन for फलकत्वकथन ।
10–C reads चेन्नैकस्यामपि for चेदेकस्यामपि ।
20–ख reads अविशिष्टब्रह्मत्वं for अविशिष्टं ब्रह्मत्वं ।

नात् । अन्यथातिप्रसंगात् । इयं तूपासनामार्गीया व्यवस्थोक्ता । भक्तिमार्गीया त्वेतद्विलक्षणा साग्रे वाच्येति ॥ ३।३।२ ॥

नन्वग्निष्टोममेवोद्दिश्य यावन्तो धर्मास्तैत्तिरीयके पठ्यन्ते तावन्तो वाजसनेयके । तथा च त्वदुक्तरीत्या वाजसनेयिनां तद्धर्मोपसंहा- ५ रोपि न्याय्यो भवेन्न त्वेवं सः । शिष्टाचारादिविरोधात् । तथा पञ्चाग्निविद्यामधिकृत्योक्तोपि षष्ठोग्निर्न छन्दोगैः शक्यत उपसंहर्तुम् । तथैवाथर्वणिकैर्नैकस्मिन् रूपे रूपान्तरधर्मा इति प्राप्त उत्तरं पठति ।

## स्वाध्यायस्य तथात्वेन समाचारेधिकाराच्च सववच्च तन्नियमः ॥ ३।३।३ ॥

१० स्वाध्यायो वेदः स एकमेव कर्म शाखाभेदेन भिन्नभिन्नप्रकारकं बोधयतीति तत्प्रयुक्तः सम्यग्भूतेग्निष्टोमादिलक्षण आचारे तत्तदङ्गाचारनियमोन्यूनानाधिककरणलक्षण इत्यर्थः । तावद्भिरेवाङ्गैर्यागसंपत्तेरधिककरणस्याप्रयोजकत्वात्तावतामेवाङ्गानां करणम् । ननूक्तं तद्धर्माणामप्युपसंहारस्त्वदुक्तरीत्या संभवतीत्यत आह । अधिकारादिति । सर्वेषां शाखिनां स्वस्व- १५ शाखोक्तकर्मण्येवाधिकारो न परशाखोक्तेप्यतोपि तथा नियमः । चकारात्स्वशाखोक्तात् कर्मणोतिरिक्ततत्करणे न्यूनकरणे च यदस्य कर्मण इत्यादि प्रायश्चित्तश्रवणमपि तन्नियमे हेतुः समुच्चीयते । अत एव क्वचित्परशाखोक्तमपि व्यवस्थितविकल्पविषयत्वेन कल्पसूत्र उच्यते । विकल्पे तूभयस्याशास्त्रार्थत्वमुपसंहारे तूभयस्यापि शास्त्रार्थत्वमतोपि नात्रोपसंहारशङ्का । २० अत्र दृष्टान्तमाह । सववदिति । यथा सवा होमाः सप्तसूर्यादयः शतौदनपर्यन्ता वेदान्तरोदितत्रेताग्न्यनभिसंबन्धादथर्वणोदितैकाग्निसंबन्धाच्चाथर्वणिकानामेव कार्यत्वेन नियम्यन्ते । तथा तत्तच्छाखायास्तथात्वात्तत्तदुक्त एव कर्मणि तत्तच्छाखिनामधिकाराच्च स्वस्वशाखोक्तादन्यूनातिरिक्तकर्मकरणनियम इत्यर्थः । प्रकृतेपि यद्रूपोपासनाप्रकरणे यावन्तो धर्मा उक्ता- २५ स्तस्मिन् रूपे तावद्धर्मवत्त्वेनैवोपासना कार्या तद्बोधकप्रमाणानुरोधात् । न

1–ख reads उपासन for उपासना ।

3–A reads न तावन्तो for तावन्तो ।

तु रूपान्तरोपासनप्रकरणोक्ता साधारणधर्मत्वेनापि । तथा सति मत्स्यो-
पासकस्य चापशरादिकमपि भावनीयं स्यात् । पुरुषरूपोपासकस्य च
लक्षयोजनायामशृङ्गादिकम् । नन्वाथर्वणोपनिषत्सु श्रीरामोपासनायां—यो
वै ये मत्स्यकूर्माद्यवतारा भूर्भुवःसुवस्तस्मै वै नमो नमः (रा. ता. ५)
५ इति वाक्येन तदितरावताररूपत्वमुच्यते । तेन तद्धर्मत्वमप्याक्षिप्यते ।
सत्यमाक्षिप्यते तद्धर्मवत्त्वम् । तत्रायमभिसंधिः । परमकाष्ठापन्नं
ब्रह्मस्वरूपमिदमिति ज्ञात्वा ह्युपासना कार्या । तेनैतस्यैवान्येवतारा-
स्तत्तद्रूपेण तानि तानि कर्माण्ययमेव कृतवानिति ज्ञेयं परम् ।
न तु तस्मिन्नेव रूपेन्यावतारधर्मवत्त्वमपीति । तथा च तस्मिंस्तस्मिन्नव-
१० तारे तत्तद्धर्मवानिति श्रुत्या बोध्यते । न तु सर्वत्रापि । तत्र बाधकमुक्त-
मेव । प्राणाद्युपासनास्वेतावान् विशेषो यथा कर्मण्यतिरेके प्रायश्चित्तश्र-
वणं बाधकम् । श्रीरामस्वरूपाद्युपासनासु च तेनावतारेणाकृतकर्मणस्तत्र
भावनेपराधो बाधको—योन्यथा सन्तमात्मानम् इत्यादिवाक्यं च ।
न तथा प्राणाद्युपासनास्वधिकगुणस्येतरत्रोपसंहारे किंचिद् बाधकं दृश्यत
१५ इति स कर्तुं शक्यत इति ।

ननु पुरुषादिरूपस्य विग्रहस्यैव शुद्धब्रह्मत्वादयमेवावतारान्तरे-
ष्वपि लीलाकर्तेति ज्ञानमनुपपन्नमिति चेत् मैवम् । धर्मिग्राहकमानेनैक-
स्यैव शुद्धस्यैवानन्तरूपत्वेन सिद्धत्वात् । वस्तुन एव तथात्वान्न काचि-
च्छङ्का । यथैकस्यैवान्योन्याभावस्यानन्तभावप्रतियोगिकतद्रूपत्वं तावत्प्रति-
२० योगिकात्यन्ताभावरूपत्वं चाभावप्रतियोगिकान्योन्याभावात्यन्ताभावरूपत्वं
चाभावाभावरूपत्वेप्यभावरूपत्वमेव चाङ्गीक्रियते । तथेहाप्यस्तु । अभा-
वत्त्वस्याप्रयोजकत्वात् । धर्मिग्राहकमानस्यैव तथात्वात् । तच्च तैत्तिरीयो-
पनिषत्सु । अतः परं नान्यदणीयसऽ हि । परात्परं यन्महतो महान्तम् ।
यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् (तै. म. ना. १।५)

---

10–A and C read सर्वत्रेति for सर्वत्रापि ।
15–B reads सत्कर्तुं for स कर्तुं ।
18–C reads वस्तुत एव for वस्तुन एव ।

इत्यादि श्रुतिरूपं प्रसिद्धमेव । अपरं च । सर्वासामुपासनानां हि ब्रह्म-
विज्ञानसाधनत्वेन श्रुतौ निरूपणं क्रियते । यत्प्रकारिकोपासना विज्ञान-
हेतुः स प्रकारश्च निरूप्यते । एवं सत्येकस्यां शाखायां कतिपयगुण-
निरूपणं तदितरस्यां शाखायां तदतिरिक्तानामपि गुणानामित्यत्र
५ को हेतुरिति पृच्छामः । उपसंहारेण प्राप्तिमनिरूपणे हेतुं चेद्ब्रवीषि तत्र
वदामः । एवं सति न्यूनगुणानिरूपिका श्रुतिः स्वोक्तानपि गुणान्न वदेत् ।
तथाहि । उपास्नानां ब्रह्मविज्ञानफलकत्वस्य निर्णीतत्वात् तस्य चैकजा-
तीयत्वाद् घटवत् क्लृप्ताशेषसाधनसाध्यत्वादशेषतन्निरूपिकैव श्रुतिर्निरूपये-
त् । अन्या तूपासनाया नामोक्त्वोपासीतेत्येतावदेव वदेत् । गुणानाक्षेपलभ्य-
१० त्वान्न वदेत् । उपसंहार्यानपि वा वदेत् । निरूपयति च गुणान्नोपसंहार्यान् ।
न च स्वस्वशाखामात्राध्येतृणामुपासनासिद्ध्यर्थं सर्वशाखासूपासनप्रकारो-
क्तिरिति वाच्यम् । परशाखाज्ञानेन तदुक्तगुणोपसंहारस्याप्यसंभवेनोपास-
नाया एवासंभवापातात् । तस्मात्स्वशाखोक्तप्रकारिकोपासनायामेव सर्वे-
षामधिकारात्तयैव ब्रह्मविज्ञानं भवति । तैत्तिरीयाणां वाजसनेयिप्रभृतीनां
१५ चाग्निष्टोमसंपत्त्या । स्वर्ग इव प्रकृते ब्रह्मैक्यात्तत्तद्विज्ञानं ब्रह्मविज्ञानमेव ।
न हिं रूपरसगन्धादिमत्यां भुवि पुरुषभेदेनैकस्यैव चैकैकप्रकारकं यद्भू-
ज्ञानं न तद्भूज्ञानम् । एतेनान्तधर्मवत्त्वं ब्रह्मणि ज्ञापितम् । तदुक्तम्
परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ( श्वे. ६।८ )
इति । अत्र स्वाभाविकीति विशेषणादविद्याकल्पितत्वं शक्तीनां निरस्तम् ।
२० केचित्त्वाथर्वणिकानां विद्यां प्रति शिरोव्रतापेक्षणादन्येषां तदनपेक्षणाद्
विद्याभेद इति प्राप्त उच्यते । स्वाध्यायस्यैष धर्मो न विद्यायाः । कथ-
मिदमवगम्यते यतस्तथात्वेन स्वाध्यायधर्मत्वेन समाचारे वेदव्रतोपदेशनपरे
ग्रन्थ आथर्वणिका इदमपि वेदव्रतत्वेन समामनन्ति—नैतदचीर्णव्रतोधीते
( मुं. ३।२।११ ) इति चाधिकृतविषयादेतच्छब्दाच्च स्वोपानिषदध्यय-

---

7–ख reads फलत्वस्य for फलकत्वस्य ।

16–A and C read वैकैक for चैकैक ।

नधर्म एवैष इति निर्धार्यते । तस्मादनवद्यं विद्यैकत्वमिति सूत्रार्थं वदन्ति । स चिन्त्यते । न ह्यस्य विद्याधर्मत्वं विद्याभेदकम् । उक्तन्यायेनान्यत्रापि तदुपसंहारस्य वक्तुं शक्यत्वात् । न चानुपसंहारार्थमेवातद्धर्मत्वं बोध्यत इति वाच्यम् । उपक्रमोपसंहाराभ्यां विद्यैकत्वनिर्णयस्यैव दृश्यमा-
५ नत्वादुपेक्ष्य इव भाति । ननु तदुक्तिर्यथा तथास्तु । अतद्धर्मत्वबोधनस्या-नुपसंहारार्थकत्वे कानुपपत्तिरिति चेत् । उच्यते । सूत्रस्य तदुक्तार्थत्वे हि तत्तात्पर्यकल्पना । स एव च न साधीयान् । तथाहि-स्वाध्यायोध्येतव्यः (तै. आ. २।१५) इत्यादिषु स्वाध्यायशब्दस्य वेदवाचकत्वं प्रसिद्धम् । समाचा-रशब्दस्य विहितक्रियावाचकत्वं च तत्रोभयोरपि मुख्योर्थो बाध्यते ।
१० तस्मिन् संभवति तद्बाधस्त्वयुक्तः । किंचैवं नन्वग्निष्टोममेवोद्दिश्येत्यादि-नोक्तशङ्काया अनिवृत्तिरिति । नन्वाथर्वणोपनिषत्सु पठ्यते—सहोवाचाब्ज-योनिर्योवतारणां मध्ये श्रेष्ठोवतारको भविता येन लोकास्तुष्टा देवास्तुष्टा भवन्ति । यं स्मृत्वा मुक्ता अस्मात् संसाराद् भवन्ति कथं चास्यावता-रस्य ब्रह्मता भवति । स होवाच तं हि नारायणो देवः (गो. उ. ता. १ )
१५ इत्युपक्रम्य मथुरास्वरूपं निगद्य निरूप्यते-यत्रासौ संस्थितः कृष्णः स्त्रीभिः शक्त्या समाहितः ( गो. उ. ता. २ ) इति तेनास्यावतारस्याशेषा-वताराणां मध्ये श्रैष्ठ्यं निरूप्यते । श्रीभागवतेपि च—एते चांशकलाः पुंसः कृष्णस्तु भगवान् स्वयम् ( भा. १।३।२८ ) इति गीयते । पूर्वोक्तरीत्या तु सर्वतुल्यता प्रतीयत इति नैकतरनिर्द्धारः संभवति । किंच ब्रह्मणो
२० निरवयवत्वेनैकस्यांशित्वमन्येषां तदंशत्वमित्यपि वक्तुमशक्यमिति प्राप्तेभिधीयते । सत्त्वं यस्य प्रिया मूर्तिः । विशुद्धसत्त्वं तव धाम शान्तम् । इत्यादिवाक्यैरप्राकृतो भगवत्स्थानभूतः सत्त्वनामा भगवद्धर्म-रूप एव कश्चनास्ति । यादृशेन रूपेण भगवान् कार्यं कर्तु-मिच्छति तादृग्रूपं तं प्रकटीकृत्य तस्मिन् स्वयमाविर्भूयायः पिण्डे वन्हि-
२५ वत्तत्कार्याणि करोति यस्मिन् यस्मिन्नवतारे स सोंश इत्युच्यते । तत्र हि विग्रहस्तत्राविर्भूतं ब्रह्मस्वरूपं च प्रतीयते । विग्रहस्य सत्त्वात्मकत्वेन धर्मरूपत्वात्तत्राविर्भूतस्यैव ब्रह्मत्वात्समुदितस्यावतारत्वेन गणनात् तत्रैक-

स्यैवांशस्य तद्रूपत्वं यत्तदेवांशत्वम् । यत्राधिष्ठानमनपेक्ष्य स्वयमेव शुद्धं साकारं ब्रह्माविर्भवति भक्तार्थं स स्वयं पूर्णो भगवान् उच्यते। एतदेव च श्रैष्ठ्यम् । अत एव सर्वतःपाणिपादान्तत्वं स्वस्मिन् स्फुटं ज्ञापयितुं तोकादिभावेनाविर्बभूव तेन याद्दग्याद्दग् लीलाविशिष्टं यद्यद्बाल्यपौगण्डा-
५ वस्थाविशिष्टं तत्तद्रूपं नित्यमेवेति वयं जानीमः । न चैवं सच्चिदानन्द-विग्रहोक्तिः सर्वत्र विरुद्धा भवेदिति वाच्यम्। सत्त्वस्यापि भगवद्धर्मत्वेन सच्चिदानन्दरूपत्वादविरोधात् । मन्त्राद्यधिष्ठातृरूपाणि तु विभूतिरूपाणि। एतच्च यथा तथा भक्तिहंसे प्रपञ्चितम्। तत्त्वं च—प्रकाशाश्रयवद्वा तेजस्त्वात् (ब्र. सू. ३।२।२८) इति न्यायेन भगवद्धर्माणामपि सच्चिदानन्दरूप-
१० त्वाद्भिन्नाधिकारिणामप्युपासकानां फलप्रेप्सूनां तत्तत्फलदानार्थमैश्वर्यादि-रूपेण तत्र तत्र स्थितत्वमेव । नन्वेकस्यैव शुद्धस्यैवानन्तरूपत्वं भवतैवो-क्तमतो मत्स्यादिरूपेष्वपि नाधिष्ठानत्वेन सत्त्वं वक्तुं शक्यम् । किंचैवं निराकारस्वभावत्वं ब्रह्मणः सिध्यतीति सत्त्वाव्यवहितप्राकट्योक्तिरप्यनुप-पन्नेति चेत् । मैवम् । सत्त्वाधिष्ठानत्वस्य प्रमाणसिद्धत्वेनानपनोद्यत्वात् ।
१५ तच्चोक्तं—यदेकमव्यक्तमनन्तरूपम् (म. ना. १।५) इति । प्राकट्यं हि भक्तिनिमित्तकम् । सा तु बहुविधेति तदनुरूपं प्राकट्यमपि तथा। सर्गा-दिकार्येष्वाधिकृतानां भक्तानामितरासक्तिरप्यस्तीत्युपाध्यन्तरितस्नेहवत्त्वा-च्चानन्तरूपत्वेन मत्स्यादिरूपोपि तदर्थं तद्व्यवहित एव प्रकटीभवति। ये तु भगवत्स्वरूपमात्रासक्तास्तदर्थं स्वयमेवातद्व्यवधानेन प्रादुर्भवति । एतेनैव
२० निराकारत्वाशङ्कापि निरस्ता। एतेन सोपधिस्नेहवदर्थमेव मत्स्यादिरूप-प्राकट्यस्य प्रमाणसिद्धत्वान्निरुपाधितत्तदर्थमेव श्रीव्रजनाथप्राकट्यस्यापि तथात्वात् सोपाधिस्नेहवत्स्वपि पुरुषार्थदानस्यानुषंगिकत्वात् पुरुषविध इति श्रुतेश्चैतदेव रूपम् । रसो वै सः (तै. २।७) इत्यादिश्रुतिप्रतिपाद्यं निरुपधिस्नेहवतां विषयः। इदमेव च श्रैष्ठ्यम् । मत्स्यादिरूपं तु सोपधित-

---

15–A and C om. अनन्तरूपम् after अव्यक्तम् ।

16–ख reads न तथा for तथा ।

18–C and D तद्व्यवधानेन for तद्व्यवहित एव ।

20–C reads निराकारत्वशङ्का for निराकारत्वाशङ्का ।

द्वतामेव तथा । तादृक्तद्वतामर्थ एव प्राकट्यादित्यवसीयते । एवं सति गुण-भेदस्याप्रयोजकत्वात् सर्ववेदान्तप्रत्ययत्वं ब्रह्मणो निष्प्रत्यूहम् ॥ ३।३।३ ॥

## दर्शयति च ॥ ३।३।४ ॥

वेद्यैकत्वेन विद्यानामेकत्वं श्रुतिर्दर्शयति । सर्वे वेदा यत्पदमामनन्ति ५ ( क. २।१५ ) इत्यादिना । उपासनाप्रकारभेदेनोपास्यभेददर्शने दोषं च दर्शयति । यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते अथ तस्य भयं भवति ( तै. २।७।१ ) इति । उदित्यव्ययमप्यर्थकम् । तथा चारमल्पमप्यन्तरं कुरुत इत्यर्थः ॥ ३।३।४ ॥

## उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥ ३।३।५ ॥

१० ननु पूर्वसूत्रोक्तरीत्या गुणोपसंहारो न क्वचिदपि प्राप्तावसर इति सिद्धम् । दृश्यते चोपसंहारः । श्रीरामोपनिषत्सु–यो वै ये मत्स्यकूर्माद्य-वताराः ( रामोत्तर. ५ ) इत्यादिनोक्तावताररूपत्वस्य श्रीरामे-नमस्ते रघुवर्याय रावणान्तकराय च ( भा. १०।४०।२० ) इत्यादिषु ते इति युष्मच्छब्दविषये श्रीव्रजनाथे रघुवर्यत्वादेरित्याशङ्क्य तत्प्रयोजकं रूपमाह १५ उपसंहार इत्यादिना । उक्तस्थलादिषु य उपसंहारः स त्वर्थस्य पदार्थस्य भगवल्लक्षणस्योभयत्राप्यभेदादित्यर्थः । नन्वेवं सति मत्स्ये शरचापादिकं पुरुषे च शृङ्गादिकं भावनीयं स्यादिति चेत्तत्राह । विधिशेषवदिति । यथा विधिविशेषाणामग्निहोत्रत्वादिलक्षणे धर्मे समानेपि सति स्वशाखोक्तप्र-कारस्यैव करणं नान्यशाखोक्तधर्मोपसंहार एवमिहापि तत्तदवतारोपासकस्य २० तत्तदसाधारणधर्मवत्त्वेनैवोपासनं नान्यावतारधर्मवत्त्वेनापीत्यर्थः । यद्वा मत्वर्थीयो वत्प्रत्ययोऽत्र । तथा च विधिशेषोऽर्थवादस्तद्वत्समानं च भवति यत्तत्र चोपसंहार इत्यर्थः । अत्रैवं ज्ञेयम् । एकस्यां श्रुतौ यस्य कर्मणो यत्फलमुच्यते तदितरस्यां तस्यां तस्यैव कर्मणस्तदितरत् फलमुच्यते । एवं सति द्वितीयश्रुत्युक्तफलकामनयापि तदेव कर्म कर्तव्यं भवतीति २५ तत्फलसाधकत्वस्योपसंहारः । यथा–यद्वैश्वदेवेन यजते प्रजा एव तद्यजमानः

15–A reads यतः for यः and स्व om. यः before उपसंहारः ।

सृजते ( तै. ब्रा. १।४।११ ) इत्येका श्रुतिरस्य यागस्य प्रजाफलकत्वमाह । यद्वैश्वदेवेन यजते अग्निमेव तत्संवत्सरमाप्नोति तस्माद्वैश्वदेवेन यजमानः संवत्सरीणा९ स्वस्तिमाशास्ते इत्याशासीत ( तै. ब्रा. १।४।११ ) इति द्वितीया श्रुतिराह । तत्रोक्तरीतिरिति । यत्तु विधिशेषाणामग्निहोत्रादिध-
५ र्माणां तदेवैकमग्निहोत्रादिकर्म सर्वत्रेत्यर्थभेदादुपसंहार इति । तन्न साधु । अग्निहोत्रादेस्तत्तच्छाखिनां स्वस्वशाखोक्तप्रकारस्यैव करणादतिरेके प्रायश्चित्तश्रवणान्नान्यशाखोक्तधर्मोपसंहारः शक्यवचनः । प्राणाद्युपासनास्वधिकगुणस्येतरत्रोपसंहारे न किंचिद्बाधकं दृश्यत इति तत्र स कर्तुं शक्यत इति चकारेण तदादयः संगृह्यन्ते । वस्तुतस्तु पूर्वसमुच्चयार्थश्चकारः ।
१० शाखान्तरोक्तधर्मोपसंहारप्रयोजनाभावस्य तथात्वेनेत्यत्र निरूपितत्वात् । उपसंहारबीजमनेन सूत्रेणोक्तम् ॥ ३।३।५ ॥

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ३।३।६ ॥

ननूपासनासूक्तन्यायेन गुणोपसंहारो ह्युपास्यानां ब्रह्मत्वेनैक्ये सति भवति । मिथो विरुद्धानां गुणानां शान्तत्वक्रूरत्वतपोभोगादीनामुपसंहारे
१५ क्रियमाणे स्वरूपाणामन्यथात्वमब्रह्मत्वं स्यादित्यर्थः । तत्र हेतुः । शब्दादिति । एकत्वैकरसत्वादिधर्मनिरूपकश्रुतेरित्यर्थः । समाधत्ते । नाविशेषादिति । एकरसत्वं यथा श्रुतिबलान्निर्णीयते तथा विरुद्धधर्मवत्त्वमपि तत एव तथेत्यर्थः । तेन वस्त्वेव तत्तादृङ् मन्तव्यमिति भावः ॥ ३।३।६ ॥

## न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ३।३।७ ॥

२० पूर्वसूत्रोक्ताशङ्कानिराकरणं वा विकल्पेन पूर्वोक्तात्प्रकारान्तरेण कर्तव्यमित्याह । न वेति । तमेवाह प्रकरणभेदादिति । अत्रायं भावः । श्रुतिप्रामाण्याद्यावत्तदुक्तधर्मवद् ब्रह्मेति मन्तव्यम् । एवं सति यादृशोधिकारिणो यादृग् वेद्यं रूपं तादृशस्य तस्य तादृक् तन्निरूपयति प्रकरणभेदेन । तथा च ज्ञानप्रकरणे ज्ञानाधिकारिणो यादृग् रूपं ज्ञेयं तादृक् तस्मै
२५ निरूपयति-अदृश्यमग्राह्यम्(मुं. १।१।६) इत्यादिरूपा श्रुतिः । भक्तिप्रकरणे तु भक्तेर्बहुविधत्वाद् यादृग् यादृग्भक्तानां यादृग्यादृक्तदनुभवविषयस्तादृक्ताद्दक् तान्निरूपयाति । आथर्वणोपनिषदिति । अत्र दृष्टान्तमाह । परोवरी-

यस्त्वादिवदिति । अस्मिन्मे लोकेऽर्द्धुकꣳ स्यात् ( तै. सं. ६।२।३ ) इति कामवत आराग्रावान्तरदीक्षा पूर्वमुक्ता । तदग्रे—परोवरीयसीमवान्तरदीक्षामुपेयाद्यः कामयेतामुष्मिन्मे लोकेऽर्द्धुकꣳ स्यादिति चतुरोऽग्रेऽथ त्रीनथ द्वावथैकमेषा वै परोवरीयस्यवान्तरदीक्षा ( तै. सं. ६।२।३ ) इति पठितम् ।
५ अस्य दीक्षाप्रकरणे पठितत्वाद् दीक्षां विनोक्तरीत्या व्रते तु न परोवरीयस्त्वमेवं भक्तिप्रकरणीयानामथर्वणोपनिषदाद्युक्तरूपाणां न भक्तिरहितोपास्यत्वम् । ज्ञानसाधनत्वेन विष्णुस्मरणादावपि क्रियमाणे भक्तित्वं नेति । अथवा पूर्वसूत्रेण सर्वरूपेषु मिथः सर्वधर्माणामुपसंहारः प्राप्तः । स चैकान्तिकभक्तानुभवविरुद्ध इत्यत्र व्यवस्थितविकल्पमाह । न वेत्यादिना ।
१० सर्वेष्ववतारेषु भगवदवतारत्वेन साधारणी भक्तिर्यस्य स सर्वत्रोपसंहारं करोतु नाम । यस्त्वेकान्ती तस्य स्नेहोत्कर्षेणान्तःकरणमेकस्मिन्नेव रूपे पर्यवसितमिति रूपान्तरमन्तःकरणारूढं न भवत्येवेति नोपसंहारसंभावनापीति । तदेतदुच्यते । नवेत्यनेन । तत्र हेतुः । प्रकरणभेदादिति । श्रुत्यादिषु तत्तदधिकारिणमुद्दिश्य तत्तत्प्रकरणमुक्तम् । तेनात्र प्रकरणभेदे-
१५ नाधिकार उच्यते । एवं सत्युपासकादिभ्य उक्तरीत्योत्कृष्टाधिकारादित्यर्थः संपद्यते । परोवरीयस्त्वादिवदिति । परस्मात्परश्च वराच्च वरीयानिति परोवरीयानुद्गीथः । तथा चाक्ष्यादित्यादिगतहिरण्यश्मश्रुत्वादिगुणविशिष्टोपासनाया अप्युद्गीथोपासनत्वेन साम्येपि सर्वोत्कृष्टत्वेनैवोद्गीथो भासते इति न हिरण्यश्मश्रुत्वादिगुणोपसंहारः परोवरीयस्त्वादिगुणविशिष्टोद्गीथो-
२० पासनायामेवं प्रकृतेपीति ॥ ३।३।७ ॥

## संज्ञातश्चेत्तदुक्तमस्ति तु तदपि ॥ ३।३।८ ॥

एकान्त्यनेकान्तिनोरपि श्रीरामोपासकत्वादिसंज्ञा त्वविशिष्टेत्येकान्तिनोऽप्युपसंहारो युक्त इत्याशङ्क्योत्तरं तु न-वा प्रकरणभेदात् ( ब्र. सू. ३।३।७ ) इत्यनेनैवोक्तम् । संज्ञा तु लौकिकी । अधिकारस्त्वान्तरः । स
२५ एव बलीयानिति । संज्ञैकत्वस्य हेतोरन्वयव्यभिचारमाह । अस्ति तु तदपीति । प्रमितभेदेष्वप्युपासनेषु परोवरीयस्त्वादिषु संज्ञैकत्वमुद्गीथोपासनेऽप्यस्तीत्यर्थः ॥ ३।३।८ ॥

---

26–C reads प्रमिति for प्रमित and ख reads प्रमितेः for the same

## व्याप्तेश्च समञ्जसम् ॥ ३।३।९ ॥

अथेदं विचार्यते । उपास्येषु रूपेषु बाल्यपौगण्डादिकमप्युच्यते । तथा सति विग्रहे न्यूनाधिकभाव आपततीति तत्रोक्तं सच्चिदानन्दत्वमनुपपन्नं स्यात् तेषां सदैकरूपत्वात् । प्राकृतत्वेच सर्वमसमञ्जसं स्यादिति ५ प्राप्त आह । व्याप्तेरिति । सर्वतःपाणिपादान्तम् ( भ. गी. १३।१३ ) इत्यादिस्मृतेः साकारमेव व्यापकमिति । चकारात् सर्वरस (छां. ३।१४।२) इति श्रुत्या रसात्मकत्वेन भक्तानां यादृग्रूपेण लीलारसानुभवस्तादृग्रूपं क्रमेण योगमायापसारणेन प्रकटीकरोतीति बाल्यादिभावोपपत्तेः सर्वमुपपन्नमित्यर्थः । तेन यावदुक्तधर्मवद् ब्रह्मेति सिद्धम् ॥ ३।३।९ ॥

१० ननु ब्रह्मधर्मत्वेन ते सर्वे नित्या वाच्याः । तेच तत्तद्भक्तविशिष्टाः । तत्र चैकस्यैव भक्तस्य पौर्वापर्येणानेकलीलासंबन्धित्वं श्रूयते । तथा च पूर्वलीलाया नित्यत्वेन तत्संबन्धिभक्तस्यापि तथात्वं वाच्यम् । एवं सति तस्यैवाग्रिमलीलासंबन्धोशक्यवचनः । तथा वचने तु पूर्वलीलाया नित्यत्वं भज्येत । नित्यत्वे त्वग्रिमलीलासंबन्धिनोभिन्नत्वं स्यात् । तच्चा-१५ नुभवतदावेदकमानविरुद्धमित्यत उत्तरं पठति ।

## सर्वाभेदादन्यत्रेमे ३।३।१० ॥

लीलामध्यपातिनां सर्वेषां पदार्थानां ब्रह्मणा सहाभेदाद् ब्रह्मणश्चैकत्वात् पूर्वलीलातोन्यत्रोत्तरलीलायामपीमे पूर्वलीलासंबन्धिन एव त इत्यर्थः । अत्रेदमाकूतम् । रसो वै सः ( तै. २।७ ) २० इति श्रुत्या सर्वरसः ( छां. ३।१४।२ ) इति श्रुत्या च सर्वरसात्मकत्वं ब्रह्मणो निर्णीतम् । तथा च यस्य रसस्य ये विभावानुभावादिरूपास्तैः स रसः संपद्यते । आतानवितानात्मकतन्तुभिः पट इव । अतस्तत्तादात्म्यं रसस्येति सर्वाभेदो निष्प्रत्यूह इति । ननु विरुद्धदिक्कयोरेकजातीयभाववतोर्भक्त्यतिशयेन युगपदेकजातीयलीलासहितभगवत्प्रादु-

---

10–A, C and D read ब्रह्मधर्मवत्त्वेन for ब्रह्मधर्मत्वेन ।

20–ख om. सर्वरसः इति श्रुत्या च after श्रुत्या ।

र्भावे भगवतो व्यापकत्वेनैव प्रादुर्भावस्योपपन्नत्वेपि लीलापदार्थानामव्यापकत्वाद्युगपदाविर्भावोनुपपन्नः । भक्तयोः समानत्वाद्भक्तिमार्गविरोधापाताद्विनिगमकाभावाच्चैकत्र मायया प्रदर्शयतीति च न वक्तुं युक्तमिति शङ्काप्येताभ्यां सूत्राभ्यां निरस्तेति ज्ञेयम् । ब्रह्मणो व्यापकत्वाल्लीलायाश्च
५ तेन सहाभेदात्तथात्वादेकस्मै भक्ताय यथा ब्रह्मणा सह लीलापदार्था आविर्भवन्ति तथैव तदैवान्यत्रापि भक्तसमानदेश आविर्भवन्तीति सर्वसामञ्जस्यात् ॥ ३।३।१० ॥

ननु व्यापकत्ववत्पूर्णानन्दैश्वर्यवीर्यादयोपि धर्मास्तेषु प्रतीता भवेयुः । न चैवमस्ति । दुःखसंभावनायां प्रभुमेव प्रार्थयन्ति यतः ।
१० एवं सति व्यापकत्वमपि न वक्तुं शक्यम् । तुल्यत्वादत उत्तरं पठति ।

## आनन्दादयः प्रधानस्य ॥ ३।३।११ ॥

पूर्णानन्दैश्वर्यादयः प्रधानस्य धर्मिणो ब्रह्मण एव धर्माः । लीलापदार्थास्तु ब्रह्मधर्मत्वेन व्यापका उच्यन्ते । व्यापकस्य धर्मिणोनागन्तुकधर्मस्य व्यापकत्वानियमात् । न हि धर्मेषु पूर्णानन्दत्वादयः संभवन्ति ।
१५ धर्मित्वापत्त्या धर्मत्वव्याहतेः । अत एवात्र प्रधानपदमुपात्तं धर्मगुणभावेन लीलापदार्थानामाविर्भाव इति ज्ञापयितुम् ॥ ३।३।११ ॥

## प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ ३।३।१२ ॥

ननूपासकस्य प्रियत्वादिप्रकारकज्ञानक्रममादाय प्रियत्वादिधर्माणां शिरस्त्वादिरूपत्वमानन्दमयाधिकरणे निरूपितमिति लीलास्थाना-
२० मपि प्रियत्वादिज्ञानस्य सत्त्वादत्रापि स्वरूपोपासकस्य प्रियशिरस्त्वादिधर्माणामुपसंहारः कार्य इत्याशङ्क्य परिहरति । प्रियशिरस्त्वाद्यप्राप्तिरिति । चित्तशुद्धितारतम्यहेतुकप्रियत्वादिज्ञानं लीलास्थानां चित्तशुद्ध्यपेक्षाभावान्न संभवतीति न तेषामत्रोपसंहारः कार्य इत्यर्थः ।

---

2–ख reads आविर्भावानुपपत्तेः for आविर्भावोनुपपन्नः ।

3–A and C om. न after च ।

4–B om. सूत्राभ्यां after एताभ्याम् ।

अथवा नन्वानन्दमयोपासनामथर्वणोपनिषदुक्तपञ्चरात्राद्यागमोक्तप्रकारेण कुर्वतः पुरुषरूपे पक्षाद्युपसंहारस्यायुक्तत्वादानन्दमयाधिकरणे तद्रूपस्यैवोक्तत्वात्पुरुषरूपः कथमानन्दमयः । तथात्वे वा कथं नोक्तोपसंहारः । अपरं च मोदप्रमोदयोरुपचितानुपचितानन्दरूपयोर्यु-
५ गपत्सत्त्वेन देशभेदेनापि भिन्नत्वान्नित्यानन्दैकरसे ब्रह्मणि तादृग्रूपकथनमनुपपन्नमित्याशङ्क्य परिहरति । प्रियशिरस्त्वादीति । यद्यथर्वणोपास्यात् प्रियशिरस्त्वादिविशिष्टस्य भेदः स्यात् तदा तदप्राप्तिः स्यान्न च तथेति प्रियशिरस्त्वादिकमुपासनामार्गीयस्याप्याथर्वणिकादेरुपसंहार्यमेवेत्यर्थः । चित्तशुद्धितारतम्यहेतुकं प्रियत्वादिज्ञानमिति पक्षे परो-
१० क्षवादपक्षेपि तत्र भेदाभावान्मोदप्रमोदयोर्न त्वदुक्तरूपत्वमित्यर्थः । ब्रह्मधर्मा एव भिन्ना इत्युपासनार्थं तानादाय शिरःपाण्यादि निरूप्यत इति तत्रैव निरूपितमस्माभिः । यद्यप्यानन्दमयाधिकरण एवास्यार्थस्योक्तत्वान्नेयं शङ्का संभवति । तथापि गुणोपसंहारप्रसंगे मिथ्यावादिन आपाततः शङ्का संभवतीत्याचार्येणोक्त्वा निरस्ता ॥ ३।३।१२ ॥

१५ ननूपास्यरूपस्याविरुद्धा एव गुणा उपसंहर्तव्या न तु विरुद्धाः । तथा च पुरुषरूपे पक्षादि विरुद्धमिति न तदुपसंहार्यमित्याशङ्क्याह ।

## इतरे त्वर्थसामान्यात् ॥ ३।३।१३ ॥

इतरे पुरुषरूपे विरुद्धत्वेन ये भासमाना धर्मास्तेप्युपसंहर्तव्याः । तत्र विरोधव्यवच्छेदज्ञापनाय तुशब्दः । तत्र हेतुरर्थसामान्यादिति । अर्थः
२० पदार्थ आनन्दमयत्वलक्षणस्तस्य समानत्वादेकत्वादित्यर्थः ॥३।३।१३ ॥

अथानन्दमयाधिकरण उक्तप्रकारेण ये प्रियत्वादिधर्मास्तेषामेवोपसंहारः कार्यो नतु पुरुषरूपे पक्षादीनामपीत्यग्रिमं पठति ।

## आध्यानाय प्रयोजनाभावात् ॥ ३।३।१४ ॥

आनन्दस्वरूपस्य यावन्तो धर्मा भक्तिमार्गीयाः परोक्षवादेनोच्यन्ते
२५ प्रियत्वप्राधान्यादयस्तेषां सर्वेषामाध्यानमासमन्ताद् ध्यानं तदर्थं ये धर्मा

---

25–ख reads तदर्थं च धर्माः for तदर्थं ये धर्माः ।

उपयुक्तास्त एवोपसंहर्तव्या नान्ये । तत्र हेतुः । प्रयोजनाभावादिति । ध्यानपदार्थस्य तावद्भिरेव सिद्धेराधिकोपसंहारे तथात्वादित्यर्थः ॥ ३।३।१४ ॥

अन्येषामनुपसंहारे हेत्वन्तरमप्याह ।

## आत्मशब्दाच्च ॥ ३।३।१५ ॥

५ प्रियमेवेत्यादिना परोक्षवादेनोक्तानां प्रियप्राधान्यादीनामेव भावना कार्या । नतु यथाश्रुतानां शिरःपक्षादीनाम् । तेषामविवक्षितत्वात् । तत्र हेतुरात्मशब्दादिति । आनन्द आत्मा इत्यनेन पूर्वोक्तानां प्रियप्राधान्यादीनां रसात्मकानामात्मा स्वरूपमानन्द इत्युक्तम् । अग्रे—रसो वै सः ( तै. २।७ ) इति वक्ष्यमाणत्वात्तस्य च स्थायिभावात्मकत्वात्तस्यैवानन्दमयत्वाच्च १० प्रियविषयकलीलामध्यपातिभक्तज्ञानप्रकाराणामपि रसात्मकत्वेनानन्दरूपत्वात्तेषामुपासना तूत्तमाधिकाराभावाच्छिरःपक्षादिरूपेण कार्येति भाववती श्रुतिस्तथा न्यरूपयत् । एतेन यत्परम्परासंबन्धेष्प्युपास्यत्वं तदस्य महत्त्वं कियदवधि वाच्यमिति ज्ञाप्यते । एवं सत्युपासनामार्गीयोपास्यं विभूतिरूपं न तु मूलरूपम् । यं न योगेन (भा. ११।१२।९) इति वाक्या-
१५ दिति ज्ञेयम् ॥ ३।३।१५ ॥ १ ॥

---

## २ आत्मगृहीत्यधिकरणम् ।

## आत्मगृहीतिरितरवदुत्तरात् ॥ ३।३।१६ ॥

तैत्तिरीयकेऽन्नमयादिनिरूपणे पुरुषविधत्वं तेषां निरूप्य—तस्यैष एव शारीर आत्मा यः पूर्वस्य ( तै. २।३ ) इति सर्वत्र निगद्यते ।
२० तत्रानन्दमयपर्यन्तं शारीरात्मत्वकथनाद्भवति संशयः । शारीराभिमानी जीव एव काश्चिदुत ब्रह्मैव । तत्र शारीरपदाज्जीव एव भवितुमर्हति । तथा सत्यानन्दमयस्यापि ब्रह्मत्वं नोपपद्यते । उच्यते च भार्गव्यां विद्यायाम्—अन्नं ब्रह्मेति व्यजानात् ( तै. ३।२ ) इत्यारभ्यानन्दमयपर्यन्तम्—आनन्दो ब्रह्मेति व्यजानात् ( तै. ३।६ ) इत्यन्तया श्रुत्या ब्रह्मत्वमि-
२५ त्युभयतःपाशा रज्जुरिति प्राप्त आह । इतरवज्जीववदात्मगृहीतिरात्मग्रह-

---

1–C reads प्रयुक्ताः for उपयुक्ताः ।

णम् । तस्यैष एव शारीर आत्मा ( तै. २।३ ) इति यत्तदुत्तरात् । यः पूर्वस्येति सर्वत्रोक्तत्वात् सर्वेभ्य उत्तर आनन्दमयस्तस्माद्धेतोरित्यर्थः । तत्तच्छरीराभिमानित्वात्तथा । एतद्यथा तथानन्दमयाधिकरणे प्रपञ्चितमस्माभिः । अथवान्योन्तर आत्मेत्यन्नमयादन्यत्र सर्वत्रोक्तत्वात्पूर्वनिरू-
५ पितो यः स इतर इत्युच्यते । तथा च यः पूर्वस्येति श्रुत्येतरवत् पूर्वनिरूपितवत् प्रकृतस्याप्यात्मग्रहणकथनं यत्तदुत्तरादिति पूर्ववत् ॥ ३।३।१६ ॥

## अन्वयादिति चेत्स्यादवधारणात् ॥ ३।३।१७ ॥

ननु सर्वत्रान्योन्तर आत्मेति श्रुत्या प्रत्येकमन्नमयादीनां भेदनि-
१० रूपणाच्छारीरपदाच्च भिन्नो भिन्नो जीव एवात्मा शरीराभिमानी सर्वत्रोच्यते । आनन्दमयेपि तथोक्तिर्या सा त्वानन्दमयस्य ब्रह्मत्वेन व्यापकत्वेन सर्वत्रान्वयात् । सर्वेषु शरीरेषु संबन्धादित्याशङ्क्य तन्निरासायोक्तेर्थ उपपत्तिमाह स्यादित्यादिना । स्यात् आनन्दमय एवोक्तसर्वशरीराभिमानी भवतीत्यर्थः । तत्र हेतुरवधारणादिति । एष एवेत्येवकारेणेतरनि-
१५ षेधपूर्वकमानन्दमयस्यैवात्मत्वनिर्धारादित्यर्थः ॥ ३।३।१७ ॥ २ ॥

---

## ३ कार्याख्यानाधिकरणम् ।

## कार्याख्यानादपूर्वम् ॥ ३।३।१८ ॥

तैत्तिरीयके पठ्यते । तस्माद्वा एतस्मादात्मन आकाशः संभूतः ( तै. २।१ ) इत्युपक्रम्य महाभूतसृष्टिमुक्त्वाम्नायते—पृथिव्या ओषधयः ।
२० ओषधीभ्योन्नम् । अन्नात्पुरुषः । स वा एष पुरुषोन्नरसमयः ( तै. २।१ ) इति । एतदग्रेन्नस्योत्पत्तिस्थितिलयहेतुत्वमुक्त्वाग्रे—येन्नं ब्रह्मोपासते ( तै. २।१ ) इत्युच्यते । भृगुवरुणसंवादे च—अन्नं ब्रह्मेति व्यजानात् ( तै. ३।२ ) इत्युच्यते । तत्र—स वा एष पुरुषोन्नरसमयः ( तै. २।१ )

---

3–ख om. तथा after यथा ।

11–ख om. व्यापकत्वेन after ब्रह्मत्वेन ।

इत्यनेन पूर्वोक्त एव पुरुष उच्यत उत तद्भिन्न इति भवति संशयः । किमत्र युक्तम् । पूर्वोक्त एवेति । यतः पूर्वोक्तस्यैव स वा एष इत्यनेन प्रत्यभिज्ञानं प्रतीयते । तत्र ब्रह्मत्वेनोपासना कार्येत्यभिप्रायेण ब्रह्मत्वेन स्तूयत इति प्राप्त आह । कार्याख्यानादपूर्वमिति । पूर्वस्यान्नकार्यस्य
५ पुरुषस्याख्यानात्—स वा एष—इत्यनेनाग्रिमश्रुतिभिर्ब्रह्मत्वेन प्रतिपिपादयिषितमन्नरूपमेवोच्यते न तु पूर्वमित्यर्थः । स वा एष इति प्रत्यभिज्ञानमिति यदुक्तं तन्न । अन्नात्पुरुष इत्यनेनाधिभौतिकतन्निरूपणात् । स वा एष इत्यनेनाध्यात्मिकतन्निरूपणादुभयोश्च भेदात् । अत एव संशयाभावायाह । वै निश्चयेन । एष वक्ष्यमाणः पुरुषः स आध्यात्मिकत्वेन
१० प्रसिद्धोऽन्नरसमय इति । अन्यथा ब्रह्मात्मकतपोलक्षणसाधनेनाधिकारे संपन्ने-अन्नं ब्रह्मेति व्यजानात् ( तै. ३।२ ) इति न वदेत् । न च तदपि तथात्वेन स्तूयत इति वाच्यम् । श्रुतेः प्रतारकत्वापत्तेः । आनन्दमयान्तमेवमेव निरूपणाच्च । अत एवास्याप्यात्माग्रे निरूपितो यः पूर्वस्येति । स त्वाधिदैविक आनन्दमयः । अथवा वाजसनेयिशाखायाम्—आत्मेत्ये-
१५ वोपासीत ( बृ. १।४।७ ) इत्युपक्रम्य—तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा ( बृ. १।४।८ ) इत्येदग्रेऽन्यस्य प्रियत्वं निराकृत्येश्वरो हि तथा स्यात् । आत्मानमेव प्रियमुपासीतेति पठ्यते । अत्रात्मौपाधिकत्वात् सर्वत्र प्रियत्वस्यात्मपदेन जीवात्मन एव प्रियत्वेनोपासना विधीयत उतेश्वरपदात्परमात्मन इति भवति संशयः । किमत्र
२० युक्तम् । जीवात्मन एवेति । कुतः । यथा पुत्रादेरात्मोपाधिकप्रियत्वोक्त्या जीवात्मन एव प्रियत्वमुच्यतेऽन्यत्र श्रुतौ तथेहापि । प्रेयः पुत्रादित्यादिकथनाज्जीवात्मैव भवितुमर्हतीति प्राप्त आह । कार्याख्यानादपूर्वमिति । इतः पूर्वमाम्नायते—प्राणन्नेव प्राणो नाम भवति वदन् वाग् रूपं पश्यंश्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मनस्तान्यस्यैवैतानि कर्मनामान्येव
२५ ( बृ. १।४।७ ) इति । तथा च प्राणनवदनादिकार्यैः कृत्स्नप्राणवागादित्वेनैकस्यैवात्मन आख्यानात् कथनादपूर्वम् । पूर्वं तु पुत्रवित्ताद्यभिमान-

---

11—C reads एतदपि for तदपि ।

दशायां—न वा अरे पत्युः कामाय पतिः प्रियो भवति ( बृ. २।४।५ ) इत्यादिना यत्प्रियत्वेनोच्यते तस्माद्भिन्नमात्मशब्दवाच्यमत्रेत्यर्थः । लोके हि प्राणवायुवागिन्द्रियादीनामेव तत्तच्छब्दवाच्यता न तु जीवस्यात एवाग्रे श्रुतिराहेश्वरो हि तथा स्यादिति । अत एव—प्रेयोन्यस्मात्सर्वस्मा-
५ दन्तरतरं यदयमात्मा ( बृ. १।४।८ ) इत्याह । अन्तरो जीवात्मा ततो-ऽप्यतिशयेनान्तरमन्तरतरं पुरुषोत्तमस्वरूपमेव भवितुमर्हति। एतेन विग्र-हस्यैवात्मरूपत्वं सिद्ध्यति । तेनाविकृतत्वपरमानन्दत्वादयोपि धर्मा उपसंहर्तव्याः ॥३।३।१८ ॥

ननु विग्रहे चक्षुःश्रोत्रादीनां वैलक्षण्यप्रतीतेरात्मनश्चैकरसत्वा-
१० दुक्तकर्मनामवत्त्वं ब्रह्मण्यनुपपन्नमित्याशङ्क्योत्तरं पठति ।

## समान एवं चाभेदात् ॥ ३।३।१९ ॥

चोप्यर्थे । तथा चैवमपि सति श्रोत्रचक्षुरादिवैलक्षण्यप्रतीतावपि सति समान एकरूप एव न तु विषमः । तत्र हेतुरभेदादिति । चक्षुरा-दीनां ब्रह्मत्वेन परस्परमभेदादित्यर्थः। अत्रेदमाकूतम्। तं त्वौपनिषदं पुरुषं
१५ पृच्छामि ( बृ. ३।९।२६ ) इति श्रुतेरुपनिषद्वेद्यमेव ब्रह्मस्वरूपम् । ताश्च—प्राणन्नेव प्राणो भवति वदन् वाक् ( बृ. १।४।७ ) इत्यादिरूपाः । प्रतिनियतेन्द्रियग्राह्यानर्थान् स्वरूपेणैव गृण्हद् ब्रह्म तत्तच्छब्दवाच्यं भव-तीति वदन्ति । तद्वाच्यता च व्यवहार्यत्वे । स च—तदेतत्प्रेयः पुत्रात् ( बृ. १।४।८ ) इत्यादिवाक्यैकवाक्यतया निरुपधिस्नेहवतामेव व्यवहार्य
२० इति ज्ञाप्यते । स चाविर्भूतेवताररूप एव संभवति । एवं सति तत्र भक्तै-र्भगवद्विग्रहे तत्तदवयवेषु भेदेन यथा यथा व्यवह्रियते तथा तथैव तदेक-मेवाखण्डसच्चिदानन्दरूपं ब्रह्मेत्यर्थः संपद्यते। एवंविधो लोके न प्रसिद्ध इत्यसंभावना स्यात् तदभावायाग्रे श्रुतिराहेश्वरो हि तथा स्यादिति । एतेनाविर्भूतरूपे व्यापकत्वैकरसत्वसच्चिदानन्दत्वादयो धर्मा उपसंहर्तव्याः
२५ अनाविर्भूतेपीति स्थितम् । एवं सत्याविर्भावेनाविर्भावेपीश्वरः समानः । न ह्याविर्भावे कांश्चनागन्तुकान् धर्मानादायाविर्भवतीति वक्तुं शक्यमनाविर्भू-

तस्यापि । एवमाविर्भूतप्रकारेणैवाभेदादित्यपि सूत्रार्थः सूत्रकाराभिमत इति ज्ञातव्यम् । चकारेण विरुद्धसर्वधर्माश्रयत्वं समुच्चीयते । एवं साक्षादाविर्भूते भगवद्रूपे पूर्णानन्तधर्मास्तदुपासकेनोपसंहर्तव्या इति सिद्धम् ॥ ३।३।१९ ॥

५ अथ यत्र कार्यचिकीर्षया जीवे स्वयमाविशति तदावेशात्तद्धर्मा अपि केचित् तस्मिन्नाविर्भवन्ति । तत्रोपासकेनाखिलब्रह्मधर्मोपसंहारः कर्तव्यो न वेति शङ्कासमाधानं विकल्पेनाह सूत्राभ्याम् । तत्रादौ विधिपक्षमाह ।

## संबन्धादेवमन्यत्रापि ॥ ३।३।२० ॥

१० अन्यत्रापि जीवेप्येवं ब्रह्मणीवोपासना कार्या । तत्र हेतुः । संबन्धादिति । अयोगोलके वन्हेरिव तस्मिन्नावेशलक्षणः संबन्धोस्तीति । तत्त्वेन व्यपदेशाच्च तथेत्यर्थः । अत्रैवं ज्ञेयम् । अयं तु जीवोत्राविष्टं भगवन्तमहमुपास इति जानाति चेत्तदा न सा जीवगामिन्युपासना किंतु ब्रह्मगामिन्येव । तत्राखिलधर्मोपसंहारे न किंचिद्बाधकम् । यत्र ब्रह्मत्वेनैव ज्ञात्वो-
१५ पास्ते तत्रापि–तं यथा यथोपासते तथैव भवति तद्धैतान् भूत्वावति-इति श्रुतेर्गुर्वादौ जीवत्वबुद्धिनिषेधाच्च । तथा तत्र यादृगुपासकस्तदुपासनासिद्ध्यर्थं तत्फलदानार्थं च तादृग्रूपो भगवानाविशतीति च तथा ॥ ३।३।२० ॥

यस्त्वन्तरङ्गं भगवद्भक्तं हृद्याविर्भूतभगवत्कं ज्ञात्वैतद्भजनेनाहं
२० भगवन्तं प्राप्स्यामीति ज्ञात्वा तमेव भजते स भक्तिमार्गीय इति भक्तहृद्याविर्भूते रूप उपसंहारो धर्माणां तेन कार्य इत्यग्रिमं पठति ।

## न वाविशेषात् ॥ ३।३।२१ ॥

अनुपसंहारे हेतुरविशेषादिति । अस्य भक्तभक्तत्वेन तद्भजनरसास्वादनेन विस्मृततदाविष्टभगवत्कत्वेन तन्निरपेक्षत्वेन वा तदाविष्टभगवति

---

16–ख reads जीव for जीवत्व । C reads तत्तदुपासकस्य for यादृगुपासकः ।

गुणोपसंहारेनुपसंहारे वा भक्तोपासनायां विशेषाभावादित्यर्थः । अनुपसंहारस्यात्र बाधकत्वाभावज्ञापनाय वाशब्दः । विशेषादिति वा । पूर्वं विहितत्वेन भगवदाकारादिषु भजनं कुर्वन्नप्युक्तरूपभक्तसंगेन तद्भजनेन च पूर्वस्माद्विशिष्टं रसमनुभूतवानिति रसास्वादे विशेषाद् गुणोपसंहारं स न
५ करोतीत्यनुवादः । विहितत्वेन गुणोपसंहारपूर्वकोपासनायां नीरसत्वे-नानादरज्ञापनाय वाशब्दः । भगवदवताररूपोपि बादरायणः प्रासंगिकेपि भक्तिमार्गस्मरणे तदीयरसावेशपरवशस्तद्भावस्वभावमनूक्तवान् ॥३।३।२१॥

अपि च । उपसंहारो हि तत्रानुक्तानामन्यत्रोक्तानां गुणानां तत्र सत्त्वेन ज्ञानमात्रम् । उक्तरूपभक्ताय तु तद्भजनीये भक्त एवालौ-
१० किकाननुभावान् भगवान् प्रत्यक्षं दर्शयतीति न तत्रोपसंहारापेक्षागन्धो-पीत्युत्तरं पठति ।

## दर्शयति च ॥ ३।३।२२ ॥

॥ ३।३।२२ ॥

ननु भक्तभक्तः स्वसेव्येत्यलौकिकं वीर्यं दृष्ट्वा तदाविष्टे भगवति
१५ तत्संभारकत्वस्येन्द्रादीनामपि तदाज्ञापेक्षित्वं दृष्ट्वा द्युलोकव्यापकत्वस्योप-संहारं करिष्यतीत्याशङ्क्याह ।

## संभृतिद्युव्याप्त्यपि चातः ॥ ३।३।२३ ॥

राणायनीयानां खिलेषु पठ्यते । ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान । ब्रह्मभूतानां प्रथमं तु जज्ञे तेनार्हति ब्रह्मणा
२० स्पर्धितुं कः ॥ ( तै. ब्रा. २।४।६ ) इति । अस्यार्थस्तु—अन्यैर्हि पुरुषैः सहायानपेक्ष्य विक्रमाः संभ्रियन्ते । तेन तत्पराक्रमाणां त एव नियतपूर्वभावित्वरूपकारणत्वेन ज्येष्ठाः । ब्रह्मधर्माणां तु ब्रह्मैव ज्येष्ठमनन्यापेक्षं सृष्ट्यादि करोतीत्यर्थः । एवं सति ब्रह्म ज्येष्ठं येषां तानि ब्रह्मज्येष्ठानि वीर्याणि । अत्र छन्दसि बहुवचनस्य डादेशः । किंचान्येषां वीर्याणां
२५ बलवद्भिर्मध्ये भङ्गोपि भवति । तेन ते स्ववीर्याणि न संबिभ्रति । ब्रह्मवी-

---

9—M reads ज्ञापन for ज्ञान ।

र्याणि तु ब्रह्मणा संभृतानि निष्प्रत्यूहं संभृतानीत्यर्थः । तच्च ज्येष्ठं ब्रह्माग्र इन्द्रादिजन्मनः प्रागेव दिवं स्वर्गमाततान व्याप्नुवन्नित्यमेव विश्वव्यापकमित्यर्थः । देशतोपरिच्छेदमुक्त्वा कालतोपि तमाह । ब्रह्मेति । भूतानामाकाशादीनां पूर्वमेव जज्ञे । आविर्बभूवेत्यर्थः । एतेन वीर्यसंभृतिद्युव्या-
५ प्तिप्रभृतिमाहात्म्यमुक्तं भवति । तथाच संभृतिश्च द्युव्याप्तिश्च तयोः समाहारस्तथा । एतावत्यपि सति तत्र नोपसंहार इति । तत्र हेतुः । न वाविशेषात् ( ब्र. सू. ३।३।२१ ) इति सूत्रोक्त एवेत्यतिदिशत्यत एवेति । एतद्यथा तथा तत्रैवोक्तम् ।

विषयवाक्योत्तरार्धोक्तधर्मानुद्देशेनैवं ज्ञायते भक्तस्यैहिकपारलौकि-
१० कोपयोगिधर्मोपलक्षणार्थं द्वयोरेवोद्देशः कृत इति । चकारेण दर्शनमप्युक्तं समुच्चीयते । अन्यच्च । स्पर्धाकृतिसंभावनायां हि तद्योग्यतानिषेधः संभवति । सा चाविर्भूत एव भगवति संभवतीत्यखिलशक्त्याविर्भावपूर्वकमाविर्भूतस्य तस्यैतया श्रुत्या माहात्म्यमुच्यत इति गम्यते । एवं सत्येतद्वाक्योक्तधर्मयोरेवानुपसंहार्यत्वेन यत्कथनं तत्तु भक्तहृद्याविर्भूतं ब्रह्माप्येवं-
१५ भूतमेवेति ज्ञापनायातो युक्त एवानुपसंहारः ॥ ३।३।२३॥३ ॥

---

## ४ पुरुषविद्यायामित्यधिकरणम् ।

## पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ ३।३।२४ ॥

तैत्तिरीयके—सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् । स भूमिं विश्वतो वृत्त्वा अत्यतिष्ठद्दशाङ्गुलम् । पुरुष एवेद॑ँ सर्वं यद्भूतं यच्च
२० भव्यम् ( तै. सं. ३।१२।१ ) इत्यादिना पुरुषविद्या निरूप्यते । तत्रैव ब्रह्मविदाप्नोति परम् ( तै. ३।१ ) इति प्रश्ने—स वा एष पुरुषोन्नरसमयः ( तै. ३।२ ) इत्यारभ्य प्राणमयमनोमयविज्ञानमयानन्दमयात्मकब्रह्मस्वरूपं निरूप्यते । तत्र सर्वत्र स च पुरुषविध एव चेति पठ्यते । अत्रान्नमयादिषु पुरुषसूक्तेच पुरुषपदश्रवणादन्नमयादिषु सहस्रशीर्षवत्त्वाद्युप-
२५ संहारः कर्तव्यो न वेति भवति संशयः । किमत्र युक्तम् । उपसंहर्तव्यमे-

वेति । कुतः । सर्वत्र ब्रह्मण एवोपास्यत्वादत्राप्युपासनोक्तेर्ब्रह्मत्वपुरुषत्व-
योरविशेषाद्विद्यैक्यादिति प्राप्ते । उच्यते । पुरुषविद्यायामिवेति । अन्न-
मयादिषु सहस्रशीर्षवत्त्वादिकं नोपसंहर्तव्यम् । कुतः । पुरुषविद्यायां
यथा पुरुषस्वरूपं निरूप्यते न तथेतरेषामन्नमयादीनां विज्ञानमयान्तानां
५ स्वरूपं तत्प्रकरणे निरूप्यते। अत्र हि पुरुषत्वमुच्यते। सहस्रपदमनेकत्वो-
पलक्षकम् । अन्यथाक्ष्णां शिरोभ्यो द्वैगुण्यं वदेत्तेन साकारव्यापकत्वमुक्तं
भवति । तत्र पुरुषविधत्वं सचाध्यात्मिकरूपस्तच्छरीराभिमान्यात्मा चान्य
आधिदैविक उच्यते । न तथात्र । किं च—पुरुष एवेदꣳ सर्वम्—इत्या-
दिना प्रपञ्चात्मकत्वं मुक्तिदातृत्वं चोक्त्वा नैतावन्मात्रमस्य माहात्म्यमि-
१० तोपि महन्माहात्म्यमस्तीति वक्तुं प्रपञ्चरूपं तद्विभूतिरूपमिति—एतावानस्य
महिमा—इत्यनेनोक्त्वा तत आधिक्यमाह । अतो ज्यायांश्च पूरुष इति ।
एवमतिवैलक्षण्यात् पुरुषपदमात्रसाधर्म्येण नैकविधत्वं वक्तुं शक्यम् । न
चोपसंहार इति । चकारात्—अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे
महतो महियान् ( तै. ना. १।१।१ ) इत्यादिश्रुतयः । सर्वतःपाणिपादा-
१५ न्तम् ( भ. गी. १३।१३ ) इत्यादिस्मृतयश्च संगृह्यन्ते । एतेन यत्किंचि-
द्धर्मसाम्येपि न मूलभूतब्रह्मरूपत्वमत एव न तत्रोपास्यता तथात्वेनेति
ज्ञापितम् । अत एव भृगूपाख्यानेन्नमयादिब्रह्मज्ञानेपि जिज्ञासैवोक्ता ।
भृगोरानन्दरूपपरब्रह्मज्ञाने तु नोक्ता । तेनाशेषगुणपूर्णं ब्रह्मेत्युक्तं
भवत्यत उत्तमाधिकारिभिस्तदेवोपासनीयं न विभूतिरूपमिति ज्ञापितम्
२० ॥ ३।३।२४।४ ॥

---

अथ निर्दोषमिति ज्ञात्वा भजनीयामिति ज्ञापयितुमाधिकरणान्तरमारभते।

## ५ वेधाद्यधिकरणम् ।

## वेधाद्यर्थभेदात् ॥ ३।३।२५ ॥

वाजसनेयिशाखायां—द्वया ह वै प्राजापत्याः—( बृ. १।३।१ )
२५ इत्युपक्रम्य तेषां मिथः स्पर्धामुक्त्वोच्यते—ते ह देवा ऊचुर्हन्तासुरान् यज्ञ

---

5–A and C read प्रकरणे for तत्प्रकरणे ।

उद्गीथेनात्ययामेति ते ह वाचमूचुस्त्वं न उद्गायेति तथेति तेभ्यो वागुदगायद् यो वाचि भोगस्तं देवेभ्य आगायद् यत्कल्याणं वदति तदात्मने ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यन् स यः स पाप्मा यदेवेदमप्रतिरूपं वदति स एव पाप्मेति । ( बृ. १।३।१ ) एवमेव
५ प्राणचक्षुःश्रोत्रप्रभृतिषु पापवेधमुक्त्वोच्यते । अथैनमासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति तमभिद्रुत्य पाप्मनाविध्यत् स यथाश्मानमृत्वा लोष्टो विध्वंसेतैवः ह वै विध्वंसमाना विष्वञ्चो विनेशुः ( बृ. १।३।३। ) इति । छान्दोग्येपि प्राणादिष्वेवमेव पाप्मवेधमुक्त्वासन्येन तथेत्युच्यते । एतावान्परं विशेषो
१० वाजसनेयिनां गानकर्तृत्वं सामगानामुद्गीथत्वेनोपास्यत्वमुच्यते वाक्प्राणादीनामिति । अत्र देहसंबन्धित्वमानकर्तृत्वयोरुपास्यत्वस्य चाविशेषेपि वागादिषु पाप्मवेध आसन्यप्राणे कुतो नेति भवति जिज्ञासा । न चासन्योपासनाया विधेयत्वात् तत्स्तुत्यर्थमन्येषु पाप्मवेध उच्यतेस्मिन्निति वाच्यम् । न हि प्रयोजनायासन्तमप्यर्थं बोधयति श्रुतिरिति वक्तुं शक्यम् ।
१५ प्रमाणत्वव्याहतिप्रसंगात् । एकत्र प्रतारकत्वे सर्वत्रापि तच्छङ्कया तदुक्ते कोपि न प्रवर्तेतापि । साक्षात्क्रियार्थत्वाभावेपि नासन्निरूपकत्वमर्थवादानाम् । वस्तुतस्तु—यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवति ( छां. १।१।१० ) इति श्रुतेः । ज्ञात्वा ज्ञात्वा च कर्माणि जनोयमनुतिष्ठति । विदुषः कर्मसिद्धिः स्यात्तथा नाविदुषो
२० भवेत् ॥ इत्यादिवाक्यैर्य एवं वेदेति वाक्यैश्चार्थवादोक्तस्वरूपं ज्ञात्वा कर्मकरणे पूर्णं फलमन्यथा नेत्यर्थवादानां फलोपकार्यङ्गनिरूपकत्वान्नानर्थक्यमत उक्तेर्थे हेतुं न पश्याम इति प्राप्ते ।

तमेवाह । वेधादीति । वाक्प्राणादिषु यः पाप्मवेध आदिपदाद् दुष्टविषयसंबन्धश्च तत्र हेतुरर्थभेदः । अर्थो भगवांस्तस्माद्भे-
२५ दादित्यर्थः । आसन्यस्तु—य एवायं मुख्यः प्राणस्तमुपासीतेति छान्दोग्य उपास्यत्वेनोक्तः । सर्ववेदान्तप्रत्ययम् (ब्र.सू. ३।३।१) इति न्यायाद्वेदान्तेषूपास्यं ब्रह्मातिरिक्तं नोच्यत इत्यासन्योपि ब्रह्माभिन्नोत एवापहतपाप्मा

ह्येष इति सामगैः पठ्यते । अतस्तत्र न पाप्मवेध इति भावः । ब्रह्मणः स्वतन्त्रपुरुषार्थत्वज्ञापनायार्थपदेनोक्तिः । एतेन विभूतिरूपेऽपि यत्रैवं तत्र मूलभूतब्रह्मणि निर्दोषत्वं किं वाच्यमिति ज्ञापितम् । अथवार्थः प्रयोजनं विषय इति यावत् । तद्भेदादित्यर्थः । अत्रेदमाकूतम् । देवा हि स्वस्या-
५ सुरजयाय गानार्थं वागादीनूचुस्त्वं न उद्गायेति गानानन्तरं यो वाचि भोगस्तं देवेभ्य आगायदित्युच्यते । एवमेव प्राणादिष्वपि स्वस्वभोगं देवेभ्य आगायदिति । एवं सति देवार्थमेवैतद्गानं न तु भगवदर्थम् । यद्य-प्यासन्येऽप्येवमुच्यते तेभ्य एष प्राण उदगायदिति तथापि यथा वागादिषु स्वनिष्ठभोगं देवेभ्य आगायदित्युक्तं तथा नासन्ये । तेनोक्तमानैर्ब्रह्मात्म-
१० कत्वेनासुरजयहेतुर्भगवत्संबन्ध एवेति ज्ञात्वा तथैवागायदासन्य इति ज्ञायते । अत एवान्यत्र वेध उक्तोऽत्र तत्करणेच्छायामप्यासुराणां नाश उक्तः । अग्रे च—भवत्यात्मना परास्य द्विषन् भ्रातृव्यो भवति य एवं वेद ( बृ. १।३।७ ) इति पठ्यते । तेन परब्रह्म निर्दोषमिति किमु वाच्यम् । यत्र तद्विभूतिरूपासन्यस्योक्तरूपतां यो वेत्ति सोऽपि गुणयुक्तो दोषरहि-
१५ तश्च भवतीति कैमुतिकन्यायः सूचितो भवति । एतेन लोके दोषत्वेन ये धर्माः प्रतीयन्ते त एव धर्मा भगवति निरूप्यमाणा न दोषत्वेन ज्ञेयाः । किंतु गुणत्वेनैव । वस्तुन एव तथात्वादिति भावो ज्ञाप्यते ॥ ३।३।२५ ॥

एवं भगवत्संबन्धाभावे दोषसंबन्धमुक्त्वा तथा सति गुणहानिं च वदंस्तत्र विशेषमाह ।

२० **हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दः-स्तुत्युपगानवत्तदुक्तम् ॥ ३।३।२६ ॥**

तदा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ( मुं. ३।१।३ ) इत्याथर्वणिकैः पठ्यते । परमपदेन ब्रह्मोच्यते । तथा च सकार्याविद्यारहितः परममुपैति । तदनन्तरं साम्यमुपैतीति योजना ।

---

3–C reads निर्दोषत्वे for निर्दोषत्वं ।

तत्रेदं विचार्यते । साम्यं हि समानजातीयधर्मवत्त्वम् । तच्च कतिपयधर्मैरशेषतन्निष्ठधर्मैर्वा भवति । तत्रान्त्यः पक्षो ब्रह्मणा समं न संभवति । न तत्समश्चाभ्यधिकश्च दृश्यते ( श्वे. ६।८ ) इति श्रुतिविरोधादत आद्य एव पक्षोनुसर्तव्यः । तत्र कैर्धर्मैः साम्यमिहोच्यत इत्याकाङ्क्षायामाह । हानाविति । ब्रह्मणः सकाशाद्विभागो जीवस्य हानिशब्देनोच्यते । तथा च तस्यां सत्यां ये धर्मा जीवनिष्ठा आनन्दांशैश्वर्यादयो भगवदिच्छया तिरोहितास्ते ब्रह्मसंबन्धे सति पुनराविर्भूता इति तैरेव तथेत्यर्थः । भगवदानन्दादीनां पूर्णत्वाज्जीवानन्दादीनामल्पत्वान्नाम्नैव समैर्धर्मैः कृत्वा ब्रह्मसाम्यं जीव उपचर्यते साम्यमुपैतीति । वस्तुतस्तु नैतैरपि धर्मैः साम्यमिति भावः । अत एव—न तत्समः ( श्वे. ६।८ ) इति श्रुतिरविरुद्धा । अत एव सूत्रकृता साम्यमुपैतीति साम्योपायनशब्दमात्रं न तु साम्यपदार्थः स्वारसिकोत्रास्तीति भावप्रकटनाय शब्दशब्द उक्तः । ननु तैरेव धर्मैः साम्यं नेतरैरित्यत्र को हेतुरित्याकाङ्क्षायामाह । उपायनशब्दशेषत्वादिति । परममुपैतीति य उपायशब्दस्तच्छेषत्वात्साम्योपायनशब्दस्येत्यर्थः । ब्रह्मसंबन्धहेतुकत्वादानन्दांशाद्याविर्भावस्य तदैव साम्योपायनकथनात्तैरेव धर्मैः साम्यमभिप्रेतमिति भावः । नन्वानन्दादीनां ब्रह्मधर्मत्वात्तैस्तत्साम्यकथनं तदभेदमेव गमयतीत्याशङ्क्य तद्धर्मवत्त्वमात्रस्य न तदभेदसाधकत्वमित्यत्र दृष्टान्तमाह । कुशेत्यादि । कुशा औदुम्बर्यः समिधस्ता अग्निष्टोमादियागेषु प्रस्तोत्रा स्थाप्यन्ते । तदा तत्संबन्धि यच्छन्दःस्तुत्युपगानं तद्वदित्यर्थः । तत्र—अभि त्वा शूर नोनुमो दुग्धा इव धेनवः ( ऋ. सं. ५।३।२१ ) इत्यृचि ये वर्णास्तेषामच एवोपसंहृत्य भकारेणैव गानं क्रियते । न हि तदार्चिकवर्णधर्माणामचामुपसंहारोस्तीति तद्दगात्मत्वं भकारस्य संभवति । एवं प्रकृतेपि ब्रह्मधर्मप्राकट्येन न तदात्मकत्वं जीवस्य संभवति । ननु तत्त्वमस्यादिवाक्यैरत्राभेदबोधनादस्तु तथेति चेत्तत्राह । तदुक्तमिति । जीवब्रह्माभेदबोधनतात्पर्यमुक्तामित्यर्थः । तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्(ब्र. सू. २।३।२९) इति सूत्रेणेति शेषः ।

---

1-ख reads धर्मत्वं for धर्मवत्त्वम् ।

अपि च। श्रुतौ ब्रह्मोपायनस्य साम्योपायनहेतुत्वोक्त्या तदनुपाय-
नस्य साम्यानुपायने हेतुत्वमिति ज्ञाप्यते। तथाच–पराभिध्यानात्तु तिरो-
हितं ततो ह्यस्य बन्धविपर्ययौ ( ब्र. सू. ३।२।५ ) इति सूत्रे जीवस्य
ब्रह्मांशत्वेनानन्दैश्वर्यादिब्रह्मधर्मवत्त्वाद् ब्रह्मणः सकाशाद्विभागे सति तदि-
५ च्छया तद्धर्मतिरोधानस्य संसारित्वे हेतुत्वमुक्तं यत्तदपि तदुक्तमित्यनेन
स्मार्यत इति न विस्मर्तव्यम्। यथान्यशाखोक्तधर्मा अप्येकस्यां विद्या-
यामुपसंह्रियन्त एवं ब्रह्मनिष्ठा धर्मा जीवेप्येतया श्रुत्या बोध्यन्त इत्येताव-
त्साम्यमस्तीत्युपसंहारप्रकरण एतस्य निरूपणं कृतम्॥ ३।३।२६॥५॥

---

## ६ संपरायाधिकरणम्।

### १० संपराये तर्त्तव्याभावात्तथा ह्यन्ये ॥ ३।३।२७ ॥

वाजसनेयिशाखायां–स एष नेति नेतीत्यात्मा ( बृ. ३।९।२६ )
इत्युपक्रम्य–न व्यथते ( बृ. ३।९।२६ ) इत्यन्तेन ब्रह्मस्वरूपमुक्त्वा यत
एतादृग् ब्रह्मातस्तद्विदपि विवक्षितरूप इत्यभिप्रायेणाग्रे पठ्यते–अतः पाप-
मकरवमतः कल्याणमकरवमित्युभे ह्येष एते तरत्यमृत इत्यादिनाग्रि-
१५ मया–एष नित्यो महिमा ब्राह्मणस्य ( बृ. ४।४।२३ ) इत्यृचा च ब्रह्म-
विदो माहात्म्यमुक्त्वा पठ्यते। तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः
श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत्सर्वमेनं पश्यति सर्वोस्यात्मा भवति
सर्वस्यात्मा भवति सर्वं पाप्मानं तरति नैनं पाप्मा तरति (बृ. ४।४।२३)
इत्याद्युक्त्वान्ते पठ्यते–य एवं वेद (बृ. ४।४।२५) इति। अत्र हि पाप्म-
२० तरणादिरूपं ब्रह्मज्ञानमाहात्म्यमुच्यते। ज्ञानस्य संसारमुक्तिहेतुत्वात्।
आथर्वणोपनिषदादिषु तु भगवद्भक्तेर्मुक्तिहेतुत्वमुच्यते। परं ब्रह्मैतद्यो धार-
यतीत्युपक्रम्य भजति सोमृतो भवतीति। अग्रेपि मुक्तो भवति संसृतेरिति।
एतद्विषयव्यवस्था तु पुरैवोक्तेति नात्रोच्यते। एतावान्परं संदेहः। य एवं
वदति स पाप्मानं तरति (नृ. ता. पू. २।४) इति वचनाज्ज्ञानदशा-

13–ख om. अग्रे before पठ्यते।

यामपि पापसत्त्वं वाच्यमन्यथा तरणासंभवापत्तेः । एवं साति भक्तिदशाया-मप्येवमेव न वेति भवति संशयः । तत्र श्रुतावविशेषेण पापनाशश्रवणान्मु-क्तिपूर्वकाले पापनाशावश्यंभावादेकत्र निर्णीतः शास्त्रार्थोपरत्रापि तथेति न्यायेन भक्त्या पापनाशादत्रापि तथैवेति प्राप्त आह । संपराय इत्यादि।
५ संपरायः परलोकस्तस्मिन् प्राप्तव्ये सतीत्यर्थः । अथवा परः पुरुषोत्तमस्त-स्यायो ज्ञानम् । तथा च सम्यग्भूतं पुरुषोत्तमज्ञानं येन स संपरायो भक्तिमार्ग इति यावत् । अथवा परे पुरुषोत्तमेयनमयो गमनं प्रवेश इति यावत्तथा च सम्यक् परायो येन स तथा भक्तिमार्ग इत्यर्थः । ज्ञानमार्गे-क्षरप्राप्त्या भक्तिमार्गे पुरुषोत्तमप्राप्त्या तस्माद्विशेषमत्र ज्ञापयितुमेवं
१० कथनम् । अतो भक्तेः पूर्वमेव पापनाशो युक्त इति भावः । ब्रह्मभूतस्य भक्ति-लाभानन्तरं—भक्त्या मामभिजानाति ( भ. गी. १८।५५ ) इति भगव-द्वाक्यात्पुरुषोत्तमस्वरूपज्ञानस्य भक्त्यैकसाध्यत्वात्तथा । एवं साति—मुक्ता-नामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने । ( भा. ६।१४।५ ) मुक्तोपसृप्यव्यपदेशात् ( ब्र. सू. १।३।२ )
१५ जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥ जन्मान्तरसहस्रेषु समाराध्य वृषध्वजम् । वैष्णवत्वं लभेत्काश्चित्सर्वपापक्षयादिह ॥ इत्यादिवाक्यैः पापनाशानन्तरमेव भक्ति-संभवाद्भक्तस्य तर्तव्यपापादेरभावान्न ज्ञानमार्गीयतुल्यतेत्यर्थः ।

ननु—य एवं वेद ( नृ. पू. ता. २।१ ) इति सामान्यवचनात्पुरु-
२० षोत्तमविदोप्येवमेवेति चेत्तत्राह । तथा ह्यन्ये । तथा ज्ञानानन्तरमिति पापवन्तोन्ये भक्तिमार्गीयेभ्योन्य इत्यर्थः । उक्तवचनरूपोपपत्तिर्हिशब्देन ज्ञाप्यते ॥ ३।३।२७ ॥

ननु भक्तिमार्गीयाणामपि गोपस्त्रीणां—दुःसहप्रेष्ठविरहतीव्रतापधु-ताशुभाः । ध्यानप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः (भा. १०।२९।१०)
२५ इति वचनेन दुष्कृतसुकृतयोरपि हानिश्रवणात्पूर्वोक्तवचनैर्विरोध इत्या-शङ्कायामुत्तरं पठति ।

## छन्दत उभयाविरोधात् ॥ ३।३।२८ ॥

छन्द इच्छा तथाच भक्तिमार्गीयाणामपि पूर्वं पापानाशो यः स भगवदिच्छाविशेषतोतो भक्तेः पूर्वमेव पापनाशनिरूपकातन्नाशनिरूपक-वचनयोरविरोधाद्धेतोर्भक्तेः पूर्वमेव पापनाश आवश्यक इत्यर्थः । एवं सति ५ भक्तेः पूर्वमेव तन्नाश औत्सर्गिकः । स क्वचिद्विशेषेच्छयापनो-द्यत इति भावो ज्ञापितो भवति । अत्रेच्छाविशेषे वक्तव्यबहुत्वेपि किंचि-दुच्यते । चिकीर्षितलीलामध्यपातिभक्ता न सोपधिस्नेहवत्यो न सगुण-विग्रहा न वा सुकृतादियुक्ता इति ज्ञापयितुं कतिपयगोपीस्ताद्विपरीतध-र्मयुक्ताः कृत्वा तस्यां दशायां स्वप्राप्तौ प्रतिबन्धं कारयित्वा स्वयमेव १० तां दशां नाशयित्वा स्वलीलामध्यपातिनीः कृतवानिति । न ह्येतावता सार्वदिक एवायं भावो भवति । न हि मन्त्रप्रतिबद्धशक्तिरग्निरदाहक इति तत्स्वभावत्वमेव तस्य सार्वदिकमिति वक्तुं शक्यम् । एतच्च श्रीभाग-वतदशमस्कन्धविवृतौ प्रपञ्चितमस्माभिः ॥ ३।३।२८॥६ ॥

---

## ७ गतेरर्थवत्त्वमित्यधिकरणम् ।

## १५ गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ ३।३।२९ ॥

ननु—सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् ( तै. २।१ ) इति । तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यते-यनाय ( तै. आ. ३।१२) इत्यादिश्रुतिभिरुक्तरूपब्रह्मज्ञाने सत्येव मोक्ष इत्युच्यते । यमेवैष वृणुते तेन लभ्यः ( मुं. ३।२।३ ) इति श्रुत्यात्मी-२० यत्वेनाङ्गीकारात्मकवरणस्य भक्तिमार्गीयत्वात्तस्मिन् सति भक्तिमार्गे प्रवे-शाद्भक्त्यैव स इत्युच्यते । किं च । भक्त्या मामभिजानाति ( भ. गी. १८।५५ ) इत्युक्त्वा—ततो मां तत्त्वतो ज्ञात्वा विशते तदनन्तरम् ( भ. गी. १८।५५ ) इति भगवतोक्तामिति भक्तिमार्गेपि पुरुषोत्तम-ज्ञानेनैव मोक्ष उच्यते । ज्ञानमार्गे त्वक्षरज्ञानेनेति विशेषः । २५ तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं

3—ख om. अतः before भक्तेः ।

प्रायः श्रेयो भवेदिह ( भा. ६।१४।६ ) इति वचनेन भक्तिमार्गीयस्य ज्ञाननैरपेक्ष्यमप्युच्यते । तथा चैवं मिथः श्रुत्योः स्मृत्योश्च विरोधान्नैकतरनिर्धारः संभवति । न च ज्ञानेनैव मोक्ष उभयत्रापि तथोक्तेः । ज्ञाननैरपेक्ष्योक्तिस्तु भक्तिस्तुत्यभिप्रायेति वाच्यम् । विषयभेदेन ज्ञानभेदान्मु-
५ क्तिसाधनं कतमज्ज्ञानमित्यनिश्चयात् । न च श्रौतत्वाविशेषात्समुच्चय इति वाच्यम् । ज्ञानिनोऽक्षरे भक्तस्य पुरुषोत्तमे लयात् समुच्चयासंभवात् । तर्ह्येवं विरोधाभावादुपपन्नं सर्वमिति चेत् । न । पूर्वं ज्ञानमार्गीयज्ञानवतः पश्चाद्भक्तिमार्गीयज्ञानवतो लयस्थाननिर्धारासंभवात् । अपरं च । ततो मां तत्त्वतो ज्ञात्वा ( भ. गी. १८।५५ ) इति वचनात् भक्तिमार्गे तत्त्वतो
१० भगवज्ज्ञानमेव प्रवेशसाधनमिति मन्तव्यम् । तथा च—मत्कामा रमणं जारं मत्स्वरूपाविदोऽबलाः । ब्रह्म मां परमं प्रापुः संगाच्छतसहस्रशः (भा. ११। १२।१३ ) इति वाक्याज्ज्ञानमार्गीयभक्तिमार्गीयज्ञानरहितानामपि भगवत्प्राप्तेस्तत्साधनत्वनिरूपकश्रुतिविरोधः । तथा च क्वचिज्ज्ञानं मुक्तिसाधनत्वेनोच्यते क्वचिद्भक्तिः क्वचिन्नोभयमपीत्येकतरसाधनानिश्चयान्मुक्तिसाधने
१५ मुमुक्षोः प्रवृत्त्यसंभव इति प्राप्त आह । गतेरर्थवत्त्वमित्यादि । गतेर्ज्ञानस्यार्थवत्त्वं फलजनकत्वमुभयथा मर्यादापुष्टिभेदेनेत्यर्थः । अत्रायमाशयः । एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति ( कौ. ३।९ ) इत्यादिश्रुतिभ्यो भगवान् सृष्टिपूर्वकाल एवैतस्मै जीवायैतत्कर्म कारयित्वैतत्फलं दास्य इति विचारितवानिति तथैव भवति । तत्रोक्तरीत्या
२० मुक्तिसाधनानुगमे हेतुरवश्यं वाच्यः । एवं सति कृतिसाध्यं साधनं ज्ञानभक्तिरूपं शास्त्रेण बोध्यते । ताभ्यां विहिताभ्यां मुक्तिर्मर्यादा । तद्रहितानामपि स्वरूपबलेन स्वप्रापणं पुष्टिरुच्यते । तथा च यं जीवं यस्मिन्मार्गेऽङ्गीकृतवांस्तं जीवं तत्र प्रवर्तयित्वा तत्फलं ददातीति सर्वं सुस्थम् । अत एव पुष्टिमार्गेऽङ्गीकृतस्य ज्ञानादिनैरपेक्ष्यं मर्यादायामङ्गीकृतस्य तदपेक्षित्वं
२५ च युक्तमेवेति भावः । अत्र साधकत्वेन विपक्षे बाधकमाह । अन्यथा हि विरोध इति । अन्यथा मर्यादापुष्टिभेदेन व्यवस्थाया अकथने विरोधाद्धेतोस्तथेत्यर्थः । विरोधस्तु पूर्वपक्षग्रन्थ उपपादितः । एतेनैव—ननु श्रवणा-

दिरूपा प्रेमरूपा च भक्तिरविशेषेण पापक्षय एवोदेत्युत कश्चिद्विशेषोस्ति ।
तत्राधुनिकानामपि भक्तानां दुःखदर्शनाच्छ्रवणादेः पापनाशकत्वश्रवणाच्चा-
विशेषपक्षस्त्वसंगतः । अथ श्रवणादिरूपा पापे सत्यपि भवति । प्रेमरूपा
तु तन्नाश एवेति विशेषो वाच्यः । सोपि प्रेमवतामप्यक्रूरादीनां मणिप्रसंगे
५ भगवता समं कापट्यकृतिश्रवणान्न साधीयानित्यपि शङ्का निरस्ता वेदि-
तव्या । तथाहि मर्यादापुष्टिभेदेनाङ्गीकारे वैलक्षण्यादाद्यायामङ्गीकृतानां
मुमुक्षयैव श्रवणादौ प्रवृत्तिस्तद्दातृत्वेनैव भगवति प्रेमापि न तु निरुपाधिः ।
कदाचिद्वस्तुस्वभावेन मुक्तीच्छानिवृत्तावपि तद्भक्तेः साधनमार्गीयत्वाद्—
आनिच्छतो मे गतिमण्वीं प्रयुङ्क्ते इति वाक्यादन्ते मुक्तिरेव भवित्री ।
१० अस्मिन्मार्गे श्रवणादिभिः पापक्षये प्रेमोत्पत्तिस्ततो मुक्तिः । पुष्टिमार्गेऽङ्गीकृते-
स्त्वनुग्रहसाध्यत्वात्तत्र च पापादेरप्रतिबन्धत्वाच्छ्रवणादिरूपा प्रेमरूपा च
युगपत् पौर्वापर्येण वा वैपरीत्येन वा भवत्येव । अत्र श्रवणादिकमपि फलरू-
पमेव । स्नेहेनैव क्रियमाणत्वान्न विधिविषयः । न ह्यविद्यादिमुक्त्यन्त-
रूपभजनानन्दान्तरायरूपाभ्रङ्कषाविरलविविधमहातरुगहनानां दहने
१५ लोलुपस्यानुग्रहानलस्य तदान्तरालिकपापतूलं प्रतिबन्धकमिति वक्तुं
शक्यम् । तदुक्तं श्रीभागवते । स्वपादमूलं भजतः प्रियस्य त्यक्तान्यभावस्य
हरिः परेशः । विकर्म यच्चोत्पतितं कथंचिद् धुनोति सर्वं हृदि संनिविष्टः
( भा. ११।५।४२ ) इति । विकर्म प्राक्तनं तद् दुःखदमिति । स्वयं च
हरित्वेन दुःखहर्तेति धुनोत्युक्तविशेषणविशिष्टस्य स्वतो विकर्मकृत्यसं-
२० भवात् । सांसर्गिकं मत्तो भूतं न तु मया कृतमितिवद् वा यत्कृतं विकर्म
तत्कथंचिदुत्पतितमित्युच्यते । त्यक्तान्यभावत्वेन भगवत्सेवाभ्यासंगेने-
न्द्रद्युम्नाख्यपाण्ड्यराजवन्महदागमनाद्यज्ञानं वा वक्तोक्तरूपे भक्ते विक-
र्मोक्तावरुचिज्ञापनाय वा कथंचिदित्युक्तवान् । तेन तर्कितं विकर्मात्राप्य-
भिप्रेतमिति ज्ञायते । एतादृशस्यापि यदि विकर्म भवेत्तदा तन्निवृत्त्यर्थं न
२५ तेनान्यत्कर्तव्यम् । भगवानेव हृदि निविष्टस्तद्धुनोति यत इति । कदाचि-

---

24–B and ख read अत्राभिप्रेतं for अत्राप्यभिप्रेतं ।

त्स्वभक्तिबलस्फूर्त्या सदोषमपि जनं कृतार्थीकरिष्यामीत्यङ्गीकुर्याच्चेद्भक्त-
स्तदैव हृदिस्थ एव तत्संसर्गजं दोषमस्यैतदङ्गीकारेण तद्दोषमपि धुनो-
तीति सर्वपदेनोच्यते । चिरकालभोग्यमपि तत्क्षणेनैव नाशयाति । तन्नाशने
कालादेरप्रतिबन्धकत्वमित्यपि ज्ञापयितुं परस्य कालादेरीशत्वमुक्तम् ।
५ अत्र भजनादिहृन्निवेशान्तानां स्पष्ट एव क्रिकर्मणि सत्यपि संभव इति
॥ ३।३।२९ ॥ ७ ॥

---

## ८ उपपन्नाधिकरणम् ।

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३।३।३० ॥

ननु मुक्तेरेव सर्वत्र फलत्वमुच्यते । युक्तं चैतत् । संसृतेर्दुःखात्म-
१० कत्वात् तन्निवृत्तेः सर्वेषामिष्टत्वात् । पुष्टिमार्गीयभक्तानां तु तदनपेक्षित्व-
मुच्यते । तदुक्तमथर्वणोपनिषत्स्वष्टादशार्णमन्त्रस्वरूपमुक्त्वा पठ्यते । पर-
ब्रह्मैतद्यो धारयतीत्यादेरन्ते सोमृतोभवतीत्यादि । एतदग्रे किं तद्रूपं किं
रसनं कथं हैतद्भजनमित्यादिप्रश्नोत्तरं पठ्यते । भक्तिरहस्यभजनं तदि-
हामुत्रोपाधिनैराश्येनैवामुष्यात्मनः कल्पनमेतदेव नैष्कर्म्यमिति ।

१५ एतदत्र विचार्यते । मन्त्रावृत्तितदधिष्ठातृरूपध्यानादेरमृतत्वं फल-
मुच्यते। भजनस्वरूपं च यावत्फलनैराश्येन भगवत्यात्मनः कल्पनमि-
त्युच्यते । न च फलनैराश्येन भजनेप्यन्ते मुक्तिरेव भवित्रीति वाच्यम् । तं
यथा यथोपासते तथैव भवति तद्धैतान्भूत्वावति । इति श्रुतेर्मुक्तिसाधन-
त्वेन ज्ञात्वा भजतः सैव फलम् । स्वरूपस्यैव स्वतन्त्रपुरुषार्थत्वमनुभवन्
२० यो भजते तस्य तदेव फलमिति यतो निर्णयः संपद्यते । ये यथा मां
प्रपद्यन्ते तांस्तथैव भजाम्यहम् ( भ. गी. ४।११ ) इति भगवद्वाक्याच्च ।
अत एव रहस्यभजनं लक्ष्यमुक्तम् । तथा च श्रौतत्वभगवत्संबन्धित्वयो-
रविशेषात् कतमो गरीयानिति संशये गूढाभिसंधिः पठति । मुमुक्षोः
सकाशाद्रहस्यभजनकर्तैवोपपन्नः उपपत्तियुक्तः । तमेवोद्घाटयति तल्लक्ष-
२५ णार्थोपलब्धेरिति । तल्लक्षणो भगवत्स्वरूपात्मको योऽर्थः स्वतन्त्रपुरुषार्थरूप-

स्तदुपलब्धेः । स्वाधीनत्वेन तत्प्राप्तेरित्यर्थः । यद्यपि पुरुषोत्तमे प्रवेशे तदानन्दानुभवो भवति तथापि न प्रभोस्तदधीनत्वम् । भक्तितिरोभावात् । प्रत्युत वैपरीत्यम् । भजनानन्दस्य तत आधिक्यं तु—मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम् (भा. ५।६।१८) दीयमानं न गृह्णन्ति विना मत्सेवनं ५ जनाः (भा. ३।२९।१३) नारायणपराः (भा. ६।१७।२८) इत्युपक्रम्य स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन इत्यादिवाक्यैरध्यवसीयते । अत एव सामीप्यवाच्युपसर्ग उक्तः । तेन दासीत्वेन दासत्वेन लीलायां सुहृत्त्वेन प्रभुनिकटे स्थितिरुक्ता भवति । न च महत्पदार्थस्वरूपाज्ञानादल्प एवानन्दे यथा सर्वाधिक्यं मन्वानः पूर्वोक्तं न वाञ्छति तथात्रापीति वाच्यम् । १० दीयमानानामर्थानां स्वरूपाज्ञानासंभवात् । अनुभवविषयीक्रियमाणत्वस्यैवात्र दीयमानपदार्थत्वात् । तदज्ञाने स्वर्गादित्रये तुल्यदर्शित्वासंभवश्च । मुक्तिं ददाति कर्हिचित् स्म न भक्तियोगम् ( भा. ५।६।१८ ) इति वाक्ये भक्तेराधिक्यं स्पष्टमेवोच्यते । तस्मान्न्यूनार्थजिघृक्षोः सकाशात्पूर्णार्थवान् महानिति युक्तमेवास्योपपन्नत्वम् । इममेवार्थं दृष्टान्तेनाह । लोक- १५ वादिति । यथा स्वाधीनभर्तृका नायिका तदवस्थाननुगुणगृहवित्तादिकं दीयमानमपि नोरीकरोति तथेत्यर्थः ।

अथवा स भगवानेव लक्षणमसाधारणो धर्मो यस्य स तल्लक्षण उद्भटभक्तिभावः स एवार्थः स्वतन्त्रपुरुषार्थरूप इत्यग्रे पूर्ववत् । भगवत्प्राकट्यवानेव हि भक्तो भक्तत्वेन ज्ञायत इति तथा । एतेन ज्ञाप्यं हि २० ज्ञापकादधिकं भवति । एवं सति यज्ज्ञापकं परमकाष्ठापन्नं वस्तु पुरुषोत्तमस्वरूपं सर्वफलरूपं तन्महत्त्वं कथं वक्तुं शक्यमिति सूच्यते ॥ ३।३।३० ॥ ८ ॥

---

## ९ अनियमाधिकरणम् ।

### अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३।३।३१॥ ॥

२५

अथर्वणोपनिषत्सु पठ्यते । परब्रह्मैतद्यो धारयति रसति भज

ध्यायते प्रेमति शृणोति श्रावयत्युपदिशत्याचरति सोमृतो भवति सोमृता भवति ( गो. पू. ता. १ ) इति। तत्र धारणादीनां समुदितानामेवामृतसाधकत्वमुत प्रत्येकमपीति भवति संशयः । अत्र धारणादिसाधनकलापमुक्त्वा फलमुच्यत इति समुदितानामेव मुक्तिसाधकत्वम् । उपलक्षणं
५ चैतच्छ्रवणादिनवविधभक्तीनामप्येवमेव तथात्वमिति पूर्वपक्षे सिद्धान्तमाह। अनियम इति । समुदितानामेव तेषां फलसाधकत्वमिति नियमो नास्तीत्यर्थः । अत्रोपपत्तिमाह । सर्वासामविरोध इति । चिन्तयंश्चेतसा कृष्णं मुक्तो भवति संसृतेः ( गो. पू. ता. २ ) इति श्रुत्या चिन्तनमात्रस्य तथात्वमुच्यते । पञ्चपदीं जपन् इत्याद्युक्त्वा ब्रह्म संपद्यते ब्रह्म
१० संपद्यते ( गो. पू. ता. २ ) इति श्रुत्या कीर्तनमात्रस्य तथात्वमुच्यते । तथा च प्रत्येकपक्ष एव सर्वासां श्रुतीनामविरोधः स्यात् । एवं सति परब्रह्मैतद्यो धारयतीत्यादिषु सोमृतो भवतीति पदं प्रत्येकं संबध्यत इति ज्ञेयम् । ननु यथा दण्डादीनां प्रत्येकं घटहेतुत्वोक्तावपि नैकस्यैव तज्जनकत्वमेवमत्राप्येकैकस्य चिन्तनादेस्तथात्वोक्तावपि फलसाधकत्वं
१५ समुदितानामेव तेषामिति चेत् । मैवम् । योर्थो यत्प्रमाणैकसमाधिगम्यः स तेन प्रमाणेन यथा सिध्यति तथा मन्तव्यः । दण्डादेस्तथात्वं प्रत्यक्षेण गृह्यत इति तत्र तथास्तु । प्रकृते तु तेषां तथात्वमलौकिकशब्दसमाधिगम्यम् । श्रुतिस्तूक्तैव । न चोक्तन्यायः श्रुतिष्वपि तात्पर्यनिर्णायको भवतीति वाच्यम् । अलौकिकेर्थे लौकिकस्यासामर्थ्यात् । अन्यथा ब्रह्मणा
२० मनसैव प्रजाजनने निषेकादिकमपि कल्प्येत । स्मृतिरपि—केवलेन हि भावेन गोप्यो गावः खगा मृगाः । येन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा ॥ ( भा. ११।१२।८ ) एतावान् सांख्ययोगाभ्याम्—इत्युपक्रम्यान्ते नारायणस्मृतिरित्यादिरूपैवमेवाह । इममेवार्थं हृदि कृत्वाह सूत्रकारः । शब्दानुमानाभ्यामिति । श्रुतिस्मृतिभ्यामित्यर्थः । ते चोक्ते ।
२५ एतेन सूत्रकारस्यान्योप्यनुशयोस्तीति भाति । यत्रोक्तसाधनस्तोमसंपत्तिरेकस्मिन् भक्तेस्ति तत्रैकेनैव मुक्तावितरसाधनत्वबोधकश्रुतिविरोधाच्छ्रवण-

---

7 –A and C read तत्र for अत्र ।

कीर्तनस्मरणानां भुक्त्यव्यवहितपूर्वक्षणे युगपदपि संभवादन्यथासिद्धि-
संभवे विनिगमकाभावादेकेनैव मुक्तिरिति न नियमोतः प्रत्येकसाधकत्व-
बोधिकानां सर्वासां श्रुतीनां मिथो विरोधः । तर्ह्येकत्र तथात्वे सर्वत्रैव
तथास्त्वित्याशङ्क्य बाधकमाह । शब्दानुमानाभ्यामिति । पूर्ववत्तत्र प्रत्ये-
५ कमपि मुक्तिहेतुत्वमुच्यत इति न तथेत्यर्थः । यत्र प्रत्येकमपि तथात्वं
तत्र किमु वक्तव्यं समुदितानां तथात्व इति भावः । तेन श्लिष्टः प्रयोगो-
यामिति ज्ञेयम् ॥ ३।३।३१ ॥ ९ ॥

---

## १० आधिकारिकाधिकरणम् ।

### यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३।३।३२ ॥

१० पूर्वं मुमुक्षुभिर्मुक्तिसाधनत्वेन क्रियमाणानां भगवद्धर्माणां मुक्ति-
साधनप्रकारो विचारितः । अधुना तु भगवान् स्वविचारितकार्यं लौकिकै-
श्वर्याद्यशक्यं ज्ञात्वा स्वैश्वर्यादिकं दत्त्वा येन जीवेन तत्कारयति स
जीवस्तैर्धर्मैर्मुक्तो भवति न वेति विचार्यते । तत्र जीवकृतभगवद्विषयक-
धर्माणां यत्र तत्साधकत्वं तत्र भगवदीयानां धर्माणां तत्साधकत्वं सुतरा-
१५ मेव । तेषां स्वकृत्यसाध्यत्वेनाविधेयत्वात् तत्साधनेष्वप्रवेशोपीति संदेहे
निर्णयमाह । यावदित्यादि । यस्मिन् जीवे यत्कार्यसाधनार्थमधिकारो
भगवता दत्तस्तत्कार्यसाधनक्षमास्तास्मिन् ये स्वधर्मा भगवता स्थापितास्त
आधिकारिका इत्युच्यन्ते । तत्कार्यसंपत्तिरेव तदधिकारप्रयोजनमिति
तावदेव तेषां तास्मिन् स्थितिरित्यर्थः । एवं सति तत्संपत्तौ सोपि निवर्तत
२० इति तत्संबन्धिनो धर्मा अपि निवर्तन्त इति मुक्तिपर्यन्तं न तेषां व्यापार-
संभवो भगवता तथैव विचारितत्वान्मुक्तिस्तु भक्त्यैवेति भावः । यच्च—
ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति
परं पदम् ॥ इति वाक्यं तत्त्वाकल्पान्तं येषामधिकारः सप्त-
र्षिप्रभृतीनां तद्विषयकमिति ज्ञेयम् । अन्यथा भगवद्दत्ताधिकारसामर्थ्यस्य
२५ भरतस्य स्वाधिकारसमाप्तौ मुक्तिं न वदेत् । कृतात्मान इति पदात्तेषा-

भपि भगवति कृतान्तःकरणानामेव परस्य भगवतः परपदे व्यापिवैकुण्ठे प्रवेश उच्यते न त्वाधिकारिकगुणैः ॥ ३।३।३२ ॥ १० ॥

---

## ११ अक्षरधियामित्यधिकरणम् ।

## अक्षराधियां त्ववरोधः सामान्यतस्तद्भावाभावाभ्यामौपासन- ५ वत्तदुक्तम् ॥ ३।३।३३ ॥

ननूक्ताथर्वणोपनिषद्वाक्यैर्भगवद्धर्माणां मुक्तिसाधनत्वमुच्यते । श्रुत्यन्तरेषु—तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेयनाय (श्वे. ३।८) ज्ञानादेव तु कैवल्यम् । तरति शोकमात्मवित् (छां. ७।१।३) ब्रह्मविद्ब्रह्मैव भवति । इत्यादिषु ज्ञानस्यैव मुक्तिसाधन- १० त्वमुच्यते । श्रुतित्वाविशेषादुभयोस्तथात्वे कारणवैजात्ये कार्यवैजा- त्यस्यावश्यकत्वान्मुक्तौ च तदसंभवात्—भक्त्या मामभिजानाति (भ. गी. १८।५५) इति वाक्याद्भक्तौ ज्ञानस्यापि संभवाज्ज्ञानेनैव मुक्तिरिति पूर्वपक्षे ज्ञानसाधनत्वनिरूपकश्रुतितात्पर्यं निरूपयन् पुरुषोत्तम- प्राप्तेरेव मुक्तिपदवाच्यत्वात्तद्भजनस्यैव तत्प्रापकत्वामिति हृदि कृत्वाह । १५ अक्षरधियामित्यादि । तुशब्दः पूर्वपक्षनिरासे । वाजसनेयके श्रूयते । एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनणु (बृ. ३।८।८) इत्यादि । तथाथर्वणे च । अथ परा यया तदक्षरमधिगम्यते (मुं. १।१।५) इति तेन ज्ञानमार्गेऽक्षरविषयकाण्येव ज्ञानानि निरूप्यन्ते पुरुषोत्तमविषयकाणि नेति निश्चीयते । ब्रह्मविदाप्नोति परम् (तै. २।१) इति श्रुतावक्षरब्रह्म- २० विदोऽक्षरात्परस्य प्राप्तिरुच्यते । अक्षरादपि चोत्तमः (भ. गी. १५।१८) इति भगवद्वाक्याच्चाक्षरातीतः पुरुषोत्तमः । भक्त्या मामभिजानाति (भ. गी. १८।५५) इति वाक्ये मामिति पदात्पुरुषोत्तमविषयकं ज्ञानमु- च्यते न त्वक्षरविषयम् । किंच ब्रह्मभूतस्य भक्तिलाभोक्तेस्तस्य चानन्दां- शाविर्भावात्मकत्वात्तस्य चाविद्यानाशजन्यत्वात्तस्य चाक्षरज्ञानजन्यत्वात् २५ पूर्वकक्षाविश्रान्तमेवाक्षरज्ञानम् । एवं सत्यक्षरविषयिणीनां धियां श्रुतौ

---

2—ख reads कक्ष for कक्षा ।

मुक्तिसाधनेषु योवरोधः प्रवेशनं गणनेति यावत् स सामान्यतद्भावाभ्यां हेतुभ्यां पुरुषोत्तमसंबन्धिसंबन्धे मुक्तिरिति सामान्यम् । मर्यादामार्गेङ्गीकृतानां—ब्रह्मभूतः प्रसन्नात्मा न शोचति न काङ्क्षति । समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम् ( भ. गी. १८।१४ ) इति वाक्याद् ब्रह्मभावान-
५ न्तरमेव भगवद्भावसंभवात्तेन पुरुषोत्तमे प्रवेशात्तत्र परम्परोपयोगो ब्रह्मभावस्येत्युभाभ्यां हेतुभ्यां तथेत्यर्थः । वस्तुतस्तु पुरुषोत्तमभक्तिरेव मुक्तिरिति भावः । नन्वक्षरस्याविशिष्टत्वेन तदुपासकानामपि तथात्वात् केषांचित्तत्रैव लयः । केषां चिद्भक्तिलाभ इति कथमुपपद्यत इत्याशङ्क्य तत्र हेतुं दृष्टान्तेनाह । औपसदवदिति । उपसदाख्यकर्माणि तानूनप्त्रस्पर्शा-
१० ख्यमौपसदं कर्मास्ति । तत्रातिथ्यायां ध्रौवात् स्रुचि चमसे वा यदाज्यं चतुरवत्तं वा समवद्यति तत्तानूनप्त्रमित्युच्यते । अनाधृष्टमसि ( तै. सं.- १।२।१० ) इति मन्त्रेण षोडशाप्यृत्विजो यजमानेन सह तानूनप्त्रं समवमृशान्ति—अनु मे दीक्षाम् ( तै. सं. १।२।१० ) इति मन्त्रेण यजमानस्तत्समवमृशन्—यमृत्विजं कामयेतायं यज्ञं यशसमृच्छेदिति तं प्रथम-
१५ मवमर्शयेत् ( आ. सू. ११।१।४ ) इति श्रूयते श्रुतौ कल्पे च । अत्र सर्वेषामृत्विजां तानूनप्त्राविशेषेपि यस्मिन् स्नेहातिशयेन तथेच्छा तत्रैव तथा कृतिर्नेतरेषु । न हि तत्राविशिष्टेषु कथमेवं कृतिरिति पर्यनुयोगः संभवत्येवमिहापीत्यर्थः । ननु श्रवणादेर्यथा पुरुषोत्तमसंबन्धित्वेन तत्प्राप्तिहेतुत्वमेवमक्षरस्याप्यस्त्वित्याशङ्का तु निखिलासुरजीवतमःपुञ्जनिरा-
२० सकेन यदुवंशोदयाचलचूडामणिनैव निरस्तेति न स्वतो वक्तुमुचितेत्याशयेनाह । तदुक्तमिति । भगवद्गीतास्विति शेषः । तत्र—यदक्षरं वेदविदो वदन्ति (भ.गी.८।११) इत्युपक्रम्य—स याति परमां गतिम् (भ. गी.८।१३) इत्यन्तेनाक्षरप्राप्त्युपायमुक्त्वा—अनन्यचेताः सततम् । (भ. गी. ८।१४) इत्यादिना स्वप्राप्त्युपायं वैलक्षण्यं चोक्त्वा भक्त्येकलभ्यत्वं स्वस्य वक्तुं
२५ पूर्वं क्षराक्षरयोः स्वरूपमाह । सहस्रयुगपर्यन्तम् (भ. गी.८।१७) इत्युपक्रम्य प्रभवत्यहरागमे ( भ. गी. ८।१८ ) इत्यन्तेन क्षरस्वरूपमुक्त्वा—परस्तस्मात्तु भावोन्यः ( भ. गी. ८।२० ) इत्युपक्रम्य—तद्धाम परमं मम

( भ. गी. ८।२१ ) इत्यन्तेनाक्षरस्वरूपमुक्तम् । अत्र पूर्वं क्षरस्वरूपमुक्तमिति—परस्तस्मात्तु ( भ. गी. ८।२० ) इत्यत्र क्षरादेव परत्वमुच्यते । तच्छब्दस्य पूर्वपरामर्शित्वात्तस्यैव पूर्वमुक्तत्वात् । अत एवाक्षरव्यावर्तकस्तुशब्द उक्तः । एतेन नित्यत्वेन क्षरणाभावादक्षरशब्देन जीव एवो-
५ च्यते न तु पुरुषोत्तमाधिष्ठानभूतो जीवातीत इति निरस्तम् । यं प्राप्य न निवर्तन्ते ( भ. गी. ८।२१ ) इति वाक्याज्जीवे तथात्वासंभवात् । नित्यमुक्तत्वापत्त्या शास्त्रवैफल्यापत्तेश्च । इत एव ज्ञानमार्गिणां तत्प्राप्तिरेव मुक्तिरिति ज्ञेयम् । ततोनिवृत्तेः । पुरुषः स परः पार्थ ( भ. गी. ८।२२ ) इत्यनेनाक्षरात्परस्य स्वस्य भक्त्येकलभ्यत्वमुक्तम् । तेन ज्ञान-
१० मार्गीयाणां न पुरुषोत्तमप्राप्तिरिति सिद्धम् । यस्यान्तःस्थानीत्यनेन परस्य लक्षणमुक्तम् । तच्च मृत्सादिप्रसंगे श्रीगोकुलेश्वरे स्पष्टमुच्यते । तेनाक्षरोपासकानां न पुरुषोत्तमोपासकत्वम् । तद्विषयकश्रवणादेरभावादिति भावः । अव्यक्तोक्षर इत्युक्तस्तमाहुः परमां गतिम् ( भ. गी. ८।२१ ) इति वाक्यात्—स याति परमां गतिम् ( भ. गी. ८।१३ )
१५ इत्यत्राक्षरमेव यातीत्यर्थो ज्ञेयः । किंच । तैत्तिरीयोपनिषत्सु पठ्यते । यस्मिन्निदं सं च विचैति सर्वं यस्मिन्देवा अधिविश्वे निषेदुः । तदेव भूतं तदु भव्यमा इदं तदक्षरे परमे व्योमन् । येनावृतं खं च दिवं महीं च येनादित्यस्तपति तेजसा भ्राजसा च । यमन्तः समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः ( तै. सं. १०।१।१ ) इति । अत्राक्षरात्मकत्वेन
२० क्षरात्मकादाकाशात् परमे व्योम्नि भक्तानां हृदयाकाश इति यावत् । तत्र प्रकाशमानमित्यर्थात् । अत एव—ब्रह्मविदाप्नोति परम् ( तै. २।१ ) इत्युपक्रम्य—सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् ( तै. २।१ ) इत्येतदुपनिषत्स्वेव पठ्यते । यदक्षरे परमे प्रजा इति पदमवयन्ति इत्यनेन संबध्यते । अत्र प्रजापदाद्व्यापिवैकुण्ठात्मको लोको-
२५ क्षरपदेनोच्यत इत्यवगम्यते । अत एव—न यत्र माया ( भा. २।९।१० ) इत्यादिना श्रीभागवते तत्स्वरूपमुच्यते । एतेनाक्षरस्य पुरुषोत्तमाधिष्ठानत्वं निश्चीयते । इतोऽप्यक्षरातीतः पुरुषोत्तम इत्यवगम्यते । एवं सति सामान्यं

भगवद्विभूतिरूपत्वं तद्भावस्तस्य पुरुषोत्तमस्य भावः सत्ता। उक्तरीत्या तत्र स्थितिरिति यावत्। ताभ्यां हेतुभ्यां तथेत्यप्यर्थो ज्ञेयः॥ ३।३।३३॥

## इयदामननात्॥ ३।३।३४॥

ननु संसारनिवृत्त्यानन्दाविर्भावयोरविशेषादक्षरे ब्रह्मणि लये पुरु- ५ षोत्तमे प्रवेशान्न्यूनतोक्तौ को हेतुरित्याकाङ्क्षायामाह। इयदिति परिमाणवचनम्। तस्य श्रुतौ कथनादित्यर्थः। अत्रेदं ज्ञेयम्। तैत्तिरीयोपनिषत्सु—सैषानन्दस्य मीमाꣳसा भवति (तै. २।८) इत्युपक्रम्य मानुषमानन्दमेकं गणयित्वा तस्मादुत्तरोत्तरं शतगुणमानन्दं गन्धर्वानारभ्य प्रजापतिपर्यन्तस्योक्त्वोच्यते। ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण १० आनन्दः (तै. २।८) इति। एवं सतीयत एतावदक्षरानन्दस्य सावधिकत्वेन श्रुतौ कथनादानन्दमयत्वेन निरवध्यानन्दात्मकत्वस्य पुरुषोत्तमे कथनात्तथोक्तिरिति॥ ३।३।३४॥ ११॥

---

## १२ अन्तरा भूतग्रामवदित्यधिकरणम्।

## अन्तरा भूतग्रामवत्स्वात्मनः॥ ३।३।३५॥

१५ अथ ज्ञानमार्गे यथा स्वात्मत्वेन ब्रह्मणो ज्ञानं तथा भक्तिमार्गेपि। भक्त्या पुरुषोत्तमज्ञाने स्वात्मत्वेन पुरुषोत्तमज्ञानं भवति न वेति विचार्यते। सर्वान्तरत्वेन श्रुतौ कथनात्तद्भवतीति पूर्वः पक्षः। तथात्वेपि—सर्वस्य वशी सर्वस्येशानः (बृ. ४।४।२२) इत्यादिश्रुतिभिरेवमेव ज्ञानम्। न तु तथेति सिद्धान्तः। अत्र तथा ज्ञानाभावस्यावश्यकत्वार्थं विपरीते बाधकमाह। २० पूर्वस्मिन्सूत्रे ब्रह्मानन्दाद्भजनानन्दस्याधिक्यं निरूपितम्। स तु भगवद्दत्तस्तद्व्यवधायकोर्थश्च प्रभुणा न संपाद्यते। स्वात्मत्वेन ज्ञानं च भजनानन्दान्तरायरूपम्। यद्येतत्संपादयेत्तं न दद्यादग्रेन्यथाभावादतः स्वात्मत्वेन ज्ञानं भक्तिमार्गीयस्य न संभवतीत्याशयेनाह। अन्तरा स्वात्मन इति।

---

10–A and C read सावधित्वेन for सावधिकत्वेन।

भगवता भक्तिमार्गे स्वीयत्वेनाङ्गीकृतो य आत्मा जीवस्तस्य यदात्मत्वेन ज्ञानं तद्भजनानन्दानुभवेन्तरा व्यवधानरूपमिति भगवता तादृशे जीवे तन्न संपाद्यत इत्यर्थः । तत्संपादनस्य सर्वथैवासंभावितत्वं हीनत्वं च ज्ञापयितुं दृष्टान्तमाह । भूतग्रामवदिति । उक्तभक्तस्य विग्रहोप्यलौकिक
५ इति तत्र लौकिको भूतग्रामो न संभवति । हीनत्वात्तथेत्यर्थः । अथवा लौकिको भूतग्रामः स्त्रीपुत्रपश्वादिर्ब्रह्मानन्दानुभवे बाधकस्तथा भजनानन्दानुभवे स्वात्मत्वेन भगवज्ज्ञानमित्यर्थः ॥ ३।३।३५ ॥

## अन्यथाभेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३।३।३६ ॥

ननु भक्तेष्वप्युद्धवादिषु ज्ञानोपदेशः श्रूयते । स चात्मब्रह्माभेद-
१० ज्ञानफलक इत्यात्मत्वेन ज्ञानाभावे तदभेदोपदेशानुपपत्तिः स्यादिति तन्मन्तव्यमेव । एवं सति भक्तिमार्गाज्ज्ञानमार्गस्योत्कर्षश्च सिध्यतीत्याशङ्क्य परिहरति । उपदेशान्तरवदिति । न ह्यभेदज्ञानायोपदेशः किंतु यथाग्निमस्वर्गापवर्गाख्यपारलौकिकानन्दफलकालौकिके कर्मण्यधिकाररूपसंस्कारार्थं गायत्र्युपदेशः क्रियते तत्संस्कारसंस्कृतं तच्छरीरादिकमपि भूतादि-
१५ भिरपि नोपहतं भवति । यथा वा योगोपदेशसंस्कृतस्य वपुरग्न्यादिभिर्नोपहन्यते तथा प्रकृते भक्तिभावस्य रसात्मकत्वेन संयोगविप्रयोगभावात्मकत्वाद् द्वितीयस्य प्रलयानलादतिकरालत्वेन कदाचित्तद्भावोदये तेन भक्तवपुरादेस्तिरोधानेग्रिमभजनानन्दानुभवप्रतिबन्धः स्यादिति तन्निवृत्त्यर्थं ज्ञानोपदेशसंस्कारसंस्कृतं तद्वपुरादिकं भगवता क्रियते । न त्वात्माभेद-
२० ज्ञानं भगवतोभिप्रेतमित्यर्थः । अन्यथोपदेशानन्तरं बदरीं गच्छन् विदुरं प्रति—इहागतोहं विरहातुरात्मा ( भा. ३।४।२० ) इति न वदेत् । एवमेवान्येष्वपि भक्तेषु ज्ञेयम् । अत्रोपदेशान्तरपदं प्रस्तुतोपदेशभिन्नमुपदेशान्तरमाहेति प्रस्तुतस्य तस्यान्यस्याभावादभेदपदेनाभेदोपदेश एवोच्यते । एतेन भगवान् स्वीयानां भक्तिभावप्रतिबन्धनि-
२५ रासायैव सर्वं करोतीति ज्ञापितं भवति । अथवोपदेशान्तरवदित्यस्यायमर्थः । शरीराद्यध्यासवतस्तद्भिन्न आत्मा तत्त्वं न तु शरीरादिरित्युपदेशो ज्ञानमार्गे यथा क्रियते तेन शरीरादावात्मबुद्ध्या यः स्नेहादिः सोपगच्छति ।

तथात्र सर्वेषामात्मनो ह्यात्मा । य आत्मनि तिष्ठन् इत्यादि-
श्रुतिसिद्धो जीवात्मनोप्यात्मा पुरुषोत्तम इति बोध्यते। तेन पुरुषोत्तमे
निरुपधिः स्नेहस्तत्संबन्धित्वेनात्मनि स सिध्यति । यद्यप्येवं भावः पूर्वम-
प्यासीदेव । तथापि सहजस्य शास्त्रार्थत्वेन ज्ञानेतिप्रमोदो दार्ढ्यं च
५ भवतीति तथा । नैतावता जीवभेद आयाति । अग्रे जीवनसंपत्तिरेवोपदे-
शकार्यं न तु तेन पूर्वभावोपमर्दः संभवतीति सारम् । तेन ज्ञाने सर्वा-
धिक्यं मन्वानाय भक्तिबलप्रदर्शनं च सिध्यति ॥ ३।३।३६ ॥

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३।३।३७ ॥

ननु—तयोहं सोसौ योसौ सोहम् ( ऐ. आ. २।१२।२) इत्यैतरे-
१० यके तैत्तिरीयके च—अहमस्मि ब्रह्माहमस्मि ( म. ना. ५।१० ) इति
पठ्यते । अत्र मध्यस्थं ब्रह्मपदमुभयत्र संबध्यते। तेनावृत्त्या व्यतिहारोतो
ब्रह्माभेदः सिध्यति । तथा लीलामध्यपातिभक्तानामपि—कृष्णोहमहं
कृष्णः इति भाव उल्लेखश्च श्रूयते । अतस्तदभेदज्ञानं भक्तिफल-
मिति पम्फुल्यमानं प्रतिवादिनं तत्स्वरूपं बोधयति । रसात्मक-
१५ त्वाद्भक्तेः संयोगविप्रयोगात्मकत्वाद् द्वितीयभावोद्रेके यथेतरेश्रुप्रला-
पादयो व्यभिचारिभावास्तथातिविगाढभावेन तदभेदस्फूर्तिरप्येकः स च
न सार्वदिकस्तदा स्वात्मानं तत्त्वेन विशिंषन्ति तं च स्वात्मत्वेन । सोत्र
व्यतिहारपदार्थ इत्यर्थः । अपरं च । उद्देश्यविधेयभावस्फूर्तौ न ह्यद्वैत-
ज्ञानमस्ति किंतु भावनामात्रं भक्तानां तु विरहभावे तदात्मकत्वमेवाखण्डं
२० स्फुरति येन तल्लीलां स्वतः कुर्वन्त्येतद्यथा तथा श्रीभागवतदशमस्कन्ध-
विवृतौ प्रपञ्चितमस्माभिः । एवं सति मुख्यं यदद्वैतज्ञानं तद्भक्तिभावैक-
देशव्यभिचारिभावेष्वेकतरदिति सर्षपस्वर्णाचलयोरिव ज्ञानभक्त्योस्तार-
तम्यं कथं वर्णनीयमिति भावः ॥ ३।३।३७ ॥ १२ ॥

---

11–ख reads व्यतिहारतो for व्यतिहारोतो ।

13–C reads उन्मेषश्च for उल्लेखश्च ।

20–C reads तत्तल्लीलां for तल्लीलां ।

## १३ सैव हीत्यधिकरणम् ।

## सैव हि सत्यादयः ॥ ३।३।३८ ॥

अथेदं विचार्यते । प्राप्तभक्तेः पुरुषस्य सत्यशमदमादयो विधीयन्ते न वेति । फलोपकार्यन्तरङ्गसाधनत्वाच्छुद्धौ सत्यामेव चित्ते भगवत्प्रा-
५ दुर्भावसंभवाद्विधीयन्त इति पूर्वः पक्षः । तादृशस्य ते न विधीयन्त इति सिद्धान्तः । तत्र हेतुमाह । हि यस्माद्धेतोः सैव भक्तिरेव सत्यादिसर्व-साधनरूपा । तस्यां सत्यां सत्यादयो ये ज्ञानमार्गे विहितत्वात् कष्टेन क्रियन्ते मुमुक्षुभिस्ते भक्तहृदि भगवत्प्रादुर्भावात् स्वत एव भवन्तीति न विधिमपेक्षन्त इत्यर्थः ॥ ३।३।३८ ॥

## १० कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३।३।३९ ॥

पूर्वसूत्रे शास्त्रोक्ताखिलसाधनरूपत्वं भक्तेरुक्तम् । तद्दाढर्यार्थमधुना मुक्तिप्रतिबन्धकत्वेन हेयत्वेनोक्तानां कामादीनामपि भगवत्संबन्धान्मुक्ति-साधकत्वमुच्यते । भक्तिस्तु विहिताविहिता चेति द्विविधा । माहात्म्यज्ञान-युतेश्वरत्वेन प्रभौ निरुपधिस्नेहात्मिका विहिता । अन्यतोप्राप्तत्वात्कामाद्यु-
१५ पाधिजा सा त्वविहिता एवमुभयविधाया अपि तस्या मुक्तिसाधकत्वमि-त्याह । इतरत्र विहितभक्तेरिति शेषः । कामाद्युपाधिजस्नेहरूपायां कामा-द्येव मुक्तिसाधनमित्यर्थः । भगवति चित्तप्रवेशहेतुत्वात् । आदिपदात् पुत्रत्वसंबन्धित्वादयः। स्नेहत्वाभावेप्यविहितत्वभगवद्विषयकत्वयोरविशेषाद् द्वेषादिरपि संगृह्यते । तेन भगवत्संबन्धमात्रस्य मोक्षसाधकत्वमुक्तं भवति
२० तत्र विहितभक्तावित्यर्थः । शास्त्रे सर्वथा हेयत्वेनोक्ता गृहाः । सर्वनिवे-दनपूर्वकं गृहेषु भगवत्सेवां कुर्वतां तदुपयोगित्वेन तेभ्य एव मुक्तिर्भवती-त्यर्थः । एतादृशानां गृहा भगवद्गृहा एवेति ज्ञापनायायतनपदम् । तेषु तथा प्रयोगप्राचुर्यात् । आदिपदेन स्त्रीपुत्रपश्वादयः संगृह्यन्ते । एतेन ज्ञाना-दिमार्गादुत्कर्ष उक्तो भवति । बाधकानामपि साधकत्वात् । माहात्म्यज्ञा-
२५ नपूर्वकस्नेहे सत्येव भर्तृत्वेन ज्ञाने कामोपि संभवतीति ज्ञापनाय चकारः ॥ ३।३।३९ ॥ १३ ॥

# १४ आदराधिकरणम् ।

## आदरादलोपः ॥ ३।३।४० ॥

ननु नित्यानां वर्णाश्रमधर्माणां भगवद्धर्माणां चैककाले प्राप्तौ युगपदुभयोः करणासंभवादन्यतरबाधे प्राप्ते कस्य स्यान्न कस्येति स्यात्सं-
५ शयः। तत्र कर्मणां स्वस्वकाले विहितानामकरणे प्रत्यवायश्रवणादितरत्रातथाश्रवणाद् अन्यदापि तत्कृतिसंभवात् सावकाशत्वेन तेषामेव बाधो युक्तो न तु निरवकाशानामिति पूर्वः पक्षः । तत्र सिद्धान्तमाह । आदरादिति । ब्रह्मयज्ञप्रकरणे तैत्तिरीये पठ्यते । ॐ इति प्रतिपद्यत एतद्वै यजुस्त्रयीं विद्यां प्रत्येषा वागेतत्परममक्षरं तदेतदृचाभ्युक्तमृचो अक्षरे परमे
१० व्योमन् यस्मिन् देवा अधिविश्वे निषेदुर्यस्तन्न वेद किमृचा करिष्यति य इत्तद्विदुस्त इमे समासते ( श्वे. ४।८ ) इति । अत्र ऋक् संबन्धित्वेन वर्णात्मके । वस्तुतस्तु परमव्योमात्मके अक्षरे ब्रह्मण्योङ्कारे वर्तमानं तल्लोकवेदप्रसिद्धं परं ब्रह्म यो न वेद किमृचा करिष्यतीत्यनेन तदज्ञाने वेदाध्ययनस्य निष्फलत्वमुच्यते। एवं सति तदुक्तकर्मणोपि तथात्वमा-
१५ याति । एतेन—भक्त्या मामभिजानाति ( भ. गी. १८।५५ ) इति वाक्यात् परब्रह्मस्वरूपज्ञानं भक्त्यैवेति भक्ताः सन्तः पुरुषोत्तमविदो ये तेषामेव वेदाध्ययनादिकं फलप्रदं नान्येषामित्युक्तं भवति । अत एव श्रीभागवतेप्युक्तम्—ऋषयोपि देव युष्मत्प्रसंगविमुखा इह संसरान्ति (भा. ३।९।१०) इति वा अन्वये निदर्शनम् । य इत् ईश्वरत्वेन तत्पूर्वोक्तं परं ब्रह्म
२० विदुस्त इमे भक्ताः सर्वापेक्षया सम्यक् प्रकारेण भगवन्निकटे श्रीगोकुलवैकुण्ठादिष्वासत इति। तेनान्येषां सम्यगसत्त्वमर्थाक्षिप्तं भवति । पुरःस्थितार्थवाचीदंशब्दप्रयोगेण चान्येषामसत्तुल्यत्वं श्रुतेरभिमतमिति ज्ञायते। ऋक्शाखायामपि—तमु स्तोतारः पूर्व्यं यथाविद ऋतस्य गर्भं जनुषा पिपर्तन । आस्य जानन्तो नाम चिद्विविक्तन महस्ते विष्णो सुमतिं भजामहे
२५ ( ऋ. २।२।२६ ) इत्यादृग्भिरन्येभ्यो धर्मेभ्यः सकाशाद् भगवद्धर्मेष्वादरः श्रूयते । इति तेषामलोप एवेत्यर्थः । एतेनाकरणे प्रत्यवायश्रवणादित्यादि

---

12–C reads परमे for परम ।

यदुक्तं तदपि प्रत्युक्तं वेदितव्यम् । करणेपि वैयर्थ्यात्तदपरिहारात् । एवं सति यदकरणे प्रत्यवायकथनं तेन तस्मादत्रकाशं प्राप्य गौणकालेप्यकरणे तथेति तस्याशय इति ज्ञायते ॥ ३।३।४० ॥

नन्वेवंतात्पर्यकत्वे श्रुतेरुपनयनादिवत्कर्मोपयोगित्वं भक्तितज्ज्ञा-
५ नयोः स्यादिति कर्मण एव प्राधान्यं न तु भक्तेः सिध्यतीत्याशङ्क्य भक्तितज्ज्ञानावश्यकत्वप्रबोधकश्रुतितात्पर्यमाह ।

## उपस्थितेतस्तद्वचनात् ॥ ३।३।४१ ॥

तयोर्युगपत्करणेनुपस्थितेपि यदि पूर्वं भगवद्धर्मकरणमुच्येत तदा त्वदुक्तं स्यान्न त्वेवं किंतूभयोर्युगपत्करण उपस्थिते बलाबलविचारे क्रिय-
१० माणेत आदराद्धेतोस्तद्वचनाद्भगवद्धर्माणां बलवत्त्वेनालोपवचनान्न कर्माङ्गत्वमेतेषां सिध्यतीत्यर्थः ॥ ३।३।४१॥१४ ॥

---

## १५ तन्निर्धारणाधिकरणम् ।

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ॥ ३।३।४२ ॥

१५ अथेदं विचार्यते । पुरुषोत्तमविदः कर्म कर्तव्यं न वेति । तत्र मार्गत्रयफलात्मके तस्मिन् संपन्ने पुनस्तस्य स्वतोपुरुषार्थस्य करणमप्रयोजकमिति न कर्तव्यमेवेति पूर्वपक्षः । तत्र सिद्धान्तमाह । तन्निर्धारणेत्यादिना । अत्रेदमाकूतम् । भक्तिमार्गे हि मर्यादापुष्टिभेदेनास्ति द्वैविध्यम् । तत्र मर्यादायां पुष्टौ चैतादृशस्य न कर्मकरणं संभवति ।
२० अत एव तैत्तिरीयकोपनिषत्सु पठ्यते । आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन ( तै. २।४ ) इति । एतꣳ ह वाव न तपति किमहꣳ साधु नाकरवम् । किमहं पापमकरवम् इति ( तै. २।९ ) इति । श्रूयते चोभयविधानामपि कर्मकरणमम्बरीषोद्धवपाण्डवादीनाम् । एवं सत्युभयविधानां मध्ये मम कर्मकरणे प्रभोरिच्छास्तीति यो निर्धार-
२५ यति स करोति य एतद्विपरीतं स न करोति । यथा शुकजडादिः ।

एतन्निर्धारश्च भगवदधीनोतो भक्तेष्वपि तन्निर्धारणानियमोतः कर्म कर्तव्य-मेवातन्निर्धारणे त्वाधुनिकानाम् । एवं सतीच्छाज्ञानवता तत्संदेहवता च कर्म कर्तव्यमिति सिद्धम् । तत्रोभयोः फलं वदन्नादावाद्यस्याह । तद्दृष्टेः । तस्या भगवदिच्छाया दृष्टिर्ज्ञानं यस्य स तथा । तस्य जीवकृतकर्मफलात् ५ पृथग् भिन्नमीश्वरकृतकर्मणो यत्फलं वेदमर्यादारक्षा लोकसंग्रहश्च तत्फल-मित्यर्थः । हिशब्देन—सक्ताः कर्मण्यविद्वांसो यथा कुर्वन्ति भारत । कुर्याद्विद्वांस्तथासक्तश्चिकीर्षुर्लोकसंग्रहम् ( भ. गी. ३।२५ ) इति भग-वद्वाक्यरूपोपपत्तिः सूचिता । द्वितीयस्य मध्यमाधिकारात् कामसंगादि-जनितचित्तमालिन्येन भगवत्सांनिध्ये प्रतिबन्धः स्यात् । तन्निवृत्तिस्तत्कृ-१० तकर्मणः फलमित्यर्थः । अथवा पूर्वसूत्राभ्यां भगवद्धर्मकृतेरावश्यकत्वमु-क्तम् । सर्वात्मभाववतो—न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ( भा. ११।२०।३१ ) इति भगवद्वचनाद्विधेयाभावादसंभवाच्च कर्मज्ञान-योर्विहितभक्तेश्च करणं न संभवतीति तस्य किं फलमित्याकाङ्क्षापूरणाय तदनुवदति । तस्मिन्धर्मिण्येव न तु धर्मेष्वपि दृष्टिर्यस्य स तथा । दृष्टिप-१५ देन ज्ञानमात्रमुच्यते । तेनान्यविषयकदर्शनश्रवणादिज्ञानाभाव उक्तो भवति । एतादृशस्य प्रभुसंगममात्रमपेक्षितम् । तत्र भगवदुक्तस्वसंगमावधि-कस्य भक्तस्य संगमसमयनिर्धारो भवति । अतादृशस्य तस्य स नेति तन्निर्धारणानियमः । एतेन फलप्राप्तेः प्रागवस्थोक्ता भवति । फलस्वरूप-माह । पृथक्फलमिति । अस्यानिर्वचनीयत्वादनुभवैकवेद्यत्वान्मोक्षान्तं २० यत्फलं शास्त्र उक्तं तस्माद्भिन्नमित्युक्तम् । अन्यत्र हि धर्माणां साधनत्वं यत्र फलमेव साधनं तत्फलस्यानिर्वाच्यता युक्तैवेति हिशब्देनाह । ज्ञान-मोक्षादिना तद्भावाप्रतिबन्धश्च फलमित्यर्थः । प्रासंगिकमेतत्सूत्रम् ॥ ३।३।४२ ॥ १५ ॥

---

## १६ प्रदानवदित्यधिकरणम् ।

## प्रदानवदेव तदुक्तम् ॥ ३।३।४३ ॥

२५

---

25–ख reads हि for तदुक्तम् ।

अथेदं विचार्यते । सर्वात्मभावो विहितकर्मज्ञानभक्तिसाध्यो न वेति । तत्र पुराणे—तस्मात्त्वमुद्धवोत्सृज्य ( भा. ११।१२।१४ ) इत्युपक्रम्य—मामेकमेव शरणमात्मानं सर्वदेहिनाम् । याहि सर्वात्मभावेन यास्यसे ह्यकुतोभयम् ( भा. ११।१२।१५ ) इति वाक्ये मुक्त्यात्मकाकुतोभय-
५ साधनरूपशरणगमने प्रकारत्वेन सर्वात्मभावस्य कथनेन स्वप्रयत्नसाध्यत्वं गम्यते । अतः साधनसाध्य इति पूर्वः पक्षः । तत्र सिद्धान्तं वक्तुं तदुपदेशस्वरूपमाह । प्रदानवदिति । यद्ययं साधनोपदेशः स्यात् स्यात्तदा साधनत्वेन सर्वात्मभावेन शरणप्राप्तेः स्वकृतिसाध्यत्वं न त्वेवं किंतु तदुक्तं भगवदुक्तम् । प्रदानवत् । प्रकृष्टं दानं वरदानमिति यावत् । तद्वदेवेत्यर्थः।
१० वरेण हि स्वकृत्यसाध्यमपि सिध्यतीति । तथा शत्रुसंहारभयादिनापि शरणप्राप्तिर्भवति तत्र न तस्याः पुरुषार्थत्वं किंतु तन्निवृत्तेरेव । प्रकृतेपि सर्वात्मभावे स्वरूपप्राप्तिविलम्बासहिष्णुत्वेनात्यार्त्या स्वरूपातिरिक्तास्फूर्त्या तद्भावस्वाभाव्येन गुणगानादिसाधनेषु कृतेष्वप्यप्राप्तौ स्वाशक्यत्वं ज्ञात्वा प्रभुमेव शरणं गच्छत्येतच्च न स्वकृतिसाध्यमिति सुष्ठूक्तं प्रदानवदिति ।
१५ भक्तस्येप्सितोर्थो हि वरो भवति । सर्वात्मभावस्यानुभवैकवेद्यत्वेन पूर्वमज्ञानेनेप्सितत्वासंभवेपि स्वत एव कृपया दानमितिवदित्युक्तम् । अथवा सर्वात्मभावेन मां याहीति संबन्धः । यद्वा प्रदानवदित्यस्य पूर्ववदेव व्याकृतिः । तत्र साधनासाध्यत्वे प्रमाणमाह । तदुक्तमिति । नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन । यमेवैष वृणुते तेन लभ्यः
२० ( मुं. ३।२।३ ) इति श्रुत्या वरणातिरिक्तसाधनाप्राप्यत्वमुच्यत इति तत्तथैवेत्यर्थः ।

भगवदुक्ताकुतोभयपदस्य न मुक्तिरर्थः । किंतु यतो वाच इत्यादिनानन्दस्य स्वरूपमुक्त्वा—आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन ( तै. २।४ ) इति श्रुत्युक्तं यत्पूर्वोक्तं रसात्मकपुरुषोत्तमभजनानन्दानु-
२५ भवोत्तरकालीनमकुतोभयं तदर्थः ॥ ३।३।४३ ॥ १६ ॥

---

८—ख reads साध्यत्वेन for साधनत्वेन ।

## १७ लिङ्गभूयस्त्वाधिकरणम् ।

### लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ३।३।४४ ॥

ननु प्रतिबन्धककालादृष्टादिसद्भावेपि वरणकार्यं स्यादुत तन्निवृत्ताविति संशये प्रतिबन्धकाभावस्य सर्वत्र हेतुत्वात्तन्निवृत्तावेव तथेति ५ पूर्वपक्षे सिद्धान्तमाह । लिङ्गेत्यादिना । सामोपनिषत्सु नवमे प्रपाठके सनत्कुमारनारदसंवादे प्रथमत एव मुख्या ब्रह्मविद्योपदेशार्हा न भवतीति ज्ञात्वा सनत्कुमारो नारदाधिकारं च ज्ञातुं—यद्वेत्थ तेन मोपसीदं ( छां. ७।१।२ ) इत्युक्तो नारदः स्वयं विदितमृग्वेदादिसर्पदेवजनविद्यान्तमुक्त्वा—सोहं भगवो मन्त्रविदेवास्मि ( छां ७।१।३ ) इति स्वाधि- १० कारमुक्त्वाह—नात्मविच्छ्रुत ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोहं भगवः शोचामि तं मां भगवाञ्छोकस्य परं पारं तारयतु ( छां. ७।१।३ ) इति नारदेनोक्तः सनत्कुमारः पूर्वस्मात् पूर्वस्मात् भूयो वदेति पृष्टो भूयःपदमाधिकार्थकं नामवाङ्मनःसंकल्पचित्तध्यानविज्ञानबलान्नापस्तेजआकाशस्मराशाप्राणान् ब्रह्मत्वेनोपासनाविषयत्वेनोक्त्वा १५ प्राणोपासकस्यातिवादित्वं सत्यवादित्वेनोक्त्वा विजिज्ञासितव्यत्वेन सत्यविज्ञानमतिश्रद्धानिष्ठाकृतिसुखानि पूर्वपूर्वकारणत्वेनोत्तरोत्तराण्युक्त्वा सुखस्वरूपजिज्ञासायामाह । यो वै भूमा तत्सुखम् ( छां. ७।२३।१ ) इति भूम्नः स्वरूपजिज्ञासायामाह । यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा ( छां. ७।२४।१ ) इति । एतेन सर्वा- २० त्मभावस्वरूपमेवोक्तं भवति । तत्र विरहभावेतिविगाढभावेन सर्वत्र तदेव स्फुरतीति स एवाधस्तादित्यादिनोक्त्वा कदाचित् स्वस्मिन्नेव भगवत्त्वस्फूर्तिरपि भवतीत्यथाहंकारादेश इत्यादिना तामुक्त्वैतेषां व्यभिचारिभावत्वेनानियतत्वं ज्ञापयितुं पुनः सर्वत्र भगवत्स्फूर्तिमाहाथात आत्मादेश इत्यादिना । ततः संयोगभावे सति पूर्वभावेन सर्वोपमर्दिना स्वप्राणादि- २५ सर्वतिरोधानेनाग्रिमलीलानुपयोगित्वं न शङ्कनीयम् । यतो भगवत एव

13–A and C read आधिक्यार्थकं for अधिकार्थकं ।

सर्वसंपत्तिरित्याशयेन—तस्य ह वा एतस्यैवं पश्यतः ( छां. ७।२६।१ ) इत्युपक्रम्य—आत्मन एवेदꣳ सर्वम् ( छां. ७।२६।१ ) इत्युक्तवान् । ततः श्लोकैस्तद्भावस्वरूपमुक्त्वैतस्य मूलकारणमाह । आहारशुद्धावित्यादिना । प्राणपोषको ह्याहारस्तस्य सदोषत्वे तु न किंचित् सिध्यति । ५ एवं सति भगवदतिरिक्तस्य स्वतो निर्दोषत्वाभावाद्भगवानेव चेत्प्राणपोषको भवेत्तदा सर्वं संपद्यते । स च सर्वात्मभावे सत्येव भवति । स च तथा तद्वरणं विना न भवति । तच्चोक्तकार्यानुमेयमिति वरणालिङ्गं सर्वात्मभावस्तस्यैव भूयस्त्वात्सर्वतोधिकत्वात्तद्वरणमेव सर्वतः कालादेर्बलीय इत्यर्थः । यल्लिङ्गमेव सर्वतोधिकं तस्य तथात्वे किं वाच्यमिति कैमुतिकन्यायोपि १० सूचितः । ज्ञानमार्गीयज्ञानेन प्रतिबन्धशङ्कायामाह । तदपीति । उक्तमिति शेषः । अन्तरा भूतग्रामवत् स्वात्मनः ( ब्र. सू. ३।३।३५ ) इति सूत्रेण । तच्चोपपादितमस्माभिः ॥ ३।३।४४ ॥

## पूर्वविकल्पः प्रकरणात्स्यात् क्रिया-मानसवत् ॥ ३।३।४५ ॥

१५ तत्राह । नात्र वरणलिङ्गभूयस्त्वं निरूप्यते किंत्वात्मज्ञानप्रकारविशेष एव । तथाहि । पूर्वप्रपाठक आत्मना सहाभेदः सर्वस्य निरूपितः श्वेतकेतूपाख्यानेन । अग्रिमे च—सोहं भगवो मन्त्रविदेवास्मि नात्मवित् ( छां. ७।१।३ ) इत्यादिना नारदस्यात्मजिज्ञासैवोक्ता । एवं सत्युत्तरमपि तद्विषयकमेव भवितुमर्हत्यत आत्मप्रकरणत्वादुभयोः प्रपाठकयोः २० पूर्वस्मिन्यदभेद उक्तस्तस्यैव स्वरूपम्—आत्मन एवेदꣳ सर्वम् ( छां. ७।२६।१ ) इत्यन्तेनोक्तमिति पूर्वोक्तप्रकारादन्येन प्रकारेणात्माभेद एव सर्वस्योक्तः । तदेवाह । पूर्वस्य पूर्वप्रपाठकोक्तात्माभेदज्ञानस्य विकल्पः प्रकारभेद एवाग्रेपि निरूप्यते । तत्रोपपत्तिमाह । प्रकरणादिति । एतदूपपादितम् । अत्र सिद्धान्तिसंमतं दृष्टान्तमाह । तद् हृदयसंवादार्थम् ।

---

15–A, C and D अत्राह for तत्राह ।

21–ख om. एव before सर्वस्य ।

24–A and C reads सिद्धान्त for सिद्धान्ति ।

क्रियामानसवदिति । यथा पूजनप्रकरणे बाह्यतत्क्रियारूपमुच्यते। आन्तरं तु मनोव्यापाररूपमुच्यते। न ह्येतावतान्यतरस्य तद्भिन्नत्वं वक्तुं शक्यम्। प्रकरणाभेदात्तथेहापीत्यर्थः ॥ ३।३।४५ ॥

## अतिदेशाच्च ॥ ३।३।४६ ॥

५ नामरूपात्मकं हि जगत् । तत्पूर्वं सर्वशब्देनानूद्य तास्मिन् ब्रह्माभेदो निरूपितः । अग्रे तु ऋगादिविद्या अनूद्य नामात्मकब्रह्मत्वं तत्रातिदिश्यते। नामैवैतन्नामोपास्वेति। इतोपि हेतोर्ज्ञानप्रकारभेद एवाग्रे निरूप्यत इत्यर्थः॥ ३।३।४६ ॥

## विद्यैव तु निर्धारणात्॥ ३।३।४७॥

१० तुशब्दः पूर्वपक्षं व्यावर्तयाति । यदुक्तं सनत्कुमारनारदसंवाद आत्मज्ञानप्रकारविशेष एव निरूप्यत इति तन्न किंतु विद्यैव निरूप्यत इति। अत्रेदमाकूतम्। नायमात्मेति श्रुतिरितरसाधननिषेधपूर्वकं वरणस्य साधनमुक्त्वा वृतलभ्यत्वे हेतुं वदन् वरणविषयमप्याह। तस्यैष आत्मा वृणुते तनुं स्वाम् ( मुं. ३।२।३ ) इति। तस्य वृतस्यात्मन एष भगवाना-
१५ त्मात एव तत्तनूरूपः स जीवात्मा । तद्वरणस्यावश्यकत्वज्ञापनाय स्वामिति। सर्वो हि स्वकीयां तनुमात्मीयत्वेनात्मत्वेन च वृणुते । तद्वि-शिष्ट एव भोगान् भुङ्क्ते। अत एव तैत्तिरीयकोपनिषत्स्वपि—ब्रह्मविदा-प्नोति परम् ( तै. २।१ ) इति सामान्यतो ब्रह्मविदः परब्रह्मप्राप्तिमुक्त्वा-ग्रिमर्चा विशेषतो वदन्। सत्यं ज्ञानमनन्तं ब्रह्म (तै. २।१ ) इति ब्रह्म-
२० स्वरूपमुक्त्वा— यो वेद निहितं गुहायां परमे व्योमन्। सोश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चिता (तै. २।१ ) इत्युक्तम् । एतद्यथा तथानन्दमयाधिकरणे प्रपञ्चितमस्माभिः।

किंच पुरुषोत्तमलाभे हेतुभूतं तु भक्तिमार्गे यद्वरणं स्वीयत्वेनाङ्गी-काररूपं तदेव नत्वन्यादृशमपीति ज्ञापनायाग्रे वदति—नायमात्मा बलही—

3–ख and B read प्रकरणभेदात् for प्रकरणाभेदात्।
16–ख and A om. आत्मत्वेन before च।

नेन लभ्यः ( मुं. ३।२।३ ) इति। बलकार्यं हि प्रभुवशीकरणम्। तच्च-
अहं भक्तपराधीनः ( भा. ९।४।६३ ) वशे कुर्वन्ति मां भक्त्या (भा. ९।४।
६६ ) इत्यादिवाक्यैर्भक्त्यैवेति बलशब्देन भक्तिरुच्यते। अन्यथा पूर्ववाक्य
एवेतरनिषेधस्य कृतत्वात्पुनर्बलाभावानिषेधं न कुर्यात्। वरणमात्रस्य हेतु-
५ त्वमुक्त्या बलस्य तथात्वं च न वदेत्। एतादृशस्य हृदि भगवत्प्राकट्यं
भवतीत्याह। एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्म
धाम ( मुं. ३।२।४ ) इति। अस्यार्थस्त्वेष आत्मात्मनोप्यात्मा पुरुषोत्तमो
ब्रह्माक्षरब्रह्मात्मकं धाम विशत इति धामपदं पुरुषोत्तमस्याक्षरं ब्रह्म
सहजं स्थानमिति ज्ञापनार्थमुक्तमन्यथा न वदेत्। तेन तद्धृदये स्वस्था-
१० नमाविर्भावयित्वा स्वयं तत्र प्रकटीभवतीति ज्ञाप्यते। प्रकृते श्वेतकेतूपा-
ख्याने परोक्षवादेन ब्रह्माभेदबोधनेन पुरुषोत्तमाधिष्ठानत्वयोग्यता ज्ञाप्यते।
अग्रे तु न ह्येतावतैवाधिष्ठानात्मकाक्षराविर्भावो भवति पुरुषोत्तमस्य वा।
तथा सति ज्ञानिनां सर्वेषां परप्राप्तिः स्यान्न त्वेवं—भक्त्याहमेकया ग्राह्यः
( भा. ११।१४।२१ ) इत्यादिवाक्यैः। किंतु भगवदनुग्रहेण भक्तसंगेन
१५ च भक्तौ सत्यामिति ज्ञापनाय भक्त एव तद्बोधाधिकारीत्यपि ज्ञापयितुं
भक्तस्य नारदस्य भगवदावेशयुक्तस्य सनत्कुमारस्य च संवाद उक्तः।
तत्रात्मशब्देन पुरुषोत्तम उच्यते। भक्तिमार्गे तु निरुपधिस्नेहविषयः स
एव यतः। स तु सर्वात्मभावैकसमधिगम्य इति सर्वात्मभाव एव विद्या-
शब्देनोच्यते। परमकाष्ठापन्नं यद्वस्तु तदेव हि वेदान्तेषु मुख्यत्वेन प्रति-
२० पाद्यम्। अक्षरब्रह्मादिकं तु तद्विभूतिरूपत्वेन तदुपयोगित्वेन मध्यमाधि-
कारिफलत्वेन च प्रतिपाद्यते। तेन तत्र विद्याशब्दप्रयोग औपचारिकः।
सर्वात्मभाव एव मुख्यः। युक्तं चैतत्। अक्षरविषयिण्या विद्यायाः सका-
शात्तत उत्तमविषयिण्यास्तस्या उत्तमत्वम्।

एवं सति पूर्वप्रपाठकस्याक्षरप्रकरणत्वादुत्तरस्य पुरुषो-
२५ त्तमप्रकरणत्वात् त्वद्धेत्वासिद्धिश्चात उक्तन्यायेन विद्यैवाग्रिमप्रपाठके

10–ख reads ज्ञायते for ज्ञाप्यते।
25–C reads तद्धेत्वासिद्धि for त्वद्धेत्वासिद्धि।

निरूप्यते । न तु पूर्वोक्तात्मज्ञानप्रकारविशेषः । अत्र हेतुमाह । निर्धारणादिति । सुखं त्वेव विजिज्ञासितव्यम् ( छां. ७।२२।१ ) इत्युक्त्वा सुखस्वरूपमाह—यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्यः ( छां. ७।२३।१ ) इति । ५ अक्षरपर्यन्तं गणितानन्दत्वात्पुरुषोत्तमस्यैवानन्दमयत्वेन निरवधिसुखात्मकत्वात् स एव भूमा तस्यैव जिज्ञासितव्यत्वेन निर्धारणादित्यर्थः । भूम्नो लक्षणमग्र उच्यते । यत्र नान्यत् पश्यति ( छां. ७।२४।१ ) इत्यादिना । यस्मिन् ज्ञाते सति नान्यत्पश्यतीत्यर्थः । तथा सति सर्वात्मभाववतः प्रभुदर्शने सत्यपि लीलोपयोगिवस्तुदर्शनादिकमनुपपन्नमिति १० शङ्का तु—तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मनः प्राणाः ( छां. ७।२६।१ ) इत्यादिना निरस्ता वेदितव्या । तैः सह लीलां चिकीर्षतः प्रभुत एव सर्वं संपद्यते नतु भक्तसामर्थ्येनेति भावेन तदुक्तेः ॥ ३।३।४७ ॥

## दर्शनाच्च ॥ ३।३।४८ ॥

१५ दृश्यते च सर्वात्मभाववतां भक्तानां व्रजसीमन्तिनीप्रभृतीनां पूर्वमितरविस्मृतिर्भगवत्स्पर्शादिनाग्रे सर्वसामर्थ्यमिति व्यासः स्वानुभवं प्रमाणत्वेनाह । उक्तं च श्रीभागवते ताभिरेव । चित्तं सुखेन भवतापहृतं गृहेषु यन्निर्विशत्युत करावपि गृह्यकृत्ये । पादौ पदं न चलतः ( भा. १०।२९।३४ ) इत्यादिना । तेन ज्ञानशाक्तिक्रियाशक्तितिरोधानमुक्तं २० भवति । अग्रे तदाविर्भावादिकं स्फुटमेव ॥ ३।३।४८ ॥

ननु सनत्कुमारनारदसंवादात्मकमेकं वाक्यम् । तत्रोपक्रमे—मन्त्रविदेवास्मि नात्मविच्छ्रुतꣳ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मवित् ( छां. ७।१।३ ) इति । सोऽहं भगवः शोचामि ( छां. ७।१।३ ) इत्यादिना स्वात्मज्ञानस्यैवोपक्रमादुपसंहारोपि तमादायैवोचितः । अग्रे चेदादिना

---

21–A and C read संबादात्मकमेव for संबादात्मकमेकं ।

त्मपदानामीश्वरपरत्वं स्याद्वाक्यभेद उपक्रमविरोधश्च स्यात् । तस्माद्वाक्यानुरोधात् पूर्वज्ञानप्रकारविशेष एवायमिति मन्तव्यमित्यत उत्तरं पठति ।

## श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ३।३।४९ ॥

नैवं वाक्यानुरोधाद्वरणेन सर्वात्मभावलिङ्गभूयस्त्वं बाधितव्यम् ।
५ वाक्यापेक्षया श्रुतिलिङ्गयोर्बलीयस्त्वात् । एतद्बलीयस्त्वं तु—श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यम् ( जै. सू. ३।३।१३ ) इति जैमिनीयसूत्रे सिद्धम् । प्रकृत इतरसाधननिषेधपूर्वकं—यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम् ( मुं. ३।२।३ ) इति श्रुतिर्वरणमात्रलभ्यत्वमाह । एतदग्रे च—नायमात्मा बलहीनेन लभ्यः
१० ( मुं. ३।२।३ ) इत्युपक्रम्य—एतैरुपायैर्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्मधाम ( मुं. ३।२।४ ) इति श्रुतिः पठ्यते । एतच्च—विद्यैव तु निर्धारणात् ( ब्र. सू. ३।३।४७ ) इत्यत्र निरूपितम् । अपरं च—नात्मावित् तरति शोकमात्मवित् ( छां. ७।१।३ ) इति नारदवाक्यानुवादयोरात्मपदमुत्तमप्रश्नात्मकेन लिङ्गेन पुरुषोत्तमपरामिति ज्ञायते । सहि
१५ सर्वेभ्य उत्तमोतो ब्रह्मेत्युपास्यत्वेन सनत्कुमारोक्तप्रतिरूपं ततस्ततो भूयोस्तीत्यपृच्छत् । अन्ते सर्वाधिकत्वेन सुखात्मकत्वेन भूमानं श्रुत्वा तथा नापृच्छत् किंतु तत्प्राप्त्यर्थम् । अत्यार्त्या कस्मिन् प्रतिष्ठित इत्यपृच्छत् । तदा सर्वात्मभाववत्स्वेव प्रतिष्ठित इत्याशयेन सर्वात्मभावलिङ्गात्मकं भावं स एवाधस्तात् इत्यादिनोक्तवान् ॥ ३।३।४९ ॥

२० नन्वेतया श्रुत्या न सर्वात्मभावलिङ्गात्मको भाव उच्यते । किंतु व्यापकत्वेन सर्वरूपत्वेन स्वभिन्नाधिकरणाभावादन्यत्राप्रतिष्ठितत्वमेवोच्यत इत्यत उत्तरं पठति ।

## अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद् दृष्टश्च तदुक्तम् ॥ ३।३।५० ॥

---

3–M, A and घ read बाधा for बाधः ।
4–M, A and C read बरणज for बरणेन ।

भूमस्वरूपं श्रुत्वा—स भगवः कस्मिन् प्रतिष्ठितः ( छां. ७।२४।१ ) इति प्रश्ने—स्वे महिम्नि ( छां. ७।२४।१ ) इत्युत्तरम्। तदर्थस्तु स्वीयत्वेन वृते भक्ते यो महिमरूपः सर्वात्मभावस्तस्मिन्निति स्वरूपात्मके महिम्नीति वा भगवदात्मकत्वात्सर्वात्मभावस्य तदितरस्य साक्षात् पुरुषोत्तमाप्राप-
५ कत्वादस्यैव तत्प्रापकत्वात् परमकाष्ठापन्नमहिमत्वरूपोयमेव भाव इति महिमशब्देनोच्यते। सतु विप्रयोगभावोदये सत्येव सम्यग् ज्ञातो भवति व्यभिचारिभावैः। ते त्वनियतस्वभावा इति ज्ञापयितुं त्रिविधाः—स एवाधस्तात् इत्यादिना—आत्मैवेदꣳ सर्वम् ( छां. ७।२६।१ ) इत्यन्तेन निरूप्य भूमप्रतिष्ठाधिकरणप्रश्ने यदुत्तरितं—स्वे महिम्नि ( छां. ७।
१० २४।१ ) इति तमेवानुबध्नाति—स वा एष ( छां. ७।२५।२ ) इत्यनेन। तच्छब्दस्य पूर्वपरामर्शित्वात्। एवं सति त्वदुक्तमन्यत्राप्रतिष्ठितत्वं चेदिह प्रतिपाद्यं स्यात् तदोक्तरीत्यानुबन्धं न कुर्यादहङ्कारादेशादिकं च न कुर्यादुक्तप्रश्नोत्तरं स्वान्यवस्त्वभावान्न क्वापीत्येव वदेत्। तस्मादस्मदुक्त एव मार्गोनुसर्तव्यः। आदिपदात् त्रिविधा ये भावा उक्तास्तेषामपि
१५ स्वरूपम्—एवं पश्यन् एवं मन्वान एवं विजानन् ( छां. ७।२५।२ ) इति क्रमेण यन्निरूपितं तदुच्यते। पूर्वं ह्यतिविगाढभावेन तदितरास्फूर्त्या तमेव सर्वत्र पश्यति। एतदेवोक्तमेवं पश्यन्नित्यनेन। ततः किंचिद्बाह्यानुसंधानेहङ्कारादेशो भवति। स त्वहमेव सर्वतः स्वकृतिसामर्थ्येन तं प्रकटीकरिष्य इति मनुते। करोति च तथा। अत एवान्वेषणगुणगाने कृते
२० ताभिः एतदेवोक्तमेवं मन्वान इत्यनेन। ततो निरुपधिस्नेहविषयः पुरुषोत्तम आत्मशब्देनोच्यत इति तदादेशो भवति। तदा पूर्वकृतस्वसाधनवैफल्यज्ञानेनातिदैन्ययुक्तसहजस्नेहजविविधभाववान् भवति। तदेतदुक्तमेवं विजानन्नित्यनेन। अत एवोपसर्ग उक्तः। ततोतिदैन्येनाविर्भावे सति या अवस्थास्ता निरूपिता आत्मरतिरित्यादिना। अत्रात्मशब्दाः पुरुषो-
२५ त्तमवाचका ज्ञेयाः। अन्यथौपचारिकत्वं स्यात्। मुख्ये संभवति तस्यायुक्तत्वात्। ननु सर्वात्मभावस्यापि मुक्तौ पर्यवसानमुत नेति संशयानिरासाय दृष्टान्तमाह। प्रज्ञान्तरपृथक्त्ववदिति। मुमुक्षुभक्तस्य स्वेष्टदातृत्वेन

भगवद्विषयणी या प्रज्ञा सा सर्वात्मभाववद्भक्तप्रज्ञातः प्रज्ञान्तरमित्युच्यते। तच्च कर्मज्ञानं तदितरभक्तप्रज्ञाभ्यः पार्थक्येन तदिष्टमेव साधयति। तथा सर्वात्मभाववतो भक्तस्य यत्प्रकारिका भगवद्विषयिणी प्रज्ञा तमेव प्रकारं स भावः साधयति नान्यमिति न मुक्तौ पर्यवसानमित्यर्थः। अत्र
५ व्यासः स्वानुभवं प्रमाणत्वेनाह। दृष्टश्चेति। उक्तभाववतो भक्तस्य प्रभुस्वरूपदर्शनाद्यतिरिक्तफलाभावोस्माभिरेव दृष्ट इत्यर्थः। एतादृशा अनेके दृष्टा इति नैकस्य नाम गृहीतम्। अत्र शब्दमपि प्रमाणमाह। तदुक्तमिति। भगवतेति शेषः। श्रीभागवते दुर्वाससं प्रति—अहं भक्तपराधीनः ( भा. ९।४।६३ ) इत्युपक्रम्य—वशे कुर्वन्ति मां भक्त्या सत्स्त्रियः
१० सत्पतिं यथा ( भा. ९।४।६६ ) इति। यो हि यद्वशीकृतः स तदिच्छानुरूपमेव करोत्यतो न सायुज्यादिदानं किंतु भजनानन्ददानमेव। तेषां मुक्त्यनिच्छा तु— मत्सेवया प्रतीतं च सालोक्यादिचतुष्टयम्। नेच्छन्ति सेवया पूर्णाः कुतोन्यत् कालविप्लुतम्॥ स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः। सालोक्यसार्ष्टिसामीप्यसारूप्यैकत्वमप्युत॥ दीयमानं न गृह्णन्ति
१५ विना मत्सेवनं जनाः ( भा. ९।४।६७-६८-६९ ) इत्यादिवाक्यसहस्रैर्निर्णीयते॥ ३।३।५०॥

**न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः॥३।३।५१॥**

ननु नान्यत्पश्यतीत्यारभ्य सर्वस्य सर्वात्मभावनिरूपकत्वोक्तिरनुपपन्ना। अत एवात्मपदानां पुरुषोत्तमपरत्वोक्तिश्च। यतस्तस्य
२० मुक्तावपि कामाभावः प्रतिपाद्यत। अत्र तु—तस्य सर्वेषु लोकेषु कामचारो भवति ( छां. ७।२५।२ ) इति श्रुतिः पठ्यते। एवं सति न तन्निरूपणमत्रेति वाच्यम्। तद्भाववतोप्यन्यकामवत्त्वमिति वा। द्वितीयस्योक्तप्रमाणपराहतत्वेनाद्यपक्ष एवाश्रयणीय इति पूर्वपक्षं निरस्यति। नेति। तत्र हेतुमाह। सामान्यदप्युपलब्धेरिति। तत्समानधर्मयोगादपि
२५ तत्प्रयोगः श्रुतावुपलभ्यतेनेकशो यतः। प्रकृतेपि विविधानां लोकानां विविधसुखप्रधानत्वाद्भगवत्संबन्धिषु सर्वेषु सुखेषु कामचारो भवतीति श्रुतेरर्थो ज्ञेयः। ननु यथाश्रुत एवार्थोस्तु तत्राह। नहि लोकापत्तिरिति।

सर्वात्मभाववत इति प्रकरणात्--नान्यत्पश्यति ( छां. ७।२४।१ ) इत्यादिधर्मविशिष्टस्यात्मनः प्राणादिसर्ववतो लोकसंबन्धो युक्तिसहोपि नेति ज्ञापनाय हिशब्दः । किंच । एतदग्रे---न पश्यो मृत्युं पश्यति (छां.-७।२६।२ इति श्रुत्या मृत्युनिषेधः क्रियते तथा--आत्मन एवेदꣳ सर्वम् ५ (छां७।२६।१ ) इति श्रुत्यैवकारेणात्मातिरिक्तव्यवच्छेदः क्रियत इति मृत्युवल्लोकोपि न संबध्यत इत्याह । मृत्युवदिति । तत्र रोगादीनामपि दर्शननिषेधे सत्यपि मृत्योरेव यन्निदर्शनमुक्तं तेन भक्तानां लोकान्तरसं-बन्धस्तत्तुल्य इति ज्ञाप्यतेत एव नोत दुःखमिति दुःखसामान्यनिषेधोग्रे कृतः ॥ ३।३।५१ ॥

## १० परेण च शब्दस्य ताद्विध्यं भूयस्त्वात्त्वनुबन्धः ॥ ३।३।५२॥

अत्र हेत्वन्तरमाहास्मिन्नेव श्लोके--सर्वमाप्नोति सर्वशः ( छां. ७। २६।२ ) इति परेण पदेन शब्दस्य श्रुतिवाक्यस्य--आत्मन एवेदꣳसर्वम् ( छां. ७।२६।१ ) इति यत्पूर्वोक्तं श्रुतिवाक्यं तद्विधतैव प्रती-यत इति न लोकसंबन्धो वक्तुं शक्य इत्यर्थः । ननु--आत्मन एवेदꣳसर्वम् १५ ( छां. ७।२६।१ ) इति यत्पूर्वं श्रुतिवाक्यं तेनैवैतदर्थलाभे पुनस्तदुक्ति-र्नोचितेत्याशङ्कायां तत्र हेतुमाह । तुशब्दः शङ्कानिरासे । भूयस्त्वा-द्धेतोः । उक्तेर्थे हेतूनां बाहुल्ये तद्दाढर्यं भवतीत्याशयेनोक्तार्थस्यैव श्लोके-नानुबन्धः कृत इत्यर्थः । अथवा भूयःपदमाधिक्यार्थकम् । तथा च स्वकृतसाधनसाधितफलापेक्षया स्वयमुद्यम्य भगवता साधितफले निरवधि-२० रुत्कर्ष इति ज्ञापनाय पुनः श्लोकेन तथेत्यर्थः ॥ ३।३।५२ ॥

## एक आत्मनः शरीरे भावात् ॥ ३।३।५३ ॥

उक्तेर्थे श्रुत्यन्तरसंमतिमप्याह । एके शाखिनस्तैत्तिरीयाः शरीरे भक्तशरीरे हृदयाकाश इति यावत् । तत्रात्मनो भगवतो भावादाविर्भावात् तेन सह सर्वकामोपभोगं वदन्तीं श्रुतिं पठन्ति । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद

---

13-M, A and C read पूर्वं for पूर्वोक्तं ।

15-M, A and C read पूर्वश्रुतिवाक्येनैवैतदर्थं for पूर्वं श्रुतिवाक्यं तेनैवैतदर्थं ।

निहितं गुहायां परमे व्योमन् । सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ( तै. २।१ ) इति । अत्रोपक्रमे—ब्रह्मविदाप्नोति परम् (तै. २।१) इति श्रुतिरक्षरब्रह्मविदः परब्रह्मप्राप्तिं सामान्यत उक्त्वा विशेषतः कथनार्थं—तदेषाभ्युक्ता ( तै. २।१ ) इति वाक्यं तद् ब्रह्म प्रतिपाद्यत्वेनाभिमुखी-
५ कृत्यैषा वक्ष्यमाणा ऋक् परब्रह्मविद्भिरुक्तेत्युक्त्वैवमुक्तवती सत्यं ज्ञानमिति । परब्रह्मस्वरूपमनुभवैकवेद्यं न शब्दादिभिर्वेद्यमिति ज्ञापनाय स्वयं तत्तत्त्वप्रतिपादिकाप्यन्यमुखेनोक्तवती । अत्र ब्रह्मणा सह सर्वकामोपभोग उक्त इत्येतदेकवाक्यतायै सर्वेषु लोकेषु कामचारो भवतीति श्रुतेरप्युक्त एवार्थो मन्तव्यः ॥ ३।३।५३ ॥ १७ ॥

---

## १० १८ व्यतिरेकाधिकरणम् ।

**व्यतिरेकस्तद्भावाभावित्वान्न तूपलब्धिवत् ॥ ३।३।५४ ॥**

ननु—ब्रह्मविदाप्नोति परम् ( तै. २।१ ) इति श्रुत्याक्षरब्रह्मविदः परब्रह्मप्राप्तिरुच्यते । तत्रेतरसाधनसापेक्षं ब्रह्मज्ञानं परं प्रापयत्युत तन्निरपेक्षमिति भवति संशयः । अत्र श्रुतौ तन्मात्रोक्तेरितरानिरपेक्षमेव तत्तथेति
१५ पूर्वः पक्षः । सिद्धान्तस्त्वेवं सति ज्ञानमार्गीयाणामपि परप्राप्तिः स्यात् । सा त्वनेकप्रमाणबाधितेति पूर्वमवोचाम । किं च । ज्ञानशेषभूतब्रह्मापेक्षया फलात्मकस्य परस्य मुख्यत्वात्तदेषाभ्युक्तेति श्रुतिस्तदेव प्रतिपाद्यत्वेनाभिमुखीकृत्य ऋगुक्तेत्याह । तेन तत्र ब्रह्मपदे पुरुषोत्तमपरे ज्ञायेते। तथाच गुहायां यद्याविर्भूतं परमं व्योम पुरुषोत्तमगृहात्मकमक्षरात्मकं
२० व्यापि वैकुण्ठं भवति तदा तत्र भगवानाविर्भवतीति तत्प्राप्तिर्भवतीत्युच्यते। यो वेद निहितं गुहायां परमे व्योमन् ( तै. २।१ ) इत्यनेन । तथा च ज्ञानिनां गुहासु परमव्योम्नो व्यतिरेक एव । तत्र हेतुमद्भावाभावित्वादिति । यमेवैष वृणुते ( मुं. ३।२।३ ) इति श्रुतेर्वरणाभावे भगवद्भावस्यासंभवात् ज्ञानिनां तथा वरणाभावात् भगवद्विषयको भावो न भावीति

---

21–ख reads इत्यन्तेन for इत्यनेन ।

तथेत्यर्थः । ननुं ज्ञानविषयत्ववदाविर्भावोप्यस्तु । किंच । तदतिरिक्तमाविर्भावमपि न पश्याम इत्याशङ्कायामाह । न तूपलब्धिवदिति उपलब्धिर्ज्ञानं तद्वद्गुहायामाविर्भावो न भवतीत्यर्थः । यस्मै भक्ताय यल्लीलाविशिष्टं स्वरूपमनुभावयित्वा प्रभुर्भवति तद्गुहायां तल्लीलाश्रयभूतमक्षरस्वरूपं
५ वैकुण्ठलोकवदाविर्भावयतीति नोक्तशङ्कालेशोपि । यत्र पुरुषोत्तमस्य चाक्षुषत्वं तत्र ततोधःकक्षस्य तस्य तथात्वे का शङ्का नाम । एतदुपपादितं पूर्वं विद्वन्मण्डने च । ननु ज्ञानिज्ञानविषयभक्तगुहाविर्भूताक्षरयोर्भेदोस्ति न वा । नाद्यः । मानाभावादेकत्वेनैव सर्वत्रोक्तेः । न द्वितीयः । निरवयवस्य क्वचिल्लोकरूपत्वातद्रूपत्वाभ्यामेकत्वानुपपत्तेरिति
१० चेत् । मैवम् । लोकरूपत्वस्य पश्चाद्भावित्वे हीयमनुपपत्तिर्न त्वेवं किंत्वक्षरस्वरूपमेव तथेति श्रुतिराह । अम्भस्यपारे भुवनस्य मध्ये ( ना. १।१ ) इत्युपक्रम्य—तदेव भूतं तदु भव्यमा इदं तदक्षरे परमे व्योमन् ( ना. १।१ ) एतदग्रे च—यमन्तः समुद्रे कवयो वयन्ति यदक्षरे परमे प्रजाः ( ना. १।१ ) इत्यादिरूपा । स्मृतिरपि । परस्तस्मात्तु भावोन्योव्यक्तो व्यक्तात्सनातनः । यः
१५ स सर्वेषु भुतेषु नश्यत्सु न विनश्यति । अव्यक्तोक्षर इत्युक्तस्तमाहुः परमां गतिम् । यं प्राप्य न निवर्तन्ते तद्धाम परमं मम ( भ. गी. ८।२०।२१ ) इत्यादि तु गीतासु । श्रीभागवतेपि—दर्शयामास लोकं स्वं गोपानां तमसः परम् । सत्यं ज्ञानमनन्तं यद् ब्रह्मज्योतिः सनातनम् । यद्धि पश्यन्ति मुनयो गुणापाये समाहिताः (भा. १०।२८।१४।१५) इति दशमे । द्वितीये च—तस्मै
२० स्वलोकं भगवान् सभाजितः संदर्शयमास ( भा. २।९।९ ) इत्युपक्रम्य कालत्रिगुणमायासंबन्धराहित्यमुक्त्वा भगवत्पार्षदानुक्त्वा विमानप्रमदा उक्त्वा श्रीरुक्ता । तथा च श्रुतिस्मृत्येकवाक्यतायां तादृक्स्वरूपमेवाक्षरमिति निर्णयो भवति । एवं सति सच्चिदानन्दत्वे देशकालापरिच्छेदस्वयंप्रकाशत्वगुणातीतत्वादिधर्मवत्त्वेनैव ज्ञानिनामक्षरविज्ञानम् । भक्तानामेव पुरुषोत्तमा-
२५ धिष्ठानत्वेन तथेति ज्ञेयम् । मल्लानामशनिः ( भा. १०।४३।१७ ) इति

6—M, A, C and D read एतच्चोपपादितं for एतदुपपादितं ।
21—C and D read मायादि for माया ।

श्लोकोक्तरीत्या पुरुषोत्तमस्यैव । प्रभुणा ये यथा विचारिताः सन्ति ते तथा भवन्तीति तद्विचार एव सर्वेषामधिकाररूप इति—कृतप्रयत्नापेक्षस्तु ( ब्र. सू. २।३।४२ ) इत्यत्र निर्णीतम् ॥ ३।३।५४ ॥

अस्मिन्नर्थे कैमुतिकन्यायकथनार्थं निदर्शनत्वेनोत्तरं पठति।

५ **अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम् ॥ ३।३।५५ ॥**

यागे तत्तदृत्विङ्नियतकर्तव्यान्वाधानादीन्यङ्गानि । तत्रावबद्धाः सर्व एवर्त्विजो यजमानेन । अवबन्धनं नामाध्वर्युं त्वा वृणे होतारं त्वां वृण उद्गातारं त्वां वृणे इत्यादिरूपं वरणमेवान्यथा सर्वकर्मविदुषां तत्कृतिपटूनामेकत्राधिकारो नान्यत्रेति नियमो न स्यात् । तस्य तस्य तथा १० वरणे तु यजमानेच्छैव हेतुः । तेच तदा न सर्वासु शाखासु विहितान्यङ्गानि कर्तुं सर्वेपि शक्ताः । किंतु यजमानवरणनियमिता एव तथा । तत्र हेतुमाह । हि यतः कारणात् प्रतिवेदं नियमितान्यङ्गानि हौत्रमृचाध्वर्यवादि यजुषौद्गात्रं साम्ना इति । यथा चालौकिके वैदिके कर्मणि जीवेच्छापि नियामिका भवति यत्र तत्र किमु वाच्यं प्रतिरोमकूपं सावकाशम- १५ मितब्रह्माण्डस्थितिमतस्तदीशितुरिच्छैव नियामिका तत्तत्साधनफलसंपत्ताविति ॥ ३।३।५५ ॥

**मन्त्रादिवद्वाविरोधः ॥ ३।३।५६ ॥**

ननु पूर्वं कर्मज्ञाननिष्ठानामपि पुंसामग्रे भक्तिमार्गीयत्वं यत्र भवति तत्र तथैव भगवद्वरणमिति हि सिद्धान्तः । ऋत्विजस्त्वेकस्मिन् याग एकत्र २० वृतस्य नापरत्रापि तथेति विरुद्धो दृष्टान्त इत्यरुच्या निदर्शनान्तरमाह। यथैक एव कश्चिन्मन्त्रो बहुषु कर्मसु संबध्यते कश्चिद् द्वयोः कश्चिदेकत्रैव तथैव विधानात्तथात्रापीत्यर्थः।आदिपदात्कर्मोच्यते । यत्र काम्येनैव नित्यकर्मनिर्वाहस्तत्र कामितार्थसाधकत्वे प्रत्यवायपरिहारेप्येकमेव तदुपयुज्यते । तथा च सर्वतोमुखेनेकहोतृप्रवरेध्वर्युप्रवरे च गृह्यमाणे देवाः २५ पितर इत्यादिना यजमानकर्तृकानुमन्त्रणमेकमेव सर्वत्र संबध्यते विधिस्तथात्रापि तावद्विधं यदेकमेव वरणं तेन तन्निष्ठानन्तरं भक्तिनिष्ठेति न

दृष्टान्तविरोध इत्यर्थः। अथवा ॐ मित्युदाहृत्यैव मन्त्राणामुच्चारणान्मन्त्रादिरोंकारः। स यथा ब्रह्मात्मकत्वेनैक एव सर्वमन्त्रेषु संबध्यते। तथा वरणमपीति तथेत्यर्थः। यद्यपीतरनिष्ठानन्तरभूतभक्तिनिष्ठावतोपि वरणं तथाभूतमेकमेवेति नोक्तदोषस्तथाप्युत्कृष्टमार्गे वृतस्य नीचकक्षापादनमनु-
५ चितमिति मत्वा पक्षान्तरमुक्तम्। वस्तुतस्तु साधनमर्यादया यत्र भक्तिर्दित्सिता तत्र तथेति नानुपपत्तिः काचित् ॥ ३।३।५६॥१८॥

---

## १९ भूम्न इत्यधिकरणम् ।

### भूम्नः क्रतुवज्ज्यायस्त्वं तथाहि दर्शयति ॥ ३।३।५७ ॥

ननु सुखस्वरूपजिज्ञासायां—यो वै भूमा तत्सुखम् (छां.७।२३।१)
१० इत्युक्तं भूमस्वरूपजिज्ञासायां—यत्र नान्यत्पश्यति ( छां. ७।२४।१ ) इत्यादिना तद्यन्निरूपितं तत्सर्वात्मभावस्वरूपमिति यदुक्तं तन्नोपपद्यते। भूम्नो हि सुखरूपतोच्यते। सर्वात्भावे तु विरहभावे दुःसहदुःखानुभवः श्रूयते। तेन मोक्षसुखमेव यो वै भूमेत्यादिनोच्यते। यो वै भूमा तदमृतम् ( छां. ७।२४।१ ) इति वाक्याच्च। अग्रेच—स वा एष एवं पश्यन्
१५ (छां.७।२५।२) इत्याद्युक्त्वानन्तरमसंभव्यतः स भावो मोक्षो वात्रोच्यत इति संशयः। कामचारोक्तेर्मुक्तिपूर्वदशायां तन्माहात्म्यनिरूपणार्थत्वादमृतशब्दाच्च मुक्तिरेव भूमपदेनोच्यत इति पूर्वपक्षः। तत्र भूमशब्देन स भाव एवोच्यत इति सिद्धान्तस्तत्र दुःखदर्शनानुपपत्त्या सर्वाधिकत्वलक्षणं भूमत्वमनुपपन्नमिति शङ्कां परिहरति। भूम्नः सर्वात्मभावस्य ज्यायस्त्वं सर्वस्मान्मन्त-
२० व्यम्। तत्रोक्तानुपपत्तिपरिहारार्थं दृष्टान्तमाह। क्रतुवदिति। दर्शपूर्णमासप्रकरणे तैत्तिरीयके पठ्यते—परमेष्ठिनो वा एष यज्ञोग्र आसीत्तेन स परमां काष्ठामगच्छत् ( तै. सं १।६।९ ) इत्युपक्रम्य—य एवं विद्वान् दर्शपूर्णमासौ यजते परमामेव काष्ठां गच्छति ( तै. सं. १।६।९ ) इति। यथा व्रतादिदुःखात्मकत्वेपि परमकाष्ठा-
२५ लक्षणफलगमकत्वेन दर्शपूर्णमासयोः सर्वक्रतुभ्योधिकत्वं वक्तुमग्र

आसीदिति श्रूयते । तथा दुःखहेतुत्वेप्यनन्यलभ्यसाक्षात्पुरुषोत्तमानन्दप्राप्तिहेतुत्वेन सुखरूपत्वमुच्यत इत्यन्येभ्यः सर्वेभ्यो ज्यायस्त्वं मन्तव्यमित्यर्थः । अत्रोपपत्तिमाह । तथाहि दर्शयति । श्रुतिस्तु—स एवाधस्तात् (छां. ७।२५।१) इत्याद्युक्त्वा—अथात्मादेशः (छां. ७।२५।१)
५ इत्याद्युक्तवत्यग्रे चैतादृशस्यात्मन एव प्राणाशास्मरादि सर्वमिति च दर्शयति एतत्सर्वात्मभाववत्येव सर्वमुपपद्यते न मुक्तस्य । वृत्तिभेदाभावात् प्राणाद्यभावाच्च । जीवन्मुक्तिदशायां प्राचीनानामेव सत्त्वादात्मनः प्राणा इत्यादि न वदेत् । यद्वा ननु लोकेपि शृङ्गाररसभाववति पुंसि नार्यां च त्वदुक्तभावसंबन्धिव्यभिचारिभावाः श्रूयन्ते । सैव सर्वत्र स एव सर्वत्रेति । एवं
१० सति लौकिकसधर्मवत्त्वान्न त्वदुक्तभावस्यालौकिकज्ञानादिभ्य आधिक्यं वक्तुं शक्यमलौकिकविषयत्वाल्लौकिकत्वमपि न तथेति भवति संशयः । तत्र मनुजत्वरिपुत्वादिज्ञानानामिव कामादिभावेन स्नेहभावस्यापि संभवान्नास्यालौकिकत्वमिति पूर्वः पक्षः । सिद्धान्तस्त्वस्य लौकिकेभ्यो ज्यायस्त्वं मन्तव्यम् । नन्नूक्तं लोकसाधारण्यं बाधकमिति शङ्कानिरासाय निदर्शन-
१५ माह । क्रतुवदिति । यथा दर्शादिषु दोहनाधिश्रयणातञ्चनव्रीह्यवघातादिपुरोडाशभक्षणादीनां लौकिकक्रियातुल्यत्वेन दर्शनेपि न लौकिकत्वम् । लौकिकप्रमाणाप्राप्तत्वादलौकिकतत्प्राप्तत्वात्तथोक्तप्रमाणरूपवरणलभ्यत्वेन श्रुत्युक्तत्वान्न लौकिकत्वमस्य भावस्येति दिक् ।

वस्तुतस्तु ग्रामसिंहस्य सिंहस्वरूपत्वेपि न ताद्रूप्यं वक्तुं शक्यम् ।
२० तथा लौकिकपुंसि नार्यां वा तदाभासो रसशास्त्रे निरूप्यते । तद्दृष्टान्तेन भगवद्भाववद्भक्तरीतिभावनार्थं नतु ऋषीणां लौकिके तात्पर्यं भवितुमर्हति । अत्रोपपत्तिमाह । तथा हीत्यादि । पूर्वोक्तभाववत आत्मनः प्राणादिकं सर्वं दर्शयति श्रुतिः । तस्य ह वा एतस्यैवं पश्यतः ( छां. ७।२६।१ ) इत्यादिना । इतः पूर्वमपि—स वा एष एवं पश्यन् ( छां. ७।२५।२ )
२५ इत्युपक्रम्य—आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड् भवति सर्वेषु लोकेषु कामचारो भवति ( छां. ७।२५।२ ) इति श्रुतिश्च ।

न हि लोक एवं संभवत्यात्मपदानां भगवद्वाचकत्वादिति सर्वोत्तमविषयक-भावस्यैव तथात्वं युक्तमिति चोपपत्तिर्हिशब्देन सूच्यते ॥ ३।३।५७ ॥ १९ ॥

---

## २० नानाशब्दादिभेदादित्यधिकरणम् ।

## नाना शब्दादिभेदात् ॥ ३।३।५८ ॥

५ पूर्वाधिकरणैः सर्वात्मभावस्वरूपादिनिर्णयं कृतवान् । अथ मत्स्यादिरूपाणां भगवदवतारत्वमविशिष्टमिति सर्वेषां समस्योपासना कार्येत पार्थक्येनेति विचारयति । अत्रोपास्याभेदेपि रूपभेदादेकत्रोपासकस्यान्यत्रानुपासनलक्षणावज्ञासंभवादस्या अप्यसिद्धिसंभवादपि समस्यैव सा कार्येति प्राप्ते सिद्धान्तमाह । सर्वेष्ववतारेषु नानैवोपासना कार्या । तत्र
१० हेतुः शब्दादिभेदादिति । तत्तत्स्वरूपवाचकशब्दानां मन्त्राणां चादिपदादाकारकर्मणां च भेदादित्यर्थः । एतेनैव मिथोविरुद्धानामाकारकर्मणामेकत्र भावनस्याशक्यत्वमयुक्तत्वं चेति भावः सूचितः ॥ ३।३।५८॥२० ॥

---

## २१ विकल्प[1] इत्यधिकरणम् ।

## विकल्पोविशिष्टफलत्वात् ॥ ३।३।५९ ॥

१५ पार्थक्येनोपासनानि कर्तव्यानीति स्थिते विचार्यते । किमग्निहोत्रदर्शपूर्णमासादिवदेषां समुच्चय उत फलविकल्प इति । तत्र विधिफलयोः समानत्वात्समुच्चय इति प्राप्ते निर्णयमाह । उपासनानां विकल्प एव । तत्र हेतुरविशिष्टफलत्वात् ।

मुक्तिफलकत्वं हि सर्वेषामुपासनानामविशिष्टम् । एवं सत्येकेनैव
२० तत्सिद्धावपरस्याप्रयोजकत्वादग्निहोत्रादिवन्नित्यताबोधकश्रुत्यभावात्तदर्थिनो विकल्प एव ॥ ३।३।५९॥ २१ ॥

---

## २२ काम्यो[2]स्त्वित्यधिकरणम् ।

## काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात् ॥ ३।३।६० ॥

---

१ । २ । एतन्नामाधिकरणमालायां न लभ्यते ।

येषु तूपासनेषु भिन्नानि भिन्नानि फलान्युच्यन्ते तत्र त्वनेकफलार्थिनस्तत्तत्फलकोपासनानि समुच्चीयेरन्नविशिष्टफलत्वाभावात् । यत्र त्वेकस्यैवोपासनस्य स्वकामितानेकफलकत्वं श्रूयते तत्र तथैव चेदुपासनं करोति तदा न समुच्चीयेरन्नपि । स्वकामितेष्वेकतरस्य तदन्यफलवैशिष्ट्ये-
५ नाविशिष्टफलत्वाभावादितिपूर्वहेत्वभावादितिश्लिष्टप्रयोगाभिप्रायेणोक्तमिति ज्ञेयम् ।

अथवा कामैक्ये नियतफलकानि तानि न समुच्चीयेरन् । अत्र हेतुः स्पष्टः ॥ ३।३।६०॥२२ ॥

---

## २३ अङ्गेष्वित्यधिकरणम् ।

१० **अङ्गेषु यथाश्रयभावः ॥ ३।३।६१ ॥**

प्रधानेषु निर्णयमुक्त्वाङ्गेषु तमाह । एकार्थसाधकानामुपासनानां भेदेनाङ्गभेदेऽप्येकतरोपासने फलैक्यादङ्गानि तत्र समुच्चीयेरन्न वेति संशये निर्णयमाह । उपासनाङ्गानां तदेवाश्रयस्तथा च यदङ्गं यदुपासनाश्रितं तत्रैव तस्य भाव इत्यर्थः ॥ ३।३।६१ ॥

१५ अत्र हेतुमाह ।

**शिष्टेश्च ॥ ३।३।६२ ॥**

तत्तदुपासनं तत्तदङ्गविशिष्टमेव वेदे शिष्यत इति तथेत्यर्थः । चकारादतिरिक्तकरणे प्रायश्चित्तोक्तिरपि बाधिकेति सूच्यते ॥ ३।३।६२ ॥ २३ ॥

---

२० 
## २४ समाहाराधिकरणम् ।

**समाहारात् ॥ ३।३।६३ ॥**

कर्ममार्गीयोपासने निर्णयमुक्त्वा ज्ञानमार्गीयोपासने तमाह । अथर्वोपनिषत्सु नृसिंहोपासनादिषु मत्स्यकूर्मादिरूपत्वेनापि स्तुतिः

---

1–M and C.om भिन्नानि after भिन्नानि ।

श्रूयते । श्रीभागवते च—नमस्ते रघुवर्याय ( भा. १०।४०।२० ) इत्या-
दिरूपा स्तुतिर्व्रजनाथे । एवं सति रूपभेदेपि भगदवतारत्वस्याविशिष्टत्वा-
देकस्मिन् रूपे रूपान्तरसमाहारो दृश्यत इति सर्वरूपत्वेनैकत्रोपासनमपि
साध्वित्यर्थः ॥ ३।३।६३ ॥

## गुणसाधारण्यश्रुतेश्च ॥ ३।३।६४ ॥

ऐश्वर्यवीर्यादिगुणानां सर्वेष्ववतारेषु साधारण्यं श्रूयते । तेन धर्मि-
धर्माणामैक्यात् पूर्वोक्तं साध्वित्यर्थः ॥ ३।३।६४ ॥ २४ ॥

---

## २५ न वा तत्सहभावाश्रुतेरित्यधिकरणम् ।

## न वा तत्सहभावाश्रुतेः ॥ ३।३।६५ ॥

नन्वेवमुपासनं नित्यमुत वैकल्पिकमिति संशय उक्तरीत्या नित्यत्वे
प्राप्ते तन्निषेधमाह । नेति । किंतु वा विकल्प एवैवमुपासन ऐच्छिकस्तत्र
हेतुमाह । सहभावाश्रुतेरिति । नियमतस्तेषां रूपाणां सहभावश्रवणं चेत्स्या-
त्तदा स्यात्तथोपासनस्य नित्यता । न त्वेवमतो विकल्प एवेत्यर्थः
॥ ३।३।६५ ॥

## दर्शनाच्च ॥ ३।३।६६ ॥

योपि रूपान्तरसमाहारपूर्वकमुपास्ते सोप्येकं रूपमुपास्यत्वेन मत्वा
तत्तथोपास्त इति फलं तस्यैकस्यैव रूपस्य दर्शनं भवति न तु सर्वेषामि-
तोपि हेतोर्विकल्प एवेत्यर्थः । एतद् दृष्टान्तेन यस्मिन् रूपे यादृग् धर्म-
वत्त्वं श्रूयते तादृग् धर्मविशिष्टमेवैकं रूपमुपास्यमिति व्यासहृदयमिति ज्ञायते।
उपासनानिर्णयान्ते दर्शनात्मकहेतूक्त्या सर्वोपासनानां भगवत्साक्षात्कारः
फलमिति ध्वन्यते माहात्म्यज्ञापनार्थम् । परं सर्वावताररूपत्वं यथार्थमेव
कैश्चिज्ज्ञाप्यते । यथार्थत्वात्तदप्यविरोधीति ज्ञेयम् ॥ ३।३।६६ ॥ २५ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते व्याससूत्राणु-
भाष्ये तृतीयाध्यायस्य तृतीयः पादः ॥ ३।३ ॥

---

21–C reads ज्ञाप्यते for ध्वन्यते ।

# तृतीयाध्याये चतुर्थः पादः ॥

## १ पुरुषार्थोत इत्यधिकरणम्[1] ।

### पुरुषार्थोतः शब्दादिति बादरायणः ॥ ३।४।१ ॥

उपासनाभेदेप्युपास्याभेदाच्छाखान्तरोक्तधर्माणामप्युपसंहारः कर्तु-
५ मुचित इति पूर्वपादे निरूपितमिति तन्न्यायेनोत्तरकाण्डप्रतिपाद्यब्रह्मफल-
कसर्वात्मभावेपि पूर्वकाण्डप्रतिपादितकर्मणामुपसंहारः प्राप्नोति न वेत्यधुना
विचार्यते। विधिपक्षे तत्सहकृतस्यास्य फलसाधकत्वमिति सिध्यति।
निषेधपक्षे तु केवलस्येतीममेव पक्षं सिद्धान्तत्वेनाह। पुरुषार्थ इत्यादिना।
सिद्धान्ते ज्ञाते तत्र पूर्वपक्षसंभव इत्यादौ तमेवाह। अतः सर्वात्मभावादेव
१० केवलात् पुरुषार्थः सिध्यति। कुतः। शब्दात् श्रुतेरित्यर्थः। श्रुतिस्तु—
नायमात्मा प्रवचनेन ( मुं. ३।२।३ ) इत्युपक्रम्य—यमेवैष वृणुते (मुं. ३।२।
३ ) इत्यादिका। ब्रह्मविदाप्नोति परम् (तै. २।१) इत्यादिका—तमेवं विद्वा-
नमृत इह भवति (नृ. पू. १।६) इति। सनत्कुमारनारदसंवादे—यत्र नान्यत्
पश्यति ( छां. ७।२४।१ ) इत्याद्यात्मिका छान्दोग्यश्रुतिश्च। एतदादि-
१५ श्रुतिषु पूर्वोक्तरीत्या केवलस्यैव भगवद्भावस्य फलसाधनकत्वं श्रूयत इति
तथा। अत्र—फलमत उपपत्तेः (ब्र. सू. ३।२।३८) इत्यत्रेवोपपत्तिं हेतुत्वेना-
नुक्त्वा श्रुतिपदं चानुक्त्वा शब्दपदं यदुक्तवांस्तेन श्रुतिस्मृत्यात्मकः सर्वोपि
प्रमाणशब्दो हेतुत्वेन व्यासाभिमत इति ज्ञायते। तेन—केवलेन हि भावेन
गोप्यो गावः खगा मृगाः। अन्ये मूढधियो नागाः सिद्धा मामीयुरञ्जसा॥
२० यन्न योगेन सांख्येन दानव्रततपोध्वरैः। व्याख्यास्वाध्यायसंन्यासैः प्राप्नु-
याद्यत्नवानपि॥ (भा. ११।१२।८-९) इत्यादिरूपा स्मृतिरपि संगृह्यते।
एतेन श्रुत्यादिप्रमाणवादिनामिदमेवाभिमतं तद्विरुद्धवादिनामितोन्यदिति
तेषामप्रामाणिकत्वं ज्ञाप्यते। अत एव स्वनाम गृहीतम्। स्वस्य वेदव्यास-
कर्तृत्वेन तत्रैव यतो भरः। अपरं च वैदिकसिद्धान्ते भगवत्स्वरूपस्यैव
२५ स्वतन्त्रपुरुषार्थत्वात् प्राप्ततत्स्वरूपाणां मुक्त्यनिच्छाकथनान्मुक्तोपसृप्यत्व-

---

१ एतन्नामाधिकरणमालायां नोपलभ्यते।

पदेशाच्च मुक्तेरपरमपुरुषार्थत्वात् सा भवतु नामान्यैः साधनैः । वस्तुतः परमपुरुषार्थो य उक्तरूपः सतु सर्वात्मभावेनैवेति ज्ञापनाय फलपदमनुक्त्वा पुरुषार्थपदमुक्तम् । एवं सत्यस्य सूत्रस्यार्थान्तरमपि व्यासाभिमतमिति ज्ञायते । तथा सत्ययं श्लिष्टः प्रयोगः । तथाहि पुरुषार्थो भगवानेव । ५ कुतः । अतः शब्दात् । अतःपदविशिष्टश्रुतिवाक्यादित्यर्थः । तैत्तिरीयोपनिषत्सु पठ्यते । अतः परं नान्यदणीयसꣳ हि परात्परं यन्महतो महान्तम् । यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तात् ( ना. १।१ ) इति ॥ ३।४।१ ॥

अथात्र प्रत्यवतिष्ठते ।

१० **शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ ३।४।२ ॥**

विष्णोरिज्यत्वेन कर्मशेषत्वात् तत्स्वरूपज्ञानपूर्वको यागः फलातिशयहेतुरिति तन्माहात्म्यमुच्यत इत्यर्थवादरूपं तत् । अत्र दृष्टान्तमाह— यथान्येष्विति। अन्येषु द्रव्यसंस्कारकर्मसु—यस्य पर्णमयी जुहूर्भवति न स पापꣳ लोकꣳ शृणोति ( तै. सं. ३।५।७ ) यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य १५ वृङ्क्ते ( तै. सं. ६।१।१ ) यत्प्रयाजानुयाजा इज्यन्ते वर्म वा एतद् यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै (तै. सं. २।६।१) इत्येवंजातीयिका फलश्रुतिरर्थवादस्तद्वदित्यर्थः ॥ ३।४।२ ॥

ननु—तमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ति ( बृ. ४।४।२२ ) एतदग्रे च—ते ह स्म पुत्रैषणायाश्च वित्तैष- २० णायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति ( बृ. ४।४।२२ ) इति श्रुतिर्भगवज्ज्ञानवतः सर्वत्यागं वदतीति न त्वदुक्तं साधीय इत्यत उत्तरं पठति ।

**आचारदर्शनात् ॥ ३।४।३ ॥**

ब्रह्मविदामपि वसिष्ठादीनामग्निहोत्रादिकरणं जैमिनिः पश्यतीति २५ तदाचारं प्रामाणिकमिति च मनुत इति तन्मतमनुवदन्निममप्यनूक्तवान्

---

१ तदाचारं प्रामाणिकं च मनुते इति प्रकाशपाठः साधीयान् ।

व्यासः। ब्रह्मविदां त्यागावश्यकत्वे गार्हस्थ्यमेतेषां न स्यादिति भावः। उक्तश्रुतिस्तु कर्मण्यशक्तानां तेषां त्यागमनुवदति। लोकैषणायाश्च व्युत्थाय (बृ. ४।४।२२) इति श्रुतेर्लोकसंग्रहार्थं तत्करणमिति न वक्तुं शक्यम् ॥ ३।४।३ ॥

५

## तच्छ्रुतेः ॥ ३।४।४ ॥

ब्रह्मविदः कर्माचारनिरूपकश्रुतेरित्यर्थः । सा च— जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे (बृ. ३।१।१) इत्यादिरूपा। तथा च ज्ञानेनैवार्थसिद्धिश्चेत् स्यात्तदा तद्वत आयाससाध्ये कर्माणि प्रवृत्तिर्न स्यादिति भावः ॥ ३।४।४ ॥

१०

## समन्वारम्भणात् ॥ ३।४।५ ॥

तं विद्याकर्मणी समन्वारभेते (बृ. ४।४।२) इति श्रुतिः फलारम्भे विद्याकर्मणोः साहित्यं दर्शयतीति न स्वातन्त्र्यं विद्यायाम् ॥ ३।४।५ ॥

## तद्वतो विधानात् ॥ ३।४।६ ॥

१५ ब्रह्मिष्ठो ब्रह्मा दर्शपूर्णमासयोस्तं वृणीते (आ. सू. ३।१८।१) इति कल्पश्रुत्या ब्रह्मविदो ब्रह्मत्वेन वरणं विधीयत इति ब्रह्मज्ञानस्यार्त्विज्याधिकारसंपादकत्वात्कर्मशेषत्वमेवेत्यर्थः ॥ ३।४।६ ॥

ननु—यदहरेव विरजेत्तदहरेव प्रव्रजेत् । गृहाद्वा प्रव्रजेद्वनाद्वा (जा. ४) इत्यादिश्रुतिभ्यो विहितत्वाविशेषात् कर्मतत्त्यागयोरैच्छिको २० विकल्पोऽङ्गीकार्योऽतो न शेषिशेषभाव इत्यत उत्तरं पठति ।

## नियमाच्च ॥ ३।४।७ ॥

आश्विनं धूम्रललाममालभेत यो दुर्ब्राह्मणः सोमं पिपासेत् (तै.सं. २।१।१०) ऐन्द्राग्नं पुनरुत्सृष्टमालभेत य आतृतीयात्पुरुषात्सोमं न पिबेद् विच्छिन्नो वा एतस्य सोमपीथो यो ब्राह्मणः सन्नातृतीयात्पुरुषात् सोमं न २५ पिबति । (तै. सं. २।१।१५) यावज्जीवमग्निहोत्रं जुहुयात् इत्यादिश्रुतिभ्यो

यथा कर्मकरणे नियमः श्रूयते न तथा तत्त्याग इति नोक्तपक्षः साधुरित्यर्थः। चकारात्—नियतस्य तु संन्यासः कर्मणो नोपपद्यते। मोहात्तस्य परित्यागस्तामसः परिकीर्तितः ॥ (भ. १८।७) इत्यादिरूपा स्मृतिः समुच्चीयते ॥ ३।४।७ ॥

५ त्यागविधिरशक्तविषय इत्युक्तमिति प्राप्ते प्रतिवदति।

## अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ३।४।८ ॥

तुशब्दः पूर्वपक्षं व्यवच्छिनत्ति। यदुक्तं शेषत्वात्पुरुषार्थवाद इति तन्नोपपद्यते। कुतः। अधिकोपदेशात्। कर्मसाम्यमपि न वक्तुं शक्यं यत्र तत्र तच्छेषत्वं दूरापास्तम्। यत ईश्वरः कर्मणः सकाशादधिक १० उपदिश्यते। तथाहि। स वा अयमात्मा सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किंच। स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयान् (बृ. ४।४।२२) इत्युपक्रम्याग्रे पठ्यते—तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमभीप्सन्तः प्रव्रजन्ति १५ (बृ. ४।४।२२) इत्यादि। एवं सति यज्ज्ञानसाधनत्वं यज्ञे तस्य यज्ञशेषत्वं कथं स्यात्। किंतु यज्ञस्य तद्वेदनशेषत्वम्। एतेनेज्यत्वेन तच्छेषत्वं प्रत्युक्तं वेदितव्यम्। तज्ज्ञानस्य यागपूर्वाङ्गत्वात् तद्विशिष्टस्य तस्य ब्रह्मज्ञानसाधनत्वात्। न च पूर्वं सामान्यत इज्यज्ञानमासीद् यज्ञेन विशेषतो ज्ञाने सति पुनर्यज्ञकरणे पूर्णं कर्मफलं भवतीति न तदशेषत्व-२० मिति वाच्यम्। तमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमभीप्सन्तः प्रव्रजन्ति (बृ. ४।४।२२) इति श्रुतेस्तद्वेदनस्य गार्हस्थ्यविरोधित्वेन तदसंभवात्। यश्च साध्वसाधुकर्मफलसंबन्धरहितस्तस्य कर्तृत्वेन तथात्वमनुपपन्नमतो जीवात्मन एव तथात्वं न तु परस्य। न चैतयोर्वास्तवाभेदान्नैवमिति वाच्यम्। वास्तवाभेदाज्जीवेप्युक्तश्रुतिभ्यस्तथात्वस्य २५ सुवचत्वात्। वास्तवाभेदस्य पूर्वमेव निरस्तत्वात्तमादाय ये पूर्वप-

19–M, A, C and D read भावीति for भवतीति।

क्षास्ते पूर्वपक्षा एवेत्यलमुक्त्वा । न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः । परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति ( म. ना. १०।५ ) इति श्रुत्या कर्मप्रजाधनैर्मोक्षाप्राप्तिमुक्त्वा त्यागेन तत्प्राप्तिरुच्यते । त्यागविषयस्यान्यस्यानुक्त्या सांनिध्यात् कर्मादीनामेव
५ त्यागोभिप्रेतः । तथाच मुक्तोपसृप्यत्वाद्भगवत उक्तसाधनेन मुक्ताः सन्तो नाकं परेण विद्यमानमपि भक्त्या—गुहायां विभ्राजते यत् । यस्मात्परं नापरमस्ति ( म. ना. १०। ५ ) इत्यादिनोपक्रान्तत्वात्पुरुषोत्तमस्वरूपं यतयो विरहभावेन तद्विना स्थातुमशक्तास्तत्प्राप्त्यर्थं यतमाना विशन्ति इति भक्तिमार्गीयाणां फलमुक्तम् । अग्रे—वेदान्तविज्ञान ( म. ना. १०।६ )
१० इत्यृचा ज्ञानमार्गीयाणां फलमुक्तम् । अन्यथा पौनरुक्त्यं स्यात् । एवं कर्मज्ञानाभ्यामधिको भक्तिमार्गस्तत्प्राप्यः पुरुषोत्तमश्च श्रुतावुपदिश्यत इति तदेकप्रमाणवादिनो बादरायणस्य मतमप्येवं जैमिनिमतादधिकमित्यर्थः । एवं श्रुत्वा परमतं निरस्य विश्वासार्थं स्वानुभवमपि प्रमाणयति। तद्दर्शनादिति। शिष्य उक्ताधिक्यवत्त्वेनैव भगवतो भक्तिमार्गस्य चानुभवादित्यर्थः । श्रुतयो-
१५ धिक मात्मानं दर्शयन्तीति न व्याख्यानम् । उपदेशपदेन पौनरुक्त्यापत्तेः। तन्मतमनिरस्य तस्मात् स्वमत आधिक्यमात्रोक्त्या निष्कामकर्मणश्चित्त-शुद्धिहेतुत्वेन परम्पराज्ञानमार्गोपयोगाङ्गीकारोत्र सूच्यते । पुष्टिभक्तिमार्गे तु सोपि न । यन्न योगेन ( भा. ११।१२।९ ) इति वाक्यात् । एवं सति क्व कर्मशेषत्वगन्धोपि ब्रह्मणीति भावः ॥ ३।४।८ ॥

२० **तुल्यं दर्शनम् ॥ ३।४।९ ॥**

यदुक्तमाचारदर्शनात् कर्मशेषत्वं ब्रह्मण इति तदपि न साधीयः । तुल्यं यतो दर्शनम् । ब्रह्मविदां शुकतृतीयजन्मवदार्षभादीनां त्यागदर्शनात्। एतेन यद्विदां कर्मत्यागस्तस्य कर्मशेषत्वं कथं शङ्कितुमपि शक्यमिति भावः सूच्यते । एतेन कर्मण्यशक्तान् प्रति त्यागविधिरिति निरस्तम् ।
२५ शुकादीनामतथात्वात् ॥ ३।४।९ ॥

ननु—जनको ह वैदेह ( बृ. ३।१।१ ) इति श्रुतिसाहाय्यादाचा-रदर्शनं त्यागदर्शनादधिकबलमित्यत उत्तरं पठति ।

## असार्वत्रिकी ॥ ३।४।१० ॥

ब्रह्मविदां सर्वेषामेतदाचारं चेन्निरूपयेच्छ्रुतिस्तदा त्वदुक्तं स्यान्न त्वेवम्। यत एतादृशी श्रुतिर्ब्रह्मवित्सु सर्वेषु न श्रूयते। तथाहि। एतद्ध स्म वै तद्विद्वांस आहुर्ऋषयः कावषेयाः। किमर्था वयमध्येष्यामहे किमर्था ५ वयं यक्ष्यामहे। एतद्ध स्म वै तत्पूर्वे विद्वांसोग्निहोत्रं न जुहवांचक्रिरे। एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति। एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवक्यः प्रवव्राज (बृ. ४।५।१५) इत्यादिश्रुतयो बह्वयस्ताद्विदां कर्मत्यागमेवानुवदन्त्यतस्त्यागपक्ष एव बलवान् ॥ ३।४।१० ॥

१० ननु ब्रह्मवित्त्वाविशेषेप्येकेषां कर्मकृतिरेकेषां तत्त्याग इति विभागः कुत इत्याशङ्क्य तत्र हेतुमाह।

## विभागः शतवत् ॥ ३।४।११ ॥

एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ति (बृ. ४।३।३२) इति श्रुतेर्मानुषानन्दमारभ्य ब्रह्मानन्दपर्यन्तं ये गणिता आनन्दास्ते सर्वे १५ पुरुषोत्तमानन्दात्मका एव। एवं सति येषु यावानानन्दो दत्तोस्ति तावन्तं तं निरूपयन्त्यधिकतारतम्येन तद्दानमिति ज्ञापनाय शतोत्तरमानन्दं श्रुतिर्न्यरूपयत्। अत एव पुरुषायुःसंख्यासमानसंख्ययैवोत्कर्ष उक्तस्तेन पुरुषधर्मस्याधिकारस्यैवोत्कर्षः सूच्यते। एवं प्रकृतेप्यन्यभावराहित्यतारतम्येन भगवद्भावतारतम्यमत्र त्वनुग्रह एवाधिकाररूप इति तदुत्कर्षे २० त्यागस्तदनुत्कर्षे नेत्यर्थः ॥ ३।४।११ ॥

यच्चोक्तं तद्वतो विधानादिति तत्राह।

## अध्ययनमात्रवतः ॥ ३।४।१२ ॥

यदुक्तं ब्रह्मिष्ठो ब्रह्मेत्यादि तत्र ब्रह्मशब्देन वेद एवोच्यते। न तु परस्तथा तं ब्रह्मत्वेनाविकृतशब्दरूपत्वं ज्ञात्वा सततं तदध्ययनमात्रं यः २५ करोति न तु तेन किंचित् कामयते तस्याधिकारो ब्रह्मत्वार्त्विज्य इत्युच्यते इति न ब्रह्मज्ञानस्य कर्मशेषत्वम्। प्रत्ययस्यातिशायनार्थकत्वादतिशयेन

ब्रह्मरूपस्तदैव भवतीति युक्तं तस्य तदार्त्विज्यमेवं सति ब्रह्मपदं ब्राह्मण्य-
परमपि संगच्छते ।

अथवा वेदाध्ययनमात्रवतः कर्मण्यधिकारो न तु ब्रह्मविदोपी-
त्यर्थः । न च तदन्तःपातित्वेन वेदान्तानामप्यध्ययनस्यावश्यकत्वे तत्प्र-
५ तिपाद्यब्रह्मज्ञानस्याप्यवर्जनीयत्वात्तद्वत एव तत्राधिकार इति वाच्यम् ।
शाब्दपरोक्षज्ञानस्य ब्रह्मज्ञानत्वाभावात् न हि सिता मधुरेति शाब्दज्ञान-
मात्रवांस्तन्माधुर्यज्ञो भवति । तथा सति पित्तोपशमादिकं तत्कार्यमपि
स्यान्न त्वेवम् । अत एव च्छान्दोग्ये सनत्कुमारेण—यद्वेत्थ तेन मोपसीद
( छां. ७।१।१ ) इत्युक्तो नारद ऋग्वेदमारभ्य सर्पदेवजनविद्यापर्यन्तं
१० स्वाधीतमुक्त्वाह सोहं मन्त्रविदेवास्मि नात्मवित् ( छां. ७।१।३ )
इत्यतोपरोक्षब्रह्मज्ञानमेव ब्रह्मज्ञानमुच्यते । अत एव तैत्तिरीयोपनिषत्सु-
वेदान्तविज्ञानसुनिश्चितार्थाः ( म. ना. १०।६ ) इति पठ्यते ।
विज्ञानमनुभव एव न तु ज्ञानमात्रमतो दूरापास्तं कर्मशेषत्वं ब्रह्मणः । तं
विद्याकर्मणी इत्यादिस्तु संसार्यात्मनः पूर्वदेहत्यागसामयिकं वृत्तान्तं
१५ निरूपयति । न तु ब्रह्मविदिति—समन्वारम्भणात् ( ब्र. सू. ३।४।५ )
इति सूत्रमुपेक्षितमाचार्येण ॥ ३।४।१२ ॥

यच्चोक्तं—नियमाच्च ( ब्र. सू. ३।४।७ ) इति तत्राह ।

## नाविशेषात् ॥ ३।४।१३ ॥

आश्विनमित्यादिश्रुतिभ्यः कर्मकृतो यथा नियमः श्रूयते न तथा
२० त्याग इति यदुक्तं तन्न । कुतः । अविशेषात् । न कर्मणा न प्रजया धनेन त्यागे-
नैके अमृतत्वमानशुः ( म. ना. १०।५ ) इति श्रुतिः कर्मादिनामृतत्वाप्राप्ति-
मुक्त्वा तत्त्यागेन तां वदन्ती कर्मत्यागस्यावश्यकत्वं वदतीति तस्मान्न
विशेषो यत इत्यर्थः । तथा चामृतत्वमानशुरिति पदान्मुमुक्षोः कर्मत्यागा-
नियमोमुमुक्षोस्तत्कृतिनियम इति व्यवस्थेति भावः ।

२५ अथवा ननु क्रमप्राप्ते तुरीयाश्रमे हि कर्मत्यागो द्वितीये तस्मिन्
कर्मकरणानियमस्तत्र च कर्तुरङ्गत्वेन तत्स्वरूपज्ञानमावश्यकम् । तच्च वेदान्तै-

रेवेति कथं न कर्मशेषत्वमित्युत्सूत्रमाशङ्क्य निषेधति । नेति । यदहरेव विरजेत् ( जा. ४ ) इति श्रुतेः—तावत् कर्माणि कुर्वीत न निर्विद्येत यावता ( भा. ११।२०।९ ) इति भगवद्वाक्याच्च त्यागे वैराग्यस्य च प्रयोजकत्वादाश्रमविशेषे विशेषाभावादप्रयोजकत्वादित्यर्थः । यत्रापि क्वचित्
५ क्रमप्राप्तिस्तत्रापि न तज्ज्ञानं ब्रह्मज्ञानमिति पूर्वसूत्र एवोक्तमिति भावः । एतेन वेदाध्ययनादिकमप्यप्रयोजकमिति ज्ञापितम् । अत एव शुकस्य वैराग्यातिशयादुपनयनादेरप्यनपेक्षोच्यते । एवं सूत्रद्वयेन कर्माधिकारसंपादकत्वेन ब्रह्मज्ञानस्य तच्छेषत्वं निरस्तम् ॥ ३।४।१३ ॥

अथ ग्रहिलतया ब्रह्मिष्ठ इत्यत्र ब्रह्मपदेन पर एवोच्यत इति
१० वदसि तत्रापि वदामः ।

## स्तुतयेनुमतिर्वा ॥ ३।४।१४ ॥

दर्शपूर्णमासावेतादृशौ यत्र ब्रह्मविदार्त्विज्याधिकारीति तत्स्तुत्यर्थं ब्रह्मिष्ठो ब्रह्मेत्यनेन ब्रह्मविदोप्यार्त्विज्येनुमतिः क्रियते न तु तस्याधिकारित्वमभिप्रेतम् । उक्तानुपपत्तिभिरित्यर्थः ॥ ३।४।१४ ॥

१५

## कामकारेण चैके ॥ ३।४।१५ ॥

ननु—एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान् ( बृ. ४।४।२३ ) इति श्रुत्या ब्रह्मविदः कर्मकृतगुणदोषौ निषिध्येते । स च प्राप्तिपूर्वक इति ब्रह्मविदः कर्मकरणमावश्यकमिति प्राप्ते ।

उच्यते। कामकारेणेति । करणं कारः कामेनेच्छया करणं काम-
२० कारस्तथाच परानुग्रहार्थमिच्छामात्रेण न तु विधिवशाद्यत् करणं तत् कामकार इत्युच्यते तथा चैवं कृते कर्मणि तत्कृतगुणदोषप्रसक्तौ तत्प्रतिषेधमेके शाखिन एष नित्य इत्यादि पठन्ति । न ह्येतावता कर्मकृत्याधिकारप्राप्तिरिति भावः । अथवा कामेन कारो यस्य स तथा । तादृशेन कर्मणा प्राप्तवृद्धिह्रासयोः संबन्धाभावं ब्रह्मविद्येके पठन्तीत्यर्थः । चका-
२५ रेणेश्वराज्ञया लोकसंग्रहार्थं कृतं कर्म समुच्चीयते । सर्वस्य वशी सर्वस्येशानः ( बृ. ४।४।२२ ) इति श्रुतेस्तथा ॥ ३।४।१५ ॥

## उपमर्दं च ॥ ३।४।१६ ॥

अनेन कर्माधिकाराभावे हेत्वन्तरमुच्यते । द्वैतभाने हि यथाकथंचित् कर्मकृतिसंभावनापि । यस्य त्वखण्डब्रह्माद्वैतभानं ब्रह्मेत्येव न त्विदं ब्रह्मेति सखण्डम् । अत्रोद्देश्यत्वेन प्रपञ्चस्यापि भानात् सखण्डत्वम् । तथा
५ चाखण्डतद्भाने कर्म तदधिकारादेरुपमर्दं चैके शाखिनः पठन्तीति न ब्रह्मज्ञानस्य कर्मशेषत्वसंभावनापीत्यर्थः । श्रुतिस्तु—यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत् ( बृ. ४।५।१५ ) इत्यादिरूपा ॥ ३।४।१६ ॥

## ऊर्ध्वरेतःसु च शब्दे हि ॥ ३।४।१७ ॥

अत्रेदं विचार्यते । ब्रह्मचर्यानन्तरं गार्हस्थ्यमपि श्रुत्या बोध्यते ।
१० ब्रह्मचर्यादेव प्रव्रजेत् ( जा. ४ ) इत्यादिश्रुतिभिर्ब्रह्मचारिण एव च प्रव्रजनमपि बोध्यते । एवं सत्यविरोधाय—यदहरेव ( जा. ४ ) इति श्रुतेश्च रागितद्राहितभेदेन विषयभेदो वाच्यः । तत्र ब्रह्मचर्याविशेषेपि भगवदनुग्रहविशेषजचित्तशुद्धिविशेषजवेदान्तार्थपरिज्ञानमेव हेतुर्वाच्यः । वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः ( म. ना. १०।६ )
१५ इति श्रुतिरिममेवार्थमाह । तथा चैतादृशा एवोर्ध्वरेतस इत्युच्यन्ते । एवं सत्यूर्ध्वरेतःसु कर्माभाव उक्तरीत्या त्वयाप्यूरीकार्य इति ज्ञानरहितानां कर्मण्यधिकारस्तद्वतां संन्यास इति त्वदुक्ताद् विपरीतोर्थः सिध्यतीति क्व कर्मशेषत्वसंभावना ज्ञाने । ननु संन्यासेपि तदाश्रमीणं कर्मास्तीति वैराग्यसहकृतं ज्ञानमेतच्छेषभूतं तदसहकृतं तदग्निहोत्रादिशेषभूतमिति न
२० वैपरीत्यमिति प्राप्त आह । शब्दे हीति । ज्ञानस्वरूपं तत्फलं च न युक्तिसिद्धम् । किंतु वेदमात्रसिद्धम् । तत्र तु—तमेवं विद्वानमृत इह भवति । ( नृ. पू. १।६ ) ब्रह्मविदाप्नोति परम् । ( तै. २।१ ) य एवं विदुरमृतास्ते भवन्ति ( बृ. ४।४।१४ ) इत्यादिवाक्यैर्ब्रह्मज्ञानस्य मोक्ष एव फलं श्रूयते । सर्वसाधनानां साक्षात्परंपराभेदेन तत्रैव पर्यवसा-
२५ नादतो धर्मिग्राहकमानविरोधात् संन्यासाश्रमीणकर्मशेषत्वमपि न वक्तुं

---

1 –M and A read द्वैतभावे for द्वैतभाने ।

शक्यमित्यर्थः। नन्वेवं संन्यासवैयर्थ्यमिति चेन्न। ब्रह्मविदतिरिक्तसंगस्य भगवद्विस्मारकत्वेनावश्यत्याज्यत्वेन श्रुत्या कथनादत एव—वेदान्तविज्ञान-सुनिश्चितार्थाः (म. ना. १०।६) इत्युक्त्वा संन्यासयोगाद्यतयः शुद्धसत्त्वाः (म. ना. १०।६) इत्युक्तम्। अत्र पञ्चम्यान्तःकरणे संस्कारविशेषाधायकत्वं
५ च प्रतीयते संन्यासस्य। स च संस्कारः फलोपकार्यङ्गमित्यावश्यकः संन्यासो मर्यादामार्गे। पुष्टिमार्गे त्वन्यैव व्यवस्था। न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह (भा. ११।२०।३१) इति वाक्यात् ॥ ३।४।१७ ॥

## परामर्शं जैमिनिरचोदना चापवदति हि॥ ३।४।१८॥

१० उर्ध्वरेतःसु च ज्ञानोक्तेस्तस्य मुक्तिफलकत्वोक्तेः—किं प्रजया करिष्यामो येषां नोयमात्मायं लोकः (बृ. ४।४।२२) इत्यादिश्रुतेश्च ब्रह्म-प्राप्तावेव सर्वस्याः श्रुतेस्तात्पर्यमिति सिध्यति। तस्या एव सर्वक्लेशापायपूर्व-कपरमानन्दरूपत्वान्न तु कर्मणि दुःखात्मकसंसारहेतुत्वात्तस्य जीवश्रेयोनि-मित्तमेव श्रुतिप्राकट्यात्।अन्यथा निषेधविधिर्न स्यात्।तथा च कर्मविधिनापि
१५ परंपरामोक्ष एव फलत्वेन परामृश्यत इति सिद्धम्। तं परामर्शं कर्मस्वात-न्त्र्यवादी जैमिनिरपवदति बाधत इत्यर्थः। मोहकशास्त्रप्रवर्तकः स इतीश्वर-मेव न मनुते यतोतस्तत्प्राप्तिस्तस्य मते दूरापास्ता। कर्मानधिकारिणाम-न्धादीनां संन्यासविधिविषयत्वम्। अन्यथा—वीरहा वा एष देवानां योग्निमुद्वासयते (तै. सं. १।१।५।२) इति श्रुतिर्न स्यादतो ब्रह्मचर्यं
२० समाप्य गृही भवेद् गृहाद्वनी भूत्वा प्रव्रजेद् यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वनाद्वा (जा. ४) इति श्रुतेरप्यङ्गहीन एव स विषयो यत आयुर्भागविभागेनाश्रमाणां विधानम्। तुरीये तस्मिन् देहेन्द्रियादिवै-कल्यं नियतमतः कर्मण्येव श्रुतेस्तात्पर्यम्। अपि च ज्ञानकर्मणोरलौकिक-फलसाधकत्वेन विहितत्वमेव प्रयोजकम्। अपरोक्षब्रह्मज्ञानं च न विधेयम्।
२५ साक्षात्स्वकृत्यसाध्यत्वाच्चोदनाबोधकलिङ्गाद्यभावाच्च ज्ञानस्य न मुक्तिसा-

20–C reads इति निषेधविधिर्न for इति श्रुतिर्न।

धकत्वं वक्तुं शक्यम् । य एनं विदुरित्यादिस्तु यागेष्विज्यविष्णुस्तुतिपरे-त्याशयेनाह । अचोदना चेति । जैमिनिवत्तत्सहायभूतेयमचोदना च परा-मर्शमपवदतीति संबन्धः । तथा च विधिसंबन्धात्कर्मैवानुष्ठेयम् । न तु मुक्तिसाधनमप्यतथात्वादिति स्थितम् ॥ ३।४।१८ ॥

५ **अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ ३।४।१९ ॥**

बादरायण आचार्यो जैमिनेरपि गुरुस्तदेव कर्तव्यमिति शिष्य-संमतमनुष्ठेयं कर्मापवदतीति पूर्वेण संबन्धः । तत्र हेतुः । साम्यश्रुतेः । यथा—वीरहा वा एष देवानाम् ( तै. सं. १।५।२ ) इति श्रुत्या कर्म-त्यागकर्तुर्निन्दा श्रूयते । एवमेव भगवज्ज्ञानरहितस्यापि सा श्रूयते यतः ।

१० तथाहि । असुर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभि-गच्छन्त्यविद्वांसोबुधा जनाः । ( ई. ३ ) एतदग्रेच—ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापि यन्ति ( बृ. ४।४।१४ ) इत्यादिरूपा । एतच्च निन्दामात्रेण साम्यमुक्तमापाततः । वस्तुतस्तु—तमेतं वेदानुवचनेन विविदि-षन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्वा मुनि-

१५ र्भवत्येतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ति ( बृ. ४।४।२२ ) इति श्रुत्या ज्ञानसाधनत्वेनैवाश्रमकर्मकरणोक्तेश्च न स्वातन्त्र्यं कर्मणो वक्तुं शक्यम् । अत एव शुकस्य न ब्रह्मचर्यादिकमपि । फलस्य जातत्वेन तत्साधनानपेक्षणात् । न च स्वर्गकामपदश्रवणान्नैवमिति वाच्यम् । त्वदभिमतलोकात्मकस्वर्गे—यन्न दुःखेन संभिन्नम् इति

२० वाक्यशेषोक्तस्वर्गपदप्रवृत्तिनिमित्तधर्माभावादात्मसुखस्यैव तादृशत्वात्तस्यैव तत्रोक्तेः । एवं सति—तमेतं वेदानुवचनेन ( बृ. ४।४।२२ ) इति श्रुत्ये-कवाक्यतापि संपद्यते । अन्यथातु विरोध एव । ननु दृष्टफलका अपि कारीरीचित्रादियागाः श्रूयन्त इति नैवं निर्णय इति चेत् । उच्यते । नित्यकर्मणो हि ज्ञानसाधनत्वमुच्यते । व्रीहिपश्वादीनां तन्निर्वाहकत्वात्त-

२५ च्छेषत्वेन तेषां विधानम् । एवं सति वीरहेति श्रुतिः साग्निकस्य गृहिण आलस्यादिदोषेण तदुद्वासने दोषमाह न त्वाश्रमान्तरपरिग्रह इति मन्त-व्यम् । अन्यथा तदुच्छेदस्तद्विधिवैयर्थ्यं च स्यात् । न चानधिकृतमादाय

तत्समाहितिरिति वाच्यम् । अत्र पृच्छामोन्धपङ्ग्वादिभिः प्रव्रजनं
कार्यमिति विधिरस्त्याहोस्विद् यावज्जीवमग्निहोत्रविधायकवाक्यप्रव्रजन-
विधायकवाक्ययोर्विरोधाभावाय विषयो भिन्नः कल्प्यते । नाद्यः । अश्रुतेः ।
न द्वितीयः । यदहरेव विरजेत् ( जा. ४ ) इति श्रुत्या वैराग्यवतः
५ प्रव्रजनविधानात्तेनैव विषयभेदसिद्धौ तत्कल्पनानवकाशात् । तेन—नापु-
त्रस्य लोकोस्ति ( ऐ. ब्रा. ७।१३।१२ ) इति श्रुतिरप्यविद्वद्विषयिणीति
न विरोधः । विद्वांसः प्रजां न कामयते (बृ. ४।४।२२) इति श्रुतेः ।
एतेनर्णत्रयापाकरणमपि प्रत्युक्तं वेदितव्यम् । आविद्वाद्विषयत्वात् यदप्यु-
क्तम् अचोदना चेति सूत्रावयवेन चोदनाबोधकलिङ्गाद्यभावो
१० बाधक इति । तदपि न साधीयः । श्रुतिसाम्यादेव । श्रूयते हि तस्मादेवं-
विच्छान्तो दान्त उपरतास्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत्
( बृ. ४।४।२३ ) इति । न च प्रमाणवस्तुपरतन्त्रत्वान्न ज्ञानस्य विधे-
यतेति वाच्यम् । इतरज्ञानस्य तथात्वेपि जीवात्मलक्षणेधिष्ठाने परमात्मनो
भगवतो दर्शनस्यान्यतोप्राप्तत्वाच्छ्रद्धान्तसाधनैस्तद्दर्शने स्वरूपयोग्यतासंप-
१५ त्तावात्मन्यधिष्ठाने परमात्मदर्शनानुकूलप्रयत्नविधानसंभवाच्छ्रवणविधिना
श्रुतिवाक्यजशाब्दज्ञानानुकूलप्रयत्नविधानवत् । एवमेव हि यागविधिनापि
क्रियारूपयागस्य स्वानुकूलप्रयत्नाधीनत्वेन स प्रयत्न एव विधी-
यते । अन्याप्राप्तत्वात् । न तु क्रिया । तत्प्रयत्ने सति तस्याः स्वत
एव संभवात् ।

२० अथवा। ननु यथा वीरहेति श्रुत्या कर्मत्यागो निन्द्यते तथैव—असुर्या नाम
ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्त्यविद्वांसोबुधा जनाः
(ई. ३) ये तद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवोपयन्ति ( बृ. ४।४।१४ )
इत्यादिश्रुत्या भगवज्ज्ञानाभावो निन्द्यते । एवं सति कर्मज्ञानानुकूलप्रयत्न-
योर्विधेयत्वे मिथोविरोधादधिकारिभेदेन विधेयत्वं वाच्यम् । नच—तावत्क-
२५ र्माणि कुर्वीत न निर्विद्येत यावता । ( भा. ११।२०।९ ) इति भगवद्वा-
क्याद्रागिणः कर्म विधीयते तद्रहितस्य ज्ञानमिति वाच्यम् । जनको ह वैदेहो
बहु दाक्षिणेन यज्ञेनेजे ( बृ. ३।१।१ ) इति श्रुतेर्नीरागत्वेन प्रसिद्धस्यापि

तस्य कर्मणि प्रवृत्तिर्या सा न स्यादधिकाराभावात् । अथ जनकदृष्टान्तेन कर्मणोऽङ्गित्वं ज्ञानस्य तदङ्गत्वं वाच्यम् । तथा च ज्ञानवता कर्मानुष्ठेयमिति प्राप्ते प्रतिवदति । अनुष्ठेयं बादरायणः साम्यश्रुतेः । ज्ञानमङ्गं तदाङ्गित्वेनानुष्ठेयं कर्मेति मतं बादरायणोपवदतीति पूर्वेण संबन्धस्तत्र हेतुमाह ।
५ साम्यश्रुतेरिति । स्वतोपुरुषार्थं कर्म फलार्थिनैवानुष्ठेयम् । तथा च—एष नित्यो महिमा ( बृ. ४।४।२३ ) इति श्रुत्या ज्ञानवति विहितनिषिद्धयोः कर्मणोः फलाजनकत्वेन साम्यं श्रूयत इति फलार्थिप्रवृत्त्यसंभवेन ज्ञानिनस्तथात्वाभावेन कर्मोच्छेदप्रसक्त्या न ज्ञानस्याङ्गत्वं वक्तुं शक्यम् । कृषीवलस्य व्रीहीणां वपने भर्जनस्येव । तथा च ज्ञानिनः प्रवृत्त्यसंभवेनान्येषां
१० च—अथेतरे दुःखमेवापि यन्ति—इति निन्दाश्रवणेन तथात्वात् सर्वार्थतत्त्वज्ञा श्रुतिर्ज्ञानबहिर्भूतं कर्म कथं विदध्यादिति ज्ञानस्य पुरुषार्थासाधकत्वोक्तिमसहमानेनाचार्येण प्रौढ्या निरूपितम् ॥ ३।४।१९ ॥

एवं सति पूर्वकाण्डवैयर्थ्यमापततीति तत्तात्पर्यमाह ।

## विधिर्वा धारणवत् ॥ ३।४।२० ॥

१५ यथा योगशास्त्रे मनःसमाधेरेव साध्यत्वात् तत्साधनत्वेनैव मानस्या मूर्तेर्धारणं विधीयते न तु स्वतन्त्रतया फलसाधकत्वेन मनःसमाधौ तत्त्यागात् । ततः किंचन न स्मरेत् । तच्चापि चित्तबाडिशं शनकैर्वियुङ्क्ते ( भा. ३।२८।३४ ) इत्यादिवाक्येभ्यस्तथा । तथा सति भक्तिसाधनत्वेनैवानुष्ठेयमिति तात्पर्येण कर्मविधिरुच्यते । न तु स्वतन्त्रतया फलसाधकत्वेन ।
२० ननु तत्र समाधिमधिकृत्य यमादीन्युक्तानीति तन्मध्यपातित्वेन धारणस्य तथात्वमुच्यते । प्रकृते ज्ञानं भक्तिं वाधिकृत्य न कर्म विहितमिति दृष्टान्तवैषम्यमिति चेत् । न । उक्तानुपपत्त्या स्वानिन्द्यमेव कर्म श्रुतिर्विदधातीत्यवश्यं वाच्यम् । निन्दायां चेतरपदाज्ज्ञानमध्यपातिन एव तद्विषयस्य प्राप्तेरावश्यकत्वात् । तथाच भगवज्ज्ञानस्येतरनिरपे-
२५ क्षत्वेन स्वरूपोपकारित्वमस्य कर्मणो वाच्यम् । तथा चोक्तम् । दानव्र-

---

3–M, A and D read प्राप्तं for प्राप्ते ।
21–M, A and C read युज्यते for उच्यते ।

तत्पोहोमजपस्वाध्यायसंयमैः । श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यते (भा. १०।४७।२४ ) इति । एष नित्यो महिमा (बृ. ४।४।२३ ) इति श्रुति-रपि—यज्ज्ञाने सति विहितनिषिद्धकर्मफलासंबन्धस्ताद्दित् स्यादित्यनुक्त्वा तस्यैव पदवित् स्यादिति यदुक्तवती तेन पदयोर्भक्तिमार्गरूपत्वात् तत्रच ५ पदयोरेव सेव्यत्वेन मुख्यत्वात्तज्ज्ञानानुकूलप्रयत्नमेव पूर्वं विदधते । तेन—शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः । त एव पश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुजम् ( भा. १।९।३६ ) इति वाक्याच्च वर्णाश्रमधर्मा आत्मधर्माश्च पदज्ञानसाधनत्वेन कर्तव्या इति सिद्धम् । तस्यैव तच्छब्दस्य प्रसिद्धार्थकत्वाल्लोकवेदप्रसिद्धस्य पुरुषोत्तम-१० स्यैव तत्रापि पदविदेव दीनभावेन भक्तिमार्गीयज्ञानवानेव स्यादित्येवकारः सर्वत्रानुषज्यते । तथा सति भक्तौ जातायां स्वत एव भगवज्ज्ञानं भवतीति ज्ञापयितुं—तं विदित्वा ( बृ. ४।४।२३ ) इति पश्चादुक्तवतीति तदाशयो ज्ञायते । अत एव पूर्वं कर्म निरूपितम् । साधनत्वात् ।

स्यादेतद् भक्तिसाधनत्वमेव चेत्कर्मणः श्रुतेरभिप्रेतं तदा भगवद्विदि १५ तत्फलासंबन्ध इत्यनुपपन्नमिति चेत् । मैवम् । कर्मणां हि भक्त्युत्पत्तौ स्वरूपयोग्यतासंपादकत्वमेव । नायमात्मा ( मुं. ३।२।३ ) इति श्रुतेः । कर्मज्ञानाभ्यामलभ्यत्वाद् भगवतः स्वरूपयोग्यतापेक्षापि मार्यादिकस्य नतु पौष्टिकस्यात एव वाशब्द उक्तो नियमवाची । तथा सति भगवदनुग्रहश्चे-त्तदा भक्तिस्तया पुरुषोत्तमज्ञानं तदा कर्मतत्फलसंबन्धगन्धोऽपि नेति किम-२० नुपपन्नम् । एतेन--तमेव विदित्वा मुनिर्भवति । ( बृ. ४।४।२२ ) अग्राह्यो नहि गृह्यते ( बृ. ३।९।२६ ) इत्यादिश्रुतीनां मिथो विरोधः परिहृतः । भक्त्या ग्राह्यत्वात्तादितरसाधनाग्राह्यत्वात् । अत एव विविदिषन्ति न तु विदन्त्यपीत्याशयवती—तमेतं वेदानुवचनेन ( बृ. ४।४।२२ ) इति श्रुतिः पठ्यते ।

२५ नचानुपदमेव—तमेव विदित्वा मुनिर्भवति ( बृ. ४।४।२२ ) इत्युक्तेः सांनिध्यादुक्तसाधनैरेव वेदनमभिप्रेतमिति वाच्यम् । वेदानुवचनादीनां सर्वेषां वेदनसाधनत्वे सर्वेषां तत्कर्तॄणां वेदनसंभवेन मुनिर्भवतीत्येकत्वं

तद्विदि न वेदेदतो ज्ञानं कस्यचिदेकस्य भवतीति ज्ञानस्य दुर्लभत्वं ज्ञाप्यते । मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः ( भ. गी. ७।३ ) इति भगवद्वाक्याच्च । तर्हि वेदानुवचनादिषु निःशंका प्रवृत्तिः कथम् । इत्थम् । स वा अयम्
५ ( बृ. ४।४।२२ ) इत्यादिकया पूर्वश्रुत्या भगवन्माहात्म्यं श्रुत्वा यथाकथंचित् तद्वेदनौत्सुक्ये सति सत्संगाभावेन भक्तिमार्गापरिचयात् । कर्ममार्गमात्रमाश्रमधर्मत्वेनालौकिकार्थसाधकत्वेनापि पूर्वं ज्ञातमस्तीति तदेव भगवद्वेदनेपि साधनमिति मन्यमानास्तदेव कुर्वन्ति । ननु वैदिकसाधनानां वैयर्थ्यं कथमिति चेत् । न । भ्रमकृतत्वेपि जन्मान्तरीयाक्षरज्ञानोपयोगि-
१० संस्काराधायकत्वेनावैयर्थ्यात् ॥ ३।४।२० ॥

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ ३।४।२१ ॥

ननु साम्यश्रुतेर्हेतोः कर्मशेषत्वं ज्ञानस्य यदपास्तं तन्नोपपद्यते । साम्योक्तेर्ज्ञानस्तुतिरूपत्वात् । अपि च तथा ज्ञानिनोऽपि कर्मोपादानात् कर्मकृतिस्वीकारादिति यावत् । अन्यथा ज्ञानिनां कर्मकृत्यभावेन तत्कृ-
१५ तगुणदोषाप्रसक्त्या तन्निषेधानुपपत्तिः स्यात् । तेषामपि तत्कृतगुणदोषसंबन्धोस्त्येवेति ज्ञापनाय मात्रपदम् । निषेधेनेतरसाधारण्यं परिह्रियते । तथा च ज्ञानिनोपि कर्मकरणात् कर्मशेषत्वं ज्ञानस्य निष्प्रत्यूहमिति चेन्नैवं वक्तुं युक्तम् । पदज्ञानस्य कर्मफलासंबन्धफलकत्वस्यापूर्वत्वाद्विधेयत्वमेव ।

२० न हि यस्य कर्मणो ज्ञानस्य वा यत्फलं तदुक्तिरपि स्तुतिरेवेति युक्तम् । तयोरुच्छेदापत्तेः । विधिर्हि प्रवर्तकः । तस्य पुरुषप्रवृत्त्युपयोग्यर्थकथनेनैव चारितार्थ्यादन्यार्थकथनस्य स्तुतित्वमस्तु नाम । न ह्येवं प्रकृते । मुमुक्षोः कर्मबन्धाभावप्रेप्सोस्तत्साधनत्वज्ञान एव प्रवृत्तिसंभवात् । यच्च कर्मफलसंबन्धनिषेधानुपपत्त्या कर्मसंबन्ध इत्युक्तम् । तन्न साधीयः । न हि
२५ तरणौ तमःकार्याभाव इत्युक्ते तत्प्राप्तिरपि संभवति । अथवा पुरुषोत्तमज्ञानमुख्यफलस्यातिमहत्त्वेन साक्षाद्वक्तुमशक्यत्वं ज्ञापयन्ती कैमुतिकन्या-

येन परंपरया तदाहानयर्चा—तं विदित्वा ब्राह्मणो भवतीति श्रुतेर्ब्राह्म-
णपदेन ब्रह्मविदुच्यते। तथा चाद्यपदेन बुद्धिस्थब्राह्मणमाहात्म्योद्देशे कृते
स क इत्याकाङ्क्षायामाह तं ब्राह्मणं विदित्वा विहितनिषिद्धफलासंबन्धी
भवतीतिलक्षण इत्यर्थः। साक्षाद्भगवद्विदः किमु वाच्यमिति भावः।
५ अतस्तस्यैव तच्छब्दस्य पूर्वपरामर्शित्वाद् ब्राह्मणस्यैव भगवद्विदो भक्त-
स्यैव पदवित् स्यात् तज्ज्ञानानुकूलप्रयत्नवान् स्यात् तद्भजेतेति यावत्।
तथा च यत्र भक्तविद्विषयकज्ञानस्याप्युक्तरीत्या न कर्मशेषत्वं वक्तुं शक्यं
तत्र भगवज्ज्ञानस्य तथात्वं दूरदूरतरामिति सर्वं सुस्थम् ॥ ३।४।२१ ॥

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ ३।४।२२ ॥

१० अथ प्रकारान्तरेण शङ्कते। भृगुर्वै वारुणिर्वरुणं पितरमुपससार।
( तै. ३।१ ) अधीहि भगव इति होपससाद सनत्कुमारं नारदः।
( छां. ७।१।१ ) प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम
( कौ. ३।१ ) इत्याद्युपाख्यानैर्हि ब्रह्मविद्या निरूप्यते। सर्वाण्याख्या-
नानि पारिप्लवे शंसन्तीति श्रुत्या शंसनशेषत्वं तेषामवगम्यते। शंसने
१५ शब्दमात्रस्य प्राधान्येनार्थज्ञानस्यातथात्वादुपदेशान्ताख्यानप्रतिपाद्यं ज्ञानं
मन्त्रार्थवदप्रयोजकमिति कर्मशेषत्वमपि न वक्तुं शक्यम्। प्राधान्यं तु
दूरापास्तम्। धर्मिण एवासिद्धिरित्याह। पारिप्लवार्था इति। उक्तरीत्या
सर्वा उपाख्यानश्रुतयः कर्मशेषभूता इत्यर्थः। अत्राचार्य एवमपि कर्म-
शेषत्वं ज्ञानस्य न संभवतीत्याह। नेति। कुतः। विशेषितत्वात्। कर्मणः
२० सकाशाज्ज्ञानं विशेषितमधिकधर्मविशिष्टत्वेनोक्तमिति न ज्ञानस्य कर्मशेषत्व-
मित्यर्थः। ननु विशेषितमाख्यानेष्वेवेत्यप्रयोजको हेतुरिति चेन्मैवम्।
आचार्याशयानवगमात्। तथाहि पूर्वं तुष्यतु दुर्जन इति न्यायेनाख्या-
नानां शंसनशेषत्वमुपेक्षित्वोच्यते। न ह्याख्यानेष्वेव ज्ञानं निरूप्यते।
किंत्वन्यत्रापि। तथा हि। तैत्तिरीयके पठ्यते। ब्रह्मविदाप्नोति परम्। तदे-
२५ षाभ्युक्ता। सत्यं ज्ञानमनन्तं ब्रह्म ( तै. २।१ ) इत्युपक्रम्य माहात्म्य-

---

8–C reads दूरतरं for दूरदूरतरम्।

विशेषज्ञानार्थमाकाशादिकर्तृत्वमुक्त्वानन्दमयत्वं रसरूपत्वमप्युक्त्वा भीषा-
स्मादित्यादिना सर्वनियामकत्वं चोक्त्वा भगवानेव पूर्णानन्द इति ज्ञाप-
नायानन्दगणनां कृत्वानन्दमयं पुरुषोत्तमं प्राप्तेनानुभूयमानानन्दस्वरूपं–
यतो वाचो निवर्तन्ते अप्राप्य मनसा सह ( तै. २।९ ) इत्यादिनोक्त्वा
५ तद्विदो माहात्म्यमुच्यते। एतꣳ ह वाव न तपति किमहं साधु नाकरवं
किमहं पापमकरवम् ( तै. २।९ ) इति। अत्र ज्ञानवान् सच्चिद्रूपदेश-
कालापरिच्छिन्नं सर्वकर्तारं निरवध्यानन्दात्मकं सर्वनियामकं मनोवाग-
गोचरं पुरुषोत्तमं प्राप्नोति। कर्म तु स्वयं क्लेशात्मकं तद्वांश्च अस्यैवानन्द-
स्यान्यानि भूतानि मात्रामुपजीवन्ति ( बृ. ४।३।३२ ) इति श्रुतेः। क्षुद्रत-
१० रानन्दजनकस्वर्गपश्वादि फलमाप्नोतीति विहितनिषिद्धकर्मणोश्चाप्रयो-
जकत्वं तस्मिन्नुच्यत इति कर्मणः सकाशाज्ज्ञानस्य निरवधिरेव विशेष
उच्यत इति न धर्म्यसिद्धिर्न वा कर्मशेषत्वं ज्ञानस्य सिध्यति ॥३।४।२२॥

तथाप्याख्यानप्रतिपादितविद्यानामसिद्धिरेवेति चेत्तत्राह ।

## तथा चैकवाक्यतोपबन्धात् ॥ ३।४।२३ ॥

१५ यथा केवलश्रुतेर्विद्याप्राधान्यं तथैवोपाख्यानश्रुतीनामित्यर्थः। चका-
रेण प्रश्नोत्तरैर्निर्णीतार्थप्रतिपादनम् । महतामेवात्र प्रवृत्तिः । सापि ब्रह्मा-
यासपूर्विकेति विद्यामाहात्म्यज्ञापनं प्ररोचनं चाधिकमुपाख्यानानामुपा-
ख्यानं विनैव विद्यानिरूपिकायाः श्रुतेः सकाशादित्युच्यते । तत्र हेतुरे-
कवाक्यतोपबन्धादिति । आचार्यवान् पुरुषो वेद ( छां. ६।१४।२ ) इति
२० श्रुत्यैकवाक्यताज्ञानमाख्यानं विना न भवतीति तदर्थमुपबन्धाद् गुरु-
शिष्यकथोपबन्धादित्यर्थः । अथवोपाख्यानरहितायां श्रुतौ यथा ज्ञानं
निरूप्यते तथैव–अधीहि भगव इति होपससाद सनत्कुमारं नारदः ( छां.
७।१।१ ) इत्याद्याख्यानेष्वपि निरूप्यत इत्यनाख्यानश्रुत्यैकवाक्यतयैवा-
ख्याने ज्ञानस्वरूपबन्धात् प्रतिपादनादित्यर्थः । नैकट्यवाचिनोपपदेन
२५ वस्तुसती या तत्तद्गुरुतत्तच्छिष्यकथा तत्सामीप्यमत्रोच्यते । अन्यथा
सामीप्यासंभवादतः कल्पितत्वशङ्कानिरासः । नन्वेवमपि पारिप्लवार्थत्वे न

बाधकं पश्याम इति चेद् उच्यते । अश्वमेधप्रकरणे—मनुर्वैवस्वतो राजा इत्यादीन्याख्यानानि यत्र पठितानि तत्र सामान्यतस्तेषां विनियोगः सर्वाण्याख्यानानि पारिप्लवे शंसतीत्यनेनोक्त इति सर्व- शब्दस्तदाख्यानपर एव न त्वाख्यानान्तरपरोपि । प्रकरणस्य नियामक-
५ त्वात् । एवं सति यदा पारिप्लवाख्यकर्मप्रस्तावस्तदा विशेषविनियोग उक्तः । पारिप्लवमाचक्षीतेति । तत्र प्रथमेहनि—मनुर्वैवस्वतो राजा इति । द्वितीयेहनि—इन्द्रो वैवस्वत इति । तृतीयेहनि—यमो वैवस्वतो राजा इत्याद्याख्यानविशेषा वाक्यशेषे विनियुज्यन्ते । आख्या- नसामान्यपरत्वे त्वहोविशेष उपाख्यानविशेषविधानं न स्यात् । अत एव
१० पारिप्लवमित्येकवचनमतो नाख्यानान्तरगन्धसंबन्धोपि । प्रापकाभावात् ॥ ३।४।२३ ॥

## अत एव चाग्नीन्धनाद्यनपेक्षा ॥ ३।४।२४ ॥

एवं पुरुषार्थोतः शब्दात् ( ब्र. सू. ३।४।१ ) इत्युपक्रम्य ज्ञानस्य फल- साधने कर्मानपेक्षत्वमुपपाद्य तत्रैवोपपत्त्यन्तरमाह । यतो ज्ञानी ज्ञानेन
१५ स्वयमेव यज्ञात्मको जातोत एव जरामर्याग्निहोत्रेग्निस्तदिन्धनं समिदा- दीति तदादाय आज्यादयस्तेषामनपेक्षोक्ता । श्रुतौ तैत्तिरीयके पठ्यते । तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी शरीरमिध्ममुरो वेदि- र्लोमानि बर्हिर्वेदः शिखा हृदयं यूपः काम आज्यं मन्युः पशुस्तपोग्निः ( ना. ८० ) इत्यादि । एतेन यदन्यस्य यज्ञतासंपादकं तस्य स्वकार्य-
२० साधने कथं यज्ञापेक्षा भवेदिति भावः सूच्यते ॥ ३।४।२४ ॥ १ ॥

---

## २ सर्वापेक्षेत्यधिकरणम् ।

## सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ ३।४।२५ ॥

उक्तन्यायेन ज्ञानं प्रति कर्मणः फलोपकारित्वाभावेपि स्वरूपोप- कारित्वमस्ति न वेति चिन्त्यते । तत्र नेति पूर्वः पक्षः । गुरूपसत्तितदुप-

---

8–C reads इत्याख्यान for इत्याद्याख्यान ।

देशैरेव तत्संभवात् । आचार्यवान् पुरुषो वेद (छां. ६।१४।२) इति श्रुतेः ।
अत्र सिद्धान्तमाह । सर्वापेक्षेति । सर्वेषां कर्मज्ञानभक्तीनां पुरुषोत्तम-
ज्ञानोत्पत्तावस्त्यपेक्षा । अत्र प्रमाणमाह । यज्ञादिश्रुतेरिति यज्ञादिनिरू-
पिका श्रुतिरेव प्रमाणं यत इत्यर्थः । इदमत्राकूतम् । पुरुषोत्तम एव
५ स्वतन्त्रपुरुषार्थरूपस्तत्प्राप्तिरेव फलम् । तत्र प्रेमभक्तिजं तज्ज्ञानमेव साधन-
मिति—ब्रह्मविदाप्नोति परम् ( तै. २।१ ) इत्यादिना—एतद्विदुरमृतास्ते
भवन्ति ( बृ. ४।४।१४ ) इत्यादिश्रुतिसहस्रैश्च प्रतिपाद्यते । अथेतरे
दुःखमेवोपयन्ति ( बृ. ४।४।१४ ) इति श्रुत्या ज्ञानरहितानां दुःखमात्र-
प्राप्तिरुच्यते । एवं सति स्वतोपुरुषार्थरूपं यज्ञादिकं सर्वार्थतत्त्वप्रतिपादिका
१० श्रुतिर्यन्निरूपयति तत्सर्वथा पुरुषार्थसाधनत्वेनैवेति मन्तव्यम् । तच्च
निष्कामतयैव कृतं तथा । अत एव वाजसनेयिशाखायां—यथाकारी यथा-
चारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति ( बृ.
४।४।५ ) इत्युपक्रम्य पठ्यते । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण
इति नु कामयमानोथाकामयमानो योकामो निष्काम आत्मकाम आप्त-
१५ कामो भवति न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन्
ब्रह्माप्येति ( बृ. ४।४।६ ) इत्यादि । अत्र अथाकामयमानः कर्ता
निरूप्यत इति शेषः । यः पुमान् कर्मकृतावकामस्ततो निष्कामः सन्ना-
त्मकामो निरुपधिस्नेहवान् प्रभौ ततो भगवत्प्राप्त्याप्तकामो भवतीत्यर्थः ।
अत्र यथाकारीत्यादिना कर्मकर्तुरेवोपक्रमादथाकामयमान इत्यनेनापि
२० तथाभूतः स एवोच्यते । एवं सति सत्कर्माणि प्रवृत्त्यर्थं विविधफलानि
स्वयमेवोक्त्वा जनान् भ्रामितवानिति स्वोक्तकरणाच्चिरेण दयया निष्कामं
करोति सकामतयापि क्रियमाणेन वैदिककर्मणानेकजन्मभिः संस्कारविशेष-
प्रचयेनापि तथा । कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते इति स्मृतिभ्यश्च
ज्ञानोत्पत्तौ कर्मापेक्षास्तीति । चकारेण पुष्टावङ्गीकृतस्य सर्वानपेक्षेति सा समु-
२५ च्चीयते । अत एव नायमात्मेत्यादिश्रुतिर्न विरुध्यते । ननु ज्ञानद्वारा कर्मा-
दीनामेव फलसाधकत्वमस्त्विति शङ्कानिरासाय दृष्टान्तमाह । अश्ववदिति ।
यथा स्नेहफलसाधकदेशव्यवधानात्मकदेशातिक्रमेश्वस्य साधनत्वं न

तु तत्फलसिद्धावपि तथाधिभौतिकाध्यात्मिकाधिदैविकप्रतिबन्धानिवृत्तावेव तेषां साधनत्वं न तु भगवत्प्राप्तावपीत्यर्थः । इदं च मुमुक्षुभक्तविषयकमिति ज्ञेयम् । आत्यन्तिकभक्तिमतां भक्तीतरानपेक्षणात् ॥ ३।४।२५ ॥

## शमदमाद्युपेतः स्यात्तथापि तु तद्विधेस्तदङ्गतया
५ ## तेषामवश्यानुष्ठेयत्वात् ॥ ३।४।२६ ॥

ननु—तस्मादेवंविच्छान्तो दान्त ( बृ. ४।४।२३) इत्यादिना शमादेरेव ज्ञानसाधनत्वमुच्यते न तु यज्ञादेरिति चेत्तत्राह शमदमाद्युपेतो भक्तिमार्गेपि स्यादेव यद्यपि तथापि तदङ्गतयात्मन्येवात्मानं पश्येदिति ज्ञानमार्गीयज्ञानाङ्गतयैव शमादिविधेर्हेतोर्ज्ञानमार्गे तेषामवश्यानुष्ठेयत्वात्तथा १० विधिरित्यर्थः । भक्तिमार्गे स्वत एव शमादीनां संभवेप्यावश्यकत्वं न तेषामिति भावः ॥ ३।४।२६ ॥

## सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ ३।४।२७ ॥

ननु सत्त्वशोधकत्वेन यज्ञशमदमादेर्विधानमिति मतं नोपपद्यते । आहारशुद्धौ सत्त्वशुद्धिः ( छां. ७।२६।२ ) इति श्रुतेस्तद्विरुद्धा सर्वान्न-१५ भक्षणानुमतिरपि यतः श्रूयते छन्दोगानाम् । न ह वा एवंविदि किंचनानन्नं भवति ( छां. ५।२।१ ) तथा वाजसनेयिनां—न ह वा अस्यानन्नं जग्धं भवति ( बृ. ६।१।१४ ) इत्यादि । तस्मात्सत्त्वशुद्ध्यर्थं यज्ञादेर्न विधानमिति प्राप्ते विषयव्यवस्थामाह । आहारदौर्लभ्येन प्राणात्यय उपस्थिते प्राणधारणस्य ज्ञानान्तरङ्गतमसाधनत्वेनाहारस्य देहपोषकत्वेन ततो २० बहिरङ्गत्वात्तदनुमतिः क्रियत इत्यर्थः । अत्र प्रमाणमाह । तद्दर्शनादिति । चाक्रायणः किलर्षिरापद्गत इभ्येन सामिखादितान् कुल्माषांश्चखाद ( छां. १।१०।५ ) इत्यादिश्रुतिदर्शनादित्यर्थः । यद्यपि ज्ञानसाधनत्वेन सत्त्वशुद्धेरपेक्षितत्वाज्जाते ज्ञाने तत्साधनानपेक्षणादेवंविदीति वचनात् तादृशे सार्वांदिक्यपि तदनुमतिर्नानुचिता । अपि स्मर्यते ( ब्र. सू. २५ ३।४।२९ ) इत्यनेनाविदुषोप्यनुमतेर्वक्ष्यमाणत्वाच्च । तथाप्याचार्येणावस्था-

१ श्रुतितात्पर्यमेतत् ।

विशेषविषयकत्वमुक्तं यत्तेन ज्ञानिनोऽप्यन्नापादि विहितत्यागोविहितकरणं च चित्तमालिन्यजननेन ज्ञानतिरोधायकमिति श्रुत्यभिमतमिति ज्ञाप्यते । अत एव श्रीभागवते द्वितीयस्कन्धे–विशुद्धं केवलं ज्ञानं प्रत्यक्सम्यगवस्थितम् । सत्यं पूर्णमनाद्यन्तं निर्गुणं नित्यमद्वयम् । ऋषे विदन्ति मुनयः ५ प्रशान्तात्मेन्द्रियाशयाः । यदा तदेवासत्तर्कैस्तिरोभूयेत विप्लुतम् ( भा. २।६।३९–४० ) इति ब्रह्मणोक्तम् । ज्ञानिनामपि चेतांसि देवी भगवती हि सा । बलादाकृष्य मोहाय महामाया प्रयच्छति (मा. पु. दे.मा.१।५४) इति मार्कण्डेयेनाप्युक्तम् । एषा ज्ञानमार्गीयज्ञानवतो व्यवस्थेति ज्ञेयम् । भक्तिमार्गीयस्यैवमापदसंभवात् । अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपा- १० सते । तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम् ( भ. गी. ९।२२ ) इति भगवद्वाक्यात् । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ( भ. गी. ७।१४ ) इत्यत्रैवकारेण पुरुषोत्तमज्ञानवत एव मायातरणोक्तेरक्षरमात्रज्ञानवतां तथात्वमुचितम् ॥ ३।४।२७ ॥

## अबाधाच्च ॥ ३।४।२८ ॥

१५ आपदि तथान्नभक्षणेन चित्ताशुध्यसंभवेन तज्जानितप्रतिबन्धाभावाच्च न दोष इत्यर्थः ॥ ३।४।२८ ॥

## अपि स्मर्यते ॥ ३।४।२९ ॥

आपद्यविदुषोऽपि दुष्टान्नभक्षणे पापाभावो यत्र स्मर्यते तत्र विदुषि श्रुत्यनुमते का शङ्केत्यर्थः । स्मृतिस्तु–जीवितात्ययमापन्नो योन्नमात्ति २० यतस्ततः । लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ( म. स्मृ. १०।१०४ ) इति । अथवा विदुषो दुष्टकर्मासंबन्धो–ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ( भ. गी. ४।३७ ) इति स्मर्यतेपीत्यर्थः ॥ ३।४।२९ ॥

## शब्दश्चातो कामकारे ॥ ३।४।३० ॥

यतो ज्ञानाग्निरेव सर्वकर्मदहनसमर्थ इति फलदशायां कामकारेपि न दोषोत एव साधनदशायां तदभावेन–तस्मादेवंविच्छान्तो दान्त

उपरतस्तितिक्षुः ( बृ. ४।४।२३ ) इत्यादिरूपः शब्दः कामकारनिवर्तकः श्रूयत इत्यर्थः ॥ ३।४।३० ॥ २ ॥

---

## ३ विहितत्वाच्चाश्रमकर्मेत्यधिकरणम् ।

एवं ज्ञानस्य कर्मनाशकत्वे सिद्धे जातज्ञानस्याश्रमकर्म कर्तव्यं ५ न वेति चिन्त्यते। तत्र फलस्य जातत्वात् कृतस्यापि नाश्यत्वेनाप्रयोजकत्वान्न कर्तव्यमिति पूर्वः पक्षः। तत्र सिद्धान्तमाह।

### विहितत्वाच्चाश्रमकर्मापि ॥ ३।४।३१ ॥

यथा ज्ञानिनामप्यनापदि शिष्टानामेवान्नं भक्षणीयं विहितत्वात्तथाश्रमकर्मापि कर्तव्यमेव नित्यं विहितत्वादित्यर्थः। यथानापद्यशिष्टान्न- १० भक्षणं दोषाय निषिद्धत्वात्। एतच्चोपपादितं सर्वान्नानुमतिरित्यत्र। तथा नित्यत्यागोपि प्रत्यवायजनक इति तत्कर्तव्यमेवेति भावः ॥३।४।३१॥

यच्चोक्तं कृतस्यापि नाश्यत्वेनाप्रयोजकत्वान्न कर्तव्यमिति तत्राह।

### सहकारित्वेन च ॥ ३।४।३२ ॥

शमदमादीनामन्तरङ्गसाधनानां सहकारीण्याश्रमकर्माणीत्येत- १५ द्रहितैः शमादिभिरपि ज्ञानं न स्थिरीकर्तुं शक्यमिति तानि कर्तव्यान्येवेत्यर्थः। संसारवासनाजनकत्वस्वभावो यः कर्मणां स ज्ञानेन नाश्यत इति न सहकारित्वेनुपपत्तिः काचिदिति भावः ॥ ३।४।३२ ॥

एवं ज्ञानमार्गीयज्ञानस्थैर्यसाधनमुक्त्वा भक्तिमार्गीयसाधनानां भगवच्छ्रवणादीनामित आधिक्यमावश्यकतां चाह।

### २० सर्वथापि त एवोभयलिङ्गात् ॥ ३।४।३३ ॥

भगवच्छ्रवणकीर्तनादयः साधनान्तरवद्विहितत्वेन कर्तव्या एव यद्यपि तथापि सर्वथापि अन्येषां युगपदुपस्थितौ तदनुरोधमकृत्वापि त

---

11–ख reads तत्त्यागोपि for नित्यत्यागोपि।

एव भगवद्धर्मा एव कर्तव्या इत्यर्थः । कुतः । श्रुतिलिङ्गात् स्मृतिलिङ्गाच्च । श्रुतिलिङ्गं तु—तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः । नानुध्यायाद् बहूञ्छब्दान् वाचो विग्लापनं हि तत् । ( बृ. ४।४।२१ ) इति । तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथामृतस्यैष सेतुः ( मुं. ५ २।२।५ ) इत्यपि । अत्रैवकारेण भगवदतिरिक्तं प्रतिषिध्य तद्विषयकं ज्ञानानुकूलं प्रयत्नं श्रवणात्मकं विज्ञायेति विधाय स्मरणमपि तन्मात्रविषयकमेव प्रज्ञां कुर्वीतेति वचनेन विधाय तदेकनिष्ठताहेतुभूतानामेव शब्दानामावर्तनमर्थानुसंधानमपि कर्तव्यं नान्येषामिति नानुध्यायाद् बहूनित्यनेनोक्तवती । अत्रान्वित्युपसर्गेण ध्यानस्य पश्चाद्भावित्वमुच्यते । १० तेन योग्यतया श्रवणकीर्तने एव तत्पूर्वभाविनी प्राप्येते । स्मृतिस्तु—शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः । त एव पश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुजम् ( भा. १।९।३६ ) इति । महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् । सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः । नम- १५ स्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ( भ. गी. ९।१३–१४ ) इति । एतेन भगवद्धर्माणामात्मधर्मत्वेनान्तरङ्गत्वादाश्रमकर्मणो देहधर्मत्वेन बहिरङ्गत्वात्तदविरोधेनैव तत्कर्तव्यामिति स्थितम् । अत एव भगवद्धर्मान्यधर्मं प्रतिषिध्य तेषां सर्वेभ्य आधिक्यं ज्ञापयितुं—स वा अयमात्मा सर्वस्य वशी ( बृ. ४।४।२२ ) इत्यादिना भगवन्माहात्म्यमुक्तम् २० ॥ ३।४।३३ ॥

## अनभिभवं च दर्शयति ॥ ३।४।३४ ॥

प्राधान्येन भगवद्धर्मा एव कर्तव्या इत्यत्रोपोद्बलकान्तरमनेनोच्यते । सर्वं पाप्मानं तरति । नैनं पाप्मा तरति । सर्वं पाप्मानं तपति। नैनं पाप्मा तपति ( बृ. ४।४।२३ ) इत्यादिना भगवद्धर्मानुरोधेनाश्रम- २५ कर्माकरणजदोषैरनभिभवं च श्रुतिर्दर्शयत्यतो भगवद्धर्मा एव सर्वेभ्य उत्तमानि साधनानीत्यर्थः ॥ ३।४।३४ ॥

---

26–C reads उत्तमा इत्यर्थः for उत्तमानि साधनानीत्यर्थः ।

## अन्तरा चापि तु तद्दृष्टेः ॥ ३।४।३५ ॥

भगवद्धर्मेभ्य आश्रमधर्मा हीना इत्यप्यल्पमुच्यते । अपि तु तस्मिन्पुरुषोत्तमे धर्मिण्येव दृष्टिस्तात्पर्यं यस्य पुंसस्तस्याश्रमधर्मा अन्तरा च फलसिद्धौ व्यवधानरूपाश्चेति श्रुतिर्दर्शयतीति पूर्वेण संबन्धः । अन्तरा-
५ शब्दोत्राव्ययात्मको व्यवधानवाचकः । तथा च श्रुतिः । एतद्ध स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोयमात्मायं लोकः (बृ. ४।४।२२) इति ऋणापाकरणहेतुत्वेन लौकिकोत्कर्षहेतुत्वेनापि प्रजाया अभीष्टत्वेपि तदुत्पादनव्यासंगेन भगवदानन्दानुभवेन्तरायो भविष्यतीति तद्दृष्ट्या तत्रोपेक्षां दर्शयति ॥ ३।४।३५ ॥

## अपि स्मर्यते ॥ ३।४।३६ ॥

१०

अपिशब्देनाश्रमधर्माणां तथात्वं किमु वाच्यं यतो ज्ञानतत्साधनवैराग्यादीनामप्यन्तरायरूपत्वं स्मर्यते । तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ( भा. ११-२०-३१-६-१४-६ ) इति भगवद्वाक्यम् ॥ ३।४।३६ ॥

## विशेषानुग्रहश्च ॥ ३।४।३७ ॥

१५

स्मर्यत इति पूर्वेण संबन्धः । ज्ञानादेः सकाशाद्भक्तिमार्गे फलतोप्युत्कर्षमाह । ज्ञानादिसाधनवस्त्वनुग्रहो मुक्तिपर्यन्त एव । भक्तिमार्गे तु—अहं भक्तपराधीनो ह्यस्वतन्त्र इव द्विज ( भा. ९।४।६३ ) इत्यादिवाक्यैर्विशेषरूपो मुक्तादिभ्योपि भक्तानां व्यावर्तको भगवदनुग्रहः स्मर्यत
२० इत्यर्थः ॥ ३।४।३७ ॥

गूढाभिसंधिमुद्घाटयन् फलितमर्थमाह ।

## अतस्त्वितरज्ज्यायो लिङ्गाच्च ॥ ३।४।३८ ॥

अत इति पूर्वोक्तश्रुतिस्मृतिपरामर्शः । तथा चेतरस्या मुक्तेरपि भक्तिमार्गीयतदीयत्वमेव ज्याय इत्यर्थः । अत्र हेत्वन्तरमाह—लिङ्गा-
२५ च्चेति । मुक्तानां तु मायाविनिर्मुक्तमात्मस्वरूपमेव न तु देहेन्द्रियादिकमप्यस्ति

येन भजनानन्दानुभवः स्यात् । भक्तानां तु देहेन्द्रियादिकमपि मायातत्कार्यरहितत्वेनानन्दरूपत्वेन च भगवदुपयोग्यतोपि तत्तथेत्यर्थः । न हि मुक्तात्मनां कश्चन भगवदुपयोगोस्तीति भावः । तदुक्तं श्रीभागवते—न यत्र माया किमुतापरे हरेरनुव्रता यत्र सुरासुरार्चिताः ( भा. २।९।१० )
५ इत्यादि मुक्तोपसृप्यत्वं चोच्यते । अत एव सप्तमस्कन्धे देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम् ( भा. ७।१।३४ ) इत्युक्तम् । पुरवासित्वे देहादेरावश्यकत्वान्निषेधो जडात्मकानामेवेत्यवगम्यते । इतरज्ज्याय इति पाठे तु पूर्वोक्ताश्रमकर्मपरामर्शोति इत्यनेनोक्तयोरेव वा । एतेन—सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ( तै. २।१ ) इत्युक्तफलवत्त्वं
१० तस्य सूच्यते ॥ ३।४।३८ ॥ ३ ॥

---

## ४ तद्भूतस्येत्यधिकरणम् ।

### तद्भूतस्य तु नातद्भावो जैमिनिरपि नियमातद्रूपाभावेभ्यः ॥ ३।४।३९ ॥

अथेदं विचार्यते । तदीयानामपि कदाचित् सायुज्यमस्ति न वेति ।
१५ तत्र भक्तिमार्गस्यापि साधनरूपत्वात्तस्य च मुक्तावेव पर्यवसानात्तदीयत्वस्य साधनावस्थारूपत्वात् तेषामपि मुक्तिरावश्यकी । तथा च फलतो न कश्चिद् विशेष इति प्राप्ते ।

उच्यते । तद्भूतस्येत्यादि । तुशब्देन मर्यादामार्गीयव्यवच्छेदः । अत्र विश्वासदाढर्यायाह । अन्यस्य का वार्ता कर्ममात्रनिरूपकस्य जैमि-
२० नेरपि यदि कदाचिद् भगवत्कृपयायं भावो भवेत्तदा तद्भूतस्य पुष्टिमार्गीयभगवद्भावं प्राप्तस्य तस्यापि नातद्भाव उक्तभावतिरोधानं न कदाचिदपीत्यर्थः। अत्र हेतूनाह। नियमादीन्। तैत्तिरीयके—ते ते धामान्युष्मसि (तै. सं. १।३।६) इति मन्त्रे यत्र भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य परमं

---

9–M, A and C read इति श्रुत्युक्त for इत्युक्त ।
17–C reads कर्मफलतो for फलतो ।

पदम् ( तै. सं. १।३।६ ) इत्युक्त्वा तदनन्तरं तत्र कृतानि कर्माण्यपि—विष्णोः कर्माणि पश्यत ( तै. सं. १।३।६) इति मन्त्रेण निरूप्य पुनः पूर्वोक्तलीलास्थानं—तद्विष्णोः परमं पदम् ( तै. सं. १।३।६ ) इति पदेनानूद्य तस्य नित्यत्वनिरूपणायोच्यते। सदा पश्यन्ति सूरयः ( तै. सं.
५ १।३।६ ) इति सूरयो विद्वांसः पुरुषोत्तमज्ञानवन्त इति यावत्। तच्च भक्त्यैवेति सूरिपदेन भक्ता उच्यन्ते। तथाच भक्तानां सार्वदिकदर्शनं नियम्यते सदेतिपदेन। एवं सति पुष्टिमार्गीयभगवद्भावं प्राप्तस्य मुक्तावुच्यमानायां तन्नियमो भज्येतेत्यर्थः। यच्चोक्तं साधनावस्थायामुत्तमावस्थारूपत्वं परं तदीयत्वस्य फलं मुक्तिरेवेति तत्राहातद्रूपेति। उक्तभगवदी-
१० यत्वं न साधनरूपमपि तु मुक्तेरपि फलरूपम्। मुक्तानामपि सिद्धानां नारायणपरायणः। सुदुर्लभः प्रशान्तात्मा ( भा. ६।१४।५ ) इति वाक्यात्। यदा सर्वे प्रमुच्यन्ते कामा येस्य हृदि श्रिताः। अथ मर्त्योमृतो भवत्यत्र ब्रह्म समश्नुते ( बृ. ४।४।७ ) इति श्रुत्यामृतस्य मुक्तस्य ब्रह्मस्वरूपभोग उच्यते। स च—यमेवैष वृणुते ( मुं. ३।२।३ ) इति श्रुतेर्भ-
१५ गवदीयत्वसाध्य एवेति स्पष्टफलत्वमस्यातोतद्रूपत्वम्। किंच। फलं हि साधनादुत्तमं भवति। भगवदीयत्वादुत्तमस्यार्थस्याभावादपि न मुक्तिर्वकुमुचिता। तदुक्तं श्रीभागवते पञ्चमस्कन्धे पूर्वं भक्तिस्वरूपं निरूप्य—तयैव परया निर्वृत्त्या ह्यपवर्गमात्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्तसर्वार्थाः (भा. ५।६।१७) इति
२० ॥ ३।४।३९ ॥ ४ ॥

---

## ५ न चाधिकारिकमित्यधिकरणम्।

### न चाधिकारिकमपि पतनानुमानात्तदयोगात्॥ ३।४।४०॥

अथेदं विचार्यते। ध्रुवायेव ब्रह्मादिलोकाधिकारं दत्वा तत्संबन्धिफलं ददाति न वेति। तत्र नेत्याह। न चेति। तत्र हेतुः। पतनानुमानादिति।
२५ आब्रह्मभुवनांल्लोकाः पुनरावर्तिनोर्जुन ( भ. गी. ८।१६ ) इति स्मृतेरित्यर्थः। फलस्य सावधित्वादिति भावः। किंच तादृशे भगवदीये यजना-

योगादपि न तथा । अथवा । तादृशस्य सदा भक्तिरसानुभवात्तदतिरिक्त-स्यानपेक्षणादन्येषां फलानां संबन्धाभावादित्यर्थः ॥ ३।४।४० ॥

## उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ३।४।४१ ॥

एके भक्ता आधिकारिके फले पतनमात्रं न हेयत्वप्रयोजकमिति
५ वदन्त्यपि तूपपूर्वं पतनमेव तदिति वदन्ति । भक्तिभावाच्च्युतेः । अधिकार-समाप्तौ भगवदनुग्रहाशापि कदाचित्संभवतीत्युपपतनं तत् । मुक्तौ त्वपुन-रावृत्तेर्भक्तिरसाशापि नेति महापतनमेव सेति भावः । तेन निषिद्धकर्म-फलतुल्यत्वं ज्ञापितं भवति । अत एव श्रीभागवते—नारायणपरा लोके न कुतश्चन बिभ्यति । स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः । ( भा. ६।१८।
१० २८ ) इति गीयते । भक्तिमार्गे तु साक्षात्संगाभावेपि तदीयभावमात्रमप्य-शनवत् साक्षाद्भगवत्स्वरूपभोगवदेव मन्यते । तदुक्तं श्रीभागवते—अथ ह वाव तव ( भा. ६।९।३९ ) इत्यादिना । साक्षाद्भगवद्भोगो जीवस्यासं-भावित इति शङ्कानिरासायाह । तदुक्तमिति । सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ( तै. २।१ ) इति । अत्र ब्रह्म समश्नुते ( बृ. ४।४।७ )
१५ इत्यादिश्रुतिषु साक्षाद्ब्रह्मस्वरूपरसाशनमुक्तमित्यर्थः ॥ ३।४।४१ ॥ ५ ॥

---

## ६ बहिस्तूभयथेत्यधिकरणम् ।

## बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ३।४।४२ ॥

अथेदं विचार्यते । प्रचुरभगवद्भावमात्रवतः साक्षात् स्वरूपभोगवतो वा गृहत्यागः कर्तव्यो न वेति फलस्य सिद्धत्वान्नेति पक्षव्यवच्छेदाय—
२० मद्वार्तायातयामानां न बन्धाय गृहा मताः ( भा. ४।३०।१९ ) इति वाक्याद् बन्धकत्वेन त्याज्य इति पक्षव्यवच्छेदाय च तुशब्दः । भाव-मात्रे साक्षात्प्रभुसंबन्धे वोभयथापि गृहाद् बहिर्गमनं गृहत्याग इति यावत् । स आवश्यकः । तत्र प्रमाणमाह । स्मृतेरित्यादि । त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु । मय्यावेश्य मनः सम्यक् समदृग् विचरस्व गाम्

---

18—M, A and C read चिन्त्यते for विचार्यते ।

( भा. ११।७।६ ) इत्यादिस्मृतिर्भगवद्भाववतस्तत्संगविशिष्टस्यापि बहिर्गमनमाह । तदाचारोपि तथैव श्रूयतेतस्तथा । अत्रायमाशयः । आश्रमधर्मत्वेन गृहत्यागो यदहरेवेत्यादिश्रुतिभ्यः पूर्वमुपपादितोपि यदधुना पुनरुच्यते तेन तदातिरिक्तोयामिति ज्ञायते । तथा चोक्तवाक्यान्मुमुक्षुमुक्तिप्र-
५ तिबन्धकत्वाभावेपि व्यासंगस्य तत्रावश्यकत्वादुक्तोभयोरप्यनवरतं प्रभुरसास्वादे प्रतिबन्धकत्वेन तस्य तत्त्यागस्य विप्रयोगरसानुभावकत्वेन च स कर्तव्यः । यद्यपि स्वेष्टान्तरायत्वेन स्वत एव तत्त्यागो भावी तथापि— आश्रमादाश्रमं गच्छेत् ( भा. ११।१७।३८ ) इति वाक्यादत्राश्रमान्तरत्वाभावेन त्यागस्याविहितत्वशङ्काभावायेयमुक्तिरिति ॥ ३।४।४२ ॥

१० **स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ३।४।४३ ॥**

पुष्टिमार्गीयभक्तस्य विहितत्वादिति ज्ञानमप्रयोजकम् । तत्र हेतुः—तस्य भक्तिमार्गस्वामिनः श्रीगोकुलेशादेव फलस्य श्रुतेरतो बहिर्गमनं न साधनत्वेनात्र कार्यमिति भावः । अत्र—यमेवैष वृणुते ( मुं. ३।२।३ ) इति श्रुतिरनुसंधेया । एतदनुपदमेव पठ्यते । नायमात्मा बलहीनेन लभ्यः
१५ ( मुं. ३।२।४ ) इति । अत्र भगवद्वरणानन्तरमपि जीवबलं कतमद् यदपेक्षो भगवल्लाभ इति जिज्ञासायां सर्वात्मभाव एव बलमिति निर्णीयते । तस्यैव मर्यादाबलोपमर्दकत्वाद्भगवद्वशीकारहेतुत्वाच्च । व्रजसीमन्तिनीनां प्रभुवचनातिक्रममपि कृत्वा स्वरूपपरिग्रहस्तद्बलेनैव यत इत्यात्रेय आचार्यो मनुते । इदमत्राभिप्रेतम् । सर्वात्मभावस्य यद्बलं तत्तदा-
२० त्मकस्य प्रभोरेव । तस्य चायं स्वभावो यदन्यत्र रोचते । अत एव व्रजपरिवृढवदनेन्दुवचनकिरणप्रचारप्रोच्छलत्केवलभावाम्बोधिवचनवीचयो गीयन्ते—यर्ह्यम्बुजाक्ष तव पादतलमस्प्राक्ष्म तत्प्रभृति नान्यसमक्षं स्थातुं पारयामः ( भा. १०।२९।३६ ) इत्यादयः । अतस्त्यागस्तु पृष्ठलग्न इवायातीति न तदर्थं यतनीयामिति विष्णववतारत्वेन पुरुषोत्तमभावस्वरूप-
२५ ज्ञेयमिति तथा ॥ ३।४।४३ ॥

**आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ३।४।४४ ॥**

सर्वत्यागपूर्वकं यद् बाहिः प्रभुसमीपगमनं भक्तस्य तदार्त्विज्यमृत्विक्कर्मैवेत्यौडुलोमिराचार्यो मन्यते । तस्यायमभिसंधिः । यजमानो हि स्वेष्टसिद्ध्यर्थमृत्विज आदौ वृणुते । प्रकृते च—यमेवैष वृणुते (मुं. ३।२।३) इति श्रुतेः । तस्मादेकाकी न रमते ( बृ. १।४।३ ) इति श्रुतेश्च स्वक्रीडार्थं भगवान् स्वाचिकीर्षिततत्तल्लीलारूपाञ्जीवान् वृणुते । यूनः स्थविरान्वेति विकल्पादेकरूपाणां यथा सोमादिषु वरणं तथा सर्वात्मभाववत्त्वेनैकरूपाणामेवात्र वरणम् । तत्र यथा स्वीयस्वीयतदङ्गमात्रकरणं तेषां तथेतरसंबन्धनिवर्तनपूर्वकं तद्भोग्यसमर्पकत्वमत्र । तदुक्तं भगवता—यदा पुमांस्त्यक्तसमस्तकर्मा निवेदितात्मा विचिकीर्षितो मे ( भा. ११।२९।३४ ) इति । अत्र पूर्वपदेनेतरसंबन्धनिवर्तनोक्त्या सर्वात्मभाव उक्तो भवति । तदनन्तरमात्मनिवेदने सति तद्विषयकलीलाकरणेच्छाविषयः संभवति । अन्तरङ्गलीलाप्रवेशनामिच्छायां विषयः । तस्मात्सुष्ठूक्तमार्त्विज्यमिति । एतेन—न ददाति न पचाति ( आ. सू. १०।१४।६।७ ) इत्यादिश्रुतेर्यथा सोमादौ दीक्षितस्य तद्यागेतरधर्मनिवृत्तिः स एव परमो धर्मो यतस्तथा पुरुषोत्तमस्योक्तभक्तैः सह रमणमेव सार्वदिकम् । एतदेव च महन्महत्त्वमिति सूचितं भवति । प्रकृते भक्तानामृत्विक्त्वेन निरूपणे हेतुत्वेन तात्पर्यान्तरमप्याह । तस्मै यजमानारब्धकर्मसाङ्गत्वाय ऋत्विक् परिक्रीयते । वरणेन स्वकार्यमात्रोपयोगित्वाय स्वीयः क्रीयते तथा प्रकृतेपि ।

नच क्वचित् कल्याण्यो दक्षिणाः इति प्रश्नवचनात्तदर्थैव तत्प्रवृत्तिरत्र तु स्वतः पुरुषार्थत्वेन भगवदर्था प्रवृत्तिरतो वैषम्यमिति वाच्यम् । नीरागस्यापि वरणसमये तत्प्रश्नस्यावश्यकत्वात्तथैव दक्षिणादानमप्यन्यथा निरङ्गत्वापतेः । प्रकृतेपि भक्तानां स्नेहादेव प्रवृत्तिर्भगवान् स्वानुभवार्थमेवताननुभावयतीति न वैषम्यम् ॥ ३।४।४४ ॥

## श्रुतेश्च ॥ ३।४।४५ ॥

अथर्वणोपनिषत्सु पठ्यते । भक्तिरस्य भजनं तदिहामुत्रोपाधिनैराश्येनैवामुष्मिन् मनःकल्पनमेतदेव च नैष्कर्म्यम् (गो. पू. ता० १ ) इति ।

भक्तिमार्गप्रचारैकहृदयो बादरायणः ।
मानं भागवतं तत्र तेनैवं ज्ञेयमुत्तमैः ॥ ३९ ॥

॥ ३।४।४५ ॥ ६ ॥

---

## ७ सहकार्यन्तराधिकरणम् ।

५ **सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ३।४।४६ ॥**

ननु यमेवेति श्रुतिः साधनान्तरनिषेधपूर्वकं वरणस्यैव साधनत्वमाह । तस्मादेवंविच्छान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्येत् ( बृ. ४।४।२३ ) इति श्रुतिः साधनान्तरमप्याह ।
१० एवं विरोधे श्रुतित्वाविशेषात् किमादरणीयं किं नेति संशये साधनान्तरविधिरेवादरणीयोऽन्यथा शास्त्रवैयर्थ्यं स्यादिति प्राप्ते ।

उच्यते । सहकार्यन्तराविधिरिति । मर्यादापुष्टिभेदेन वरणं द्विधोच्यते । तत्र सहकार्यन्तरविधिस्तु मर्यादापक्षेणोच्यते । पुष्टौ तु नान्यापेक्षेति न विरोधगन्धोपि । अपरं च साधनं हि कायिकं वाचिकं मान-
१५ सिकं च विधीयते । तत्र—मनसैवाप्तव्यम् ( क. ३।२ ) इति श्रुतेस्तृतीयं मुख्यम् । तदपि तावदेव मार्यादिकस्यापि विधेयत्वेन कर्तव्यं यावत् स्नेहो न भवति । यतस्तद्वतः स्नेहवतस्तूक्तं तृतीयं साधनमपि विध्यादिवत् । यथा तद्वतो विधिरर्थवादो वा प्रवृत्तावप्रयोजकस्तस्य स्वत एव संभवात्तथा भगवत्प्राप्ताविदमित्यर्थः । कैमुतिकन्यायेन पूर्वयोरप्रयोजकत्वमेतच्छेषत्वा-
२० देवायास्यतीति तृतीयमेवोक्तम् ॥ ३।४।४६ ॥ ७ ॥

---

## ८ गृहिणोपसंहार इत्यधिकरणम् ।

**कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ३।४।४७ ॥**

ननु—बहिस्तूभयथा ( ब्र. सू. ३।४।४३ ) इत्यादिना भगवदीयस्य गृहत्याग आवश्यक इति निरूपितम् । छान्दोग्ये तु—आचार्यकुलात्

---

14-C reads वाचनिकं for वाचिकं ।

( छां. ८।१५।१ ) इत्युपक्रम्य छान्दोग्योपनिषदन्ते—आचार्यकुला-द्वेदमधीत्य गुरोः कर्मातिशेषेणातिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्या-यमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्याहिंसन् सर्वाणि भूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलो-
५ कमभिसंपद्यते न च पुनरावर्तते न च पुनरावर्तते ( छां. ८।१५।१ )।

इदं विषयवाक्यम्। ब्रह्मलोकमभिसंपद्यत इति गृहिणोपसंहारः कृतः। वाजसनेयिशाखायां च—तद्ध स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते ( बृ. ४।४।२२ ) इत्युपक्रम्य—अथ भिक्षाचर्यं चरन्ति ( बृ. ४।४।२२ ) इति पठ्यते। एवं सति विकल्पे संभवत्युपसंहारस्य
१० तात्पर्यग्राहकत्वाद् गृहिण एव यथोक्तकर्तुर्ब्रह्मसंपत्तिरिति श्रुतेस्तात्पर्यम्। त्यागोक्तिस्तु ब्रह्मैतादृशं यदर्थं सर्वं त्यज्यत इति स्तुतिपरेति प्राप्ते गृहि-णोपसंहारे हेतुत्वेन तात्पर्यमाह। कृत्स्नेति। त्यागे वाङ्मनसोरेव भगवति विनियोगो न सर्वेन्द्रियाणाम्। गृहिणस्तु सर्वैः प्रकारैर्भजनं भवतीति परिजनश्च कृतार्थो भवतीति च भजने कृत्स्नता भवतीति तेनोपसंहारः
१५ कृत इत्यर्थः। अत एवात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्येत्युच्यते। अत्रा-त्मपदं भगवत्परमिति ज्ञेयम्। कर्ममार्गीयगृहिव्यवच्छेदाय तुशब्दः। अत्रेदमाकूतम्। भक्तिमार्गो बहुविध इति कपिलदेववाक्यात् केचन भक्ताः स्वगृहेष्वेव स्नेहेन भगवदाकारे विविधोपचारैः सेवां कुर्वन्तस्तयैव निर्वृत्त्या मुक्तिमपि तुच्छां मन्यन्ते। तदुक्तं—मधुद्विट्सेवानुरक्तमनसामभवोपि
२० फल्गुः ( भा. ५।१४।४४ ) इति। तेन भगवद्भजन एव तत्रापि पुष्टि-मार्ग एव श्रुतेर्भर इति ज्ञायते। पूर्वमुत्कटभगवद्भाववतां तदर्थं त्यागं निरूप्य गृहिणोपसंहारतात्पर्यं पश्चाद् यन्निरूपितवांस्तेन तादृग्भाववतैव त्यागः कार्यः। तद्राहित्येन तु गृह एवोक्तरीत्या प्रभुभजनं कार्यम्। तेनैव तल्लाभ इति व्यासहृदयमिति ज्ञायते। उक्तभावाभावे त्यागधर्मानि-
२५ र्वाहादिति। केचन भक्ता भाषणादिलीलादर्शनं विना स्थातुमशक्ताः प्रचुरभावविवशाशया गृहांस्त्यक्त्वा वनं गच्छन्ति। आत्रेयौडुलोमिभ्यां तु

भगवदवतारसामयिकभक्तदशोक्ता । एते सर्वे फलमार्गीयाः । वाजसनेय्युक्तास्तु साधनमार्गीया इति नानुपपत्तिः काचित् ॥ ३।४।४७ ॥

## मौनवदितरेषामप्युपदेशात् ॥ ३।४।४८ ॥

किंच संन्यासिन आवश्यका ये धर्मास्ततोधिकास्ते गृहिणः ५ सिध्यन्तीत्यतोपि हेतोस्तेनोपसंहारः कृत इत्याशयेनाह । मौनवदित्यादि । मौनपदमनीहानिलयामादित्रिदण्डधर्मोपलक्षकम् । यथा वागिन्द्रियमात्रदेहमात्रचित्तमात्रनियामकास्ते धर्मा उक्ता न्यासिनस्तथेतरेषामपीन्द्रियनियामकानां धर्माणामात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्येति श्रुत्या गृहिण उपदिश्यन्त इति युक्तो गृहिणोपसंहार इत्यर्थः। तत्र नियमनमात्रम् । अत्र १० तु भगवति निनियोगादाधिक्यमिति भावः। वस्तुतस्तु केवलनियमनस्याप्रयोजकत्वात्तत्रापि भगवति विनियोग एव तात्पर्यमिति ज्ञेयम् ॥ ३।४।४८॥

## अनाविष्कुर्वन्नन्वयात् ॥ ३।४।४९ ॥

ननु भगवति सर्वेन्द्रियविनियोगाद् गृहिणोपसंहार इति न युज्यते। शुचौ देशे स्वाध्यायमधीयानः ( छां. ८।१५।१ ) इत्यादिकर्ममार्गीय- १५ साधनश्रुतेरित्याशङ्क्य तत्तात्पर्यमाह । अनाविष्कुर्वन्निति । भगवद्भावस्य रसात्मकत्वेन गुप्तस्यैवाभिवृद्धिस्वभावकत्वादाश्रमधर्मैरेव लोके स्वं भगवद्भावमनाविष्कुर्वन् भजेतेत्येतदाशयेन ते धर्मा उक्ताः । गोपने मुख्यं हेतुमाहान्वयादिति । यतो भगवता समन्वयं संबन्धं प्राप्य वर्ततेतो हेतोस्तथा । अत्र ल्यब्लोपे पञ्चमी । एतेन यावदन्तःकरणे साक्षात्प्रभोः २० प्राकट्यं नास्ति तावदेव बहिराविष्करणं भवति। प्राकट्ये तु न तथा संभवतीति ज्ञापितम् ॥ ३।४।४९ ॥

## ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ३।४।५० ॥

वैदिककर्मकरणे तात्पर्यमुक्त्वा लौकिकस्यानावश्यकत्वेपि तत्समयमाह । प्रस्तुतं प्रभुभजनं तत्प्रतिबन्धासंभव एवैहिकं कर्म कार्यम् । नन्वै- २५ हिकं कर्मास्तु मा वा । अतस्तत्समयोक्तिर्व्यर्थेत्याशङ्क्याह । प्रस्तुतं प्रभुभजनं तद्दर्शनादिति । आचार्यकुलादित्युपक्रम्याग्रे पठ्यते । धार्मिकान् विदधदिति । अतो धार्मिकपुत्रविधानमैहिकं कर्म श्रुतौ दृश्यतेतस्तत्समयोक्तिरावश्यकी । अन्यथा श्रुतावुक्तमस्तीति प्रस्तुतबाधेपि तत्करणे फलप्रतिबन्धः स्यादिति भावः ॥ ३।४।५० ॥ ८ ॥

## ९ एवं मुक्तिफलानियम इत्यधिकरणम् ।

## एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ३।४।५१ ॥

ननु—तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये (छां. ६।१४।२) ५ इति श्रुतौ मुक्त्यनन्तरं ब्रह्मसंपत्तिः श्रूयते। सा तु पुरुषोत्तमसंगे लीलारसानुभवातिरिक्ता वक्तुमशक्या । मुक्तोपसृप्यव्यपदेशात् । मुक्तानामपि सिद्धानां नारायणपरायणः । सुदुर्लभः प्रशान्तात्मा कोटिष्वपि महामुने (भा. ६।१४।५) इति स्मृतेश्च । मुक्तेः फलं भक्तिरसानुभव एव । एवं सत्युक्तगृहिणस्तत्फलं भवति न वेति संशये निर्णयमाह । एवंभूतस्योक्त- १० रूपस्य मुक्तस्य मुक्तेर्यत्फलं भक्तिरसानुभवस्तस्यानियमस्तस्य भगवदिच्छाधीनत्वात् । साधनाप्राप्यत्वात् । अत एव—मुक्तिं ददाति कर्हिचित्स्म न भक्तियोगम् । (भा. ५।६।१८) इति शुकवाक्यम् । अत्रौत्सर्गिकहेतुमाह । तदवस्थेति । न स[१] पुनरावर्तते ( छां. ८।१५।१ ) इत्यस्यावृत्त्या मुक्त्यवस्थाया एव सार्वदिकत्वेन निर्धारः क्रियते । यद्यप्येवं १५ मुक्तिफलाभावनियम एवायाति न तु तदनियमस्तथापि —तस्य तावदेव चिरं (छां. ६।१४।२) इत्यादिप्रमाणैर्न स पुनरावर्तते ( छां. ८।१५।१ ) इति श्रुत्या समं विरोधाभावायौत्सर्गिकी तदवस्था । तत्फलं तु कस्यचिदित्यनुग्रहेण पुष्टौ प्रवेशने भवतीति स्वाभिप्रायं प्रकटीकुर्वता बादरायणेन अनियम ( ब्र. सू. ३।३।३१ ) इत्युक्तम् । एवं सति—न स[१] पुनरावर्तते २० ( छां. ८।१५।१ ) इति श्रुतिः प्रपञ्चे पुनरावृत्तिं निषेधति न तु तदतीतेपीति ज्ञेयम् । समाप्तिज्ञापनायावृत्तिः । अथवा श्रुतौ तदवस्थावधृतेर्हेतोरस्माकमपि तदवस्थावधृतिर्यतोतः फलानियमनिश्चयोपीत्यर्थः । एवं सति मुक्तिपर्यन्तं साधनं भगवद्भाव इति निर्णयः संपन्नः ॥ ३।४।५१ ॥ ९ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये तृतीयाध्यायस्य चतुर्थः पादः ॥ ३।४ ॥

**तृतीयोऽध्यायः समाप्तः ॥**

---

१ अत्र—न च पुनरावर्तते—इत्यधुनातनपुस्तकेषु पाठः ।

# अथ चतुर्थाध्यायस्य प्रथमः पादः ।

## १ आवृत्त्यधिकरणम् ।

समन्वयेनाविरोधात् साधनैर्ब्रह्मविद् यदि ।
तस्याग्रिमव्यवस्था या सा च तुर्ये विविच्यते ॥ ४० ॥
जीवतो म्रियमाणस्य गच्छतः सफलस्य च ।
५ अतो ब्रह्मविदा कार्यमेवमेव न चान्यथा ॥ ४१ ॥
तामसीं बुद्धिमाश्रित्य ये मूढाः सर्वविप्लवम् ।
वदन्ति शास्त्रनाशाय सद्भिः शोच्याश्च येनु तान् ॥ ४२ ॥
ब्रह्मविद्गमनाभावः शतांशेनापि चेद् भवेत् ।
शास्त्रमेतद् वृथा जातं सर्वसूत्रविनाशतः ॥ ४३ ॥
१० स्वाध्ययस्य च संपत्तेरत्र ब्रह्मगतिश्रुती ।
अन्यथा न श्रुतेरर्थः स्याच्चेद् व्यासो वदेन्न किम् ॥ ४४ ॥
तामसीं बुद्धिमाश्रित्य या मुक्तिः कैश्चिदुच्यते ।
सा सुषुप्तिश्रुतेरर्थो मोहादेवान्यथा मतिः ॥ ४५ ॥
अतो ब्रह्मविदः कार्यं जीवतः पूर्वमुच्यते ।
१५ आवृत्तिः श्रवणादीनां नवकृत्वोपदेशतः ॥ ४६ ॥
दर्शनार्थत्वतो लिङ्गादपि व्रीह्यवघातवत् ।
आवृत्तौ श्रवणादीनामात्मेति स्याद् दृढा मतिः ॥ ४७ ॥
आपाततो दर्शनं तदभेदेनापि बोध्यते ।
प्रतीकोपासनादीनां नैवं भावो हि जायते ॥ ४८ ॥
२० आलम्बनार्थं तत्रापि ब्रह्मदृष्टिर्विशिष्यते ।
आदित्यादिब्रह्मदृष्टेरङ्गत्वं न स्वतन्त्रता ॥ ४९ ॥
मनने च निदिध्यासे विशेषश्चोच्यतेधुना ।
आसनादिषडङ्गैस्तु चित्तं श्रौतार्थ एव हि ॥ ५० ॥

---

4—M, A, C and D read चतुर्थे for च तुर्ये ।

धारयेदामतेरेवं ततः सिद्धिमवाप्स्यति ।
धर्माधर्मभयं तस्य नास्त्येवेति विनिश्चयः ॥ ५१ ॥
अग्निहोत्रादिकं कार्यं संन्यासः फल एव हि ।
षोढा चेत्पुरुषो व्यक्तः प्रारब्धान्ते फलं भवेत् ॥ ५२ ॥
५ एतावान् प्रथमे पादे निर्णयः सूत्रकृत्कृतः ।
द्वितीये म्रियमाणस्य सर्वेन्द्रियलयः पुरा ॥ ५३ ॥
लिङ्गस्यापि शरीरस्य नाड्योत्क्रान्तिरिहोच्यते ।
दिनायनकृतो नास्य विशेषोस्तीति चोच्यते ॥ ५४ ॥
तृतीये क्रममुक्तौ यो मार्गो यस्य श्रुतेर्मतः ।
१० तन्निर्धारोन्यमार्गाणामप्राप्यत्वं च वर्ण्यते ॥ ५५ ॥
गन्तव्यं च परं ब्रह्म कार्यो लोकस्तु नेति च ।
तुरीये पुष्टिमर्यादाभेदेन फलमुच्यते ॥ ५६ ॥
प्रभोरेव फलत्वं तन्निर्दोषत्वं च वर्ण्यते ।
लीलानित्यत्वतः पूर्णगुणत्वं च ततोखिलम् ॥ ५७ ॥

१५ अस्य फलप्रकरणत्वेपि साधनरूपस्यापि श्रवणस्यान्तरङ्गत्वं ज्ञापयितुं तन्निर्धारमप्याह ।

## आवृत्तिरसकृदुपदेशात् ॥ ४।१।१ ॥

आत्मा वारे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः ( बृ. ४।५।६ ) इत्यादिवाक्यैर्विहितं श्रवणादिकं किं सकृदेव कर्तव्यमुतासकृ-
२० दिति भवति संशयः । किं तावत्प्राप्तं सकृदेवेति । तावतैव शास्त्रार्थस्य संपत्तेः । न च तण्डुलनिष्पत्तिफलकावघातस्येव दर्शनफलकानां श्रवणादीनां तत्सिद्धिपर्यन्तमावृत्तिर्न्यायप्राप्तेति वाच्यम् । अवघातस्य वितुषीकरणात्मकदृष्टद्वारकत्वेन तथात्वमस्तु नाम । प्रकृते त्वदृष्टद्वारकत्वात् सकृत्कृतेनैवादृष्टद्वारा फलसंपादनसंभवादावृत्तिरप्रयोजिकेति प्राप्ते ।

२५ उच्यते । आवृत्तिरेव श्रवणादीनां श्रुत्यभिमता । कुतः । असकृदुपदेशात् । छान्दोग्ये श्वेतकेतूपाख्याने—ऐतदात्म्यमिदं सर्वं तत्सत्यं स

आत्मा तत्त्वमसि श्वेतकेतो ( छां. ६।८।७ ) इति वाक्येन जडजीवयो-
र्ब्रह्मात्मत्वं नवकृत्व उपादिष्टवान् । तथा च सकृदुपदेशेनैव चेदर्थसिद्धिः
स्यात्तदैकमेवार्थमेकस्मा एकदैवासकृन्नोपदिशेत् । प्रयोजनाभावात् । एते-
नावघातवदन्तःकरणदोषनिवर्तनं दृष्टद्वारमन्येषामुपदेशानां चरमस्य तस्य
५ ज्ञानसाधकत्वमिति मन्तव्यम् ॥ ४।१।१ ॥

अत्रैव हेत्वन्तरमाह ।

## लिङ्गाच्च ॥ ४।१।२ ॥

श्रुत्यनुमापकत्वेन स्मृतिर्लिङ्गमित्युच्यते । सा च—यथा यथात्मा
परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः । तथा तथा पश्यति तत्त्वसूक्ष्मं
१० चक्षुर्यथैवाञ्जनसंप्रयुक्तम् ( भा. ११।१४।२६ ) इत्यादिरूपा तदावृत्तिमेव
फलसाधकत्वेनाह । अत्र दृष्टान्तेनापि दृष्टद्वारकत्वं श्रवणादीनां सूच्यते—
आत्मा वारे द्रष्टव्यः ( बृ. ४।५।६ ) इति पदेन श्रवणादीनां फलात्मकं
दर्शनं पूर्वमुक्त्वा श्रोतव्यो मन्तव्य इत्यादिना तत्साधनानि पश्चाद्यदाह
तेनात्मनः परोक्षमपि ज्ञानमवान्तरफलरूपमिति । भक्तिमार्गे परमफलरूप-
१५ तत्सजातीयत्वेन च फलमध्यपात्येवेति श्रुत्यभिमतमिति ज्ञायते । तेन सूत्र-
कृदपि फलप्रकरणेपि साधनविचारं चकारेति निगूढाशयः । तथापि शाब्द-
क्रमादार्थक्रमो बलीयानिति न्यायाद् द्रष्टव्य इति पदस्य पश्चात्संबन्धे
तूक्तरीतिर्नावसरं प्राप्नोतीति प्रकृतविचारस्य फलप्रकरणासंगतत्व-
मापततीति प्रकारान्तरेण सूत्रार्थ उच्यते । आवृत्तिरसकृदुपदेशात् ।
२० श्रुतिर्हि कर्मज्ञानभक्तीः साक्षात्परम्पराभेदेन पुरुषार्थसाधनत्वेन हीन-
मध्यमोत्तमाधिकारिणः प्रति कर्तव्यत्वेन प्रतिपादयति । तत्र तेषां स्वरूपं
तृतीयेऽध्याये बादरायणेन प्रतिपादितम् । अथ तुरीयेऽध्याये तेषां फलं
चिन्त्यते । तत्रादौ कर्ममार्गस्य फलमुच्यते । ज्ञानभक्त्योरेव क्रमेणोत्तमात्युत्त-
मफलकत्वमतस्तत्साधनत्वेनैव तत् कर्तव्यं न तु स्वातन्त्र्येणेति ज्ञापयितुम् ।
२५ आवृत्तिरिति । कर्ममार्गस्यावृत्तिः पुनर्जन्मफलं तदप्यसकृत् । इदं परमावृ-
त्त्योभयत्रापि संबध्यते । तथा चात्र प्रमाणापेक्षायां तदाह हेतुत्वे-
नासकृदुपदेशादिति । श्रुतौ कर्ममार्गे पुनर्जन्मासकृदुपदिश्यते यतः ।

अन्यथा सकृदुपदेशेनैव तदवगमेप्यसकृदुपदेशो व्यर्थः स्यादत-
स्तथेत्यर्थः । वाजसनेयिशाखायां पठ्यते । एवमेवायᳵ शारीर आत्मै-
भ्योऽङ्गेभ्यः संप्रमुच्य पुनः प्रतिन्यायं प्रतियोन्याद्रवति प्राणायैव
( बृ. ४।३।३६ ) इति तत्रैव पुनस्तेन प्रद्योतेनैष आत्मा निष्क्रामति इत्युप-
५ क्रम्य पठ्यते–तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा च ( बृ. ४।४।२ )
इति । तत्रैवैतदनुपदमेव–तद्यथा तृणजलायुका ( बृ. ४।४।३ ) इत्युपक्रम्य
पठ्यते–एवमेवायं पुरुष इदᳵ शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं
कल्याणतरᳵ रूपं तनुते पित्र्यं वा गान्धर्वं वा ब्राह्मं वा प्राजापत्यं वा दैवं
वा मानुषं वान्येभ्यो वा भूतेभ्यः ( बृ. ४।४।४ ) इति । तत्रैवाग्रे पठ्यते ।
१० प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम् । तस्माल्लोकात्पुनरेत्यस्मै-
लोकाय कर्मणे ( बृ. ४।४।६ ) इति ।

अत्र हेत्वन्तरमाह । लिङ्गाच्च । वेदानुमापकत्वेन स्मृतिर्लिङ्ग-
मित्युच्यते । सा च भगवद्गीतासु–त्रैविद्या माम् ( भ. गी. ९।२० )
इत्युपक्रम्य पठ्यते–एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्ते
१५ ( भ. गी. ९।२१ ) इति । आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन
( भ. गी. ८।१६ ) इति च ।

अथवा–यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पाप-
कारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन ( बृ. ४।४।५ )
इति श्रुतिर्वर्तमानजन्मकर्मणोः पूर्वजन्मसंबन्धिकर्मानुमापकत्वं वदतीति
२० कार्मिणः पुनर्जन्मावश्यकमिति ज्ञायते । एवं सति लिङ्गत्वेन निरूपणादि-
त्यर्थः संपद्यते । निवृत्तिमार्गीयस्यापि तस्य ज्ञानोपकर्तृत्वमात्रं न तु
जन्मनिवर्तकत्वं मानाभावात् ४।१।२ ॥ १॥

---

## २ आत्माधिकरणम् ।

एवं कर्मफलं विचार्य ज्ञानफलं विचारयति ।

२५ **आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ४।१।३ ॥**

पूर्वार्थनिरूपणव्यवच्छेदाय तुशब्दः । ज्ञानिनो हि भगवन्तमात्म-
त्वेनैवोपासते । तस्या नैरन्तर्येणैकजन्मभिस्तथैव तेषां हृदि भगवान्

स्फुरति । तदा स्वानन्दांशस्याप्याविर्भावाद् ब्रह्मभूतः सन्नात्मत्वेनैव ब्रह्म स्फुरितमिति तदानन्दात्मकः संस्तमनुभवति । एवं स्थितः प्रारब्धसमाप्तौ देहापगमे तत्रैव प्रविष्टो भवति । सर्वोपकारीति पदार्थमपि तस्मै भगवता ज्ञानं दत्तमिति प्रवचनमपि तस्य फलान्तःपातीत्यधिकारिण्युपस्थिते ५ तथैवोपदिशति च । एतदेवाह । आत्मेत्यादिना । उप समीपे गमनं प्रवेश इति यावत् ।

अथवा । ननु ज्ञानभक्त्योरनावृत्तिः फलमत उत्तमे ते न तु कर्मेत्याशयेन कर्मणः फलमावृत्तिरिति यन्निरूपितं तत्रेदं चिन्त्यते । न स पुनरावर्तते ( का. ३ ) इति श्रुतिः सर्वथानावृत्तिमाहोत सावधिकीं ताम- १० मरशब्देन तन्निवृत्तिमिव । किमत्र युक्तम् । सावधिकीमेवेति । तथाहि पूर्वकर्मनैयत्यस्य त्वयाप्यङ्गीकार्यत्वात्तस्य प्ररोहैकस्वभावत्वात्तस्य दुरतिक्रमत्वात्तत्फलानुभवस्यावश्यकत्वात् ।

अपि च—य एनं विदुः ( बृ. ४।४।२२ ) इति श्रुतेः सति ज्ञाने हि सा । यतो वाचः ( तै. २।९ ) अगृह्यो न हि गृह्यते ( बृ. ४।४।२२ ) १५ इत्यादिश्रुतिभ्यो ब्रह्मज्ञानासंभवात् । इत एव भक्तिरपि प्रत्युक्ता वेदितव्या । ज्ञानाविषये स्नेहासंभवात् ।

किंच—सर्वस्य वशी सर्वस्येशानः ( बृ. ४।४।२२ ) इत्यादिश्रुतिभ्यो यस्यावतारकर्माणि गायन्ति ह्यस्मदादयः । न यं विदन्ति तत्त्वेन ( भा. २।६।३७ ) इत्यादिस्मृतिभ्यश्च का प्रत्याशा जीवितस्यातिहीनस्य २० तत्प्राप्तौ । अत एवोपदेशासंभवोपीति प्राप्ते प्रत्याह । आत्मेतीत्यादिना । तुशब्दः पूर्वपक्षनिरासकः । अत्रायमाशयः । सत्यमुक्तं भवता । तत्रोच्यते । यथागृह्यत्वातिमहत्त्वादिधर्मा भगवति सन्ति तथा सर्वात्मत्वमपि । य आत्मनि तिष्ठन् इत्यादिश्रुतिष्वात्मत्वेनैवोक्तेः । सर्वधर्माश्रयत्वेपि यदा यं धर्मं पुरस्कृत्य लीलां करोति तत्कार्यमेव तदा २५ संपद्यते । हितकारित्वस्वभावत्वात्तस्य । एवं सति यस्मिन् पुरुषे यदात्म-

1–M, A and C om. ब्रह्म before स्फुरितम् ।

त्वेन लीलां करोति तदा स्वप्राप्त्यनुकूलप्रयत्नवन्तं विधायात्मानं प्रापयति । ननूक्तं दुरतिक्रमः कर्मस्वभाव इति । नैष दोषः । न ह्यन्नरसपाकाय जग्धमौषधमपि गौरवाय भवति । तेन न तन्निवृत्तिर्वा । व्यापादनैकस्वभावमपि विषमाशीविषं तदपगमपटुतरानिगमसंगमो नापगमयति वा ।
५ तथा भगवदर्पितं तदर्थं च कृतं कर्म न कर्मनाशाय भवतीति न वक्तुं शक्यम् । कर्ममोक्षाय कर्माणि विधत्ते ह्यगदं यथा ( भा. ११।३।४४ ) इति वाक्यात् । अग्राह्यत्वग्राह्यत्वविरोधापहारस्तु जीवसामर्थ्येश्वरेच्छाभ्यां पुरैव कृत इति नाधिकमत्र निरूप्यम् । इतिशब्दो हेत्वर्थे । तथाच भगवानात्मा भवति सर्वेषां जीवानामतो हेतोरुक्तरीत्या तदनुग्रहेण तमुपग-
१० च्छन्ति । ज्ञानमार्गेऽङ्गीकृतास्त्वात्मत्वेनैव ज्ञानादुपसमीप एव गच्छन्त्युक्तरीत्याक्षरात्मके तत्रैव प्रविष्टा भवन्तीत्यर्थः । भक्तिमार्गेऽङ्गीकृतास्तु साक्षात् प्रकटे पुरुषोत्तमे सति तद्भजनार्थमुपसमीपं गच्छन्तीत्यर्थः ।

एवं श्लेषोक्तिरियमिति ज्ञायते । संप्रदायानुवृत्तिरपि भगवदिङ्गितेत्येतादृशाः स्वयं येन मार्गेण फलं प्राप्तास्तं मार्गमन्यानपि ग्राहयन्त्युप-
१५ देशैरत्रोभयत्राप्यात्मत्वमेव हेतुरन्यथात्मारामस्य सर्वनिरपेक्षस्यैवंकरणासंभवेन मोक्षमार्गाप्रसिद्धिरेव स्यात् । तस्मात् सर्वथानावृत्तिरेव श्रुत्याभिमतेति ज्ञेयम् ॥ ४।१।३ ॥

नन्वात्मत्वेनोक्तिरुपासनार्थेति नोक्तं साधीय इत्यत उत्तरं पठति ।

## न प्रतीके न हि सः ॥ ४।१।४ ॥

२० अतद्रूपे तत्त्वेनोपासनं हि प्रतीकमित्युच्यते । तथा च तादृशेन तेन स मोक्षो न भवतीत्यर्थः । श्रुतिसिद्धत्वान्नास्ति मोक्ष इति न वक्तुं शक्यमिति भावः । अथवात्मत्वेनोक्तिरुपासनार्थेति वदन् वादी वक्तव्यः । फलार्थमेव तत् । फलं च श्रुत्युक्तस्तत्प्रवेश एवेति त्वयापि वाच्यम् । एवं सत्यादौ ज्ञानमार्गेनुपपत्तिमाह । न प्रतीकेनात्मभूते ज्ञानिन उपगमः
२५ पूर्वोक्तः प्रवेशः संभवतीति शेषः । भक्तिमार्गेपि तामाह । न हि स इति । न हि प्रतीकोपासने स लोकवेदप्रसिद्धः पुरुषोत्तमोस्त्युपास्यत्वेन येन

7–M, A and C read अगृह्यत्वगृह्यत्व for अग्राह्यत्वग्राह्यत्व ।

तत्प्राकट्यं स्यात् तदुपगमनं चेत्यर्थः । एवं ज्ञानभक्त्योः फलसत्ता साधिता ॥ ४।१।४ ॥

ननु—सर्वं खल्विदं ब्रह्म । ( छां. ३।१४।१ ) आत्मैवेदꣳ सर्वम् ( छां. ७।२५।२ ) इत्यादिश्रुतयः सर्वत्र ब्रह्मदृष्टिं मुक्तिसाधनत्वेनोप- ५ दिशन्ति । सा च प्रतीकात्मिकैवेति कथं प्रतीकोपासनस्य न मोक्षसाधक- त्वमिति प्राप्त उत्तरमाह ।

## ब्रह्मदृष्टिरुत्कर्षात् ॥४।१।५॥

सर्वत्र ब्रह्मदृष्टिर्न प्रतीकात्मिका सर्वस्य वस्तुतो ब्रह्मात्मकत्वात् । सा च नोपदेशसाध्यातो नोपादिश्यते । किंत्वनूद्यते । सा त्वधिकारोत्क- १० र्षात् स्वत एव भवतीति प्रतीकोपासनस्य न मुक्तिसाधनत्वमिति साधूक्तम् । एतदेवोक्तमनेन सूत्रेण ॥ ४।१।५ ॥ २ ॥

---

## ३ आदित्याद्यधिकरणम् ।

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ४।१।६ ॥

छान्दोग्ये—अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमा- १५ त्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाच ( छां. ५।१३।१ ) इति । अथ होवाचेन्द्रद्युम्नम् ( छां. ५।१४।१ ) इत्युपक्रम्य—त्वं कमात्मा- नमुपास्स इति वायुमेव भगवो राजन् इति होवाच ( छां. ५।१४।१ ) इति । एवमेवाग्रे प्रश्नभेदेन वक्तृभेदेनाकाशाप्प्रभृतय आत्मत्वेनो- पासनाविषया उक्ताः । तत्रैव—असौ वा आदित्यो देवमधु ( छां. २० ३।१।१ ) इत्युपक्रम्यान्ते पठ्यते । य एतमेव विद्वानादित्यं ब्रह्मो- पास्ते ( छां. ३।१९।४ ) इति । अत्रेदं चिन्त्यते अत्र प्रतीकोपासन- त्वमस्ति न वेति । अस्तीति पूर्वः पक्षः । तथाहि । सर्वं खल्विदं ब्रह्म ( छां. ३।१४।१ ) इति श्रुतौ सर्वमनूद्य ब्रह्मत्वं तत्र बोध्यत इति न क्वचि- त्प्रतीकोपासनमस्तीति हि पूर्वं निरूपितम् । तच्चोक्तश्रुतिभिः प्रत्येकं तत्त्वे- २५ नोपास्यत्वेनोक्त्वा नोपपद्यते । ब्रह्मण एकत्वादेकप्रकारेणैवोपासनेन सर्वेषां फलसिद्धेः पृथक् पृथगुक्तौ गौरवात् प्रयोजनविशेषाभावाच्च । तादृशाधि-

काराभावात् पृथक् तदुक्तिरिति चेद् । न । सर्वत्र सदा तद्भावनायां तथा-
नुभवस्यापि संभवात् । एवं सति वस्तुतः सर्वस्य ब्रह्मत्वं नाभिमतं किंतु
यथादित्यादीनां तत्तथा तथा सर्वस्यापीति प्रतीकोपासनत्वमेव सर्वत्र ।
तेनैव फलमिति प्राप्ते प्रतिवदति । आदित्यादौ या ब्रह्मत्वमतय उच्यन्ते तास्तु
५ साकारस्यैव ब्रह्मणो व्यापकत्वात् तस्य प्रत्येकमप्यङ्गमुपासितं फलदमि-
त्येकैकाङ्गविषयिण्यस्ता विधीयन्ते । उपपन्नं चैतत् । नहि साकारव्याप-
कब्रह्मणोङ्गं न ब्रह्मातो न प्रतीकोपासनत्वं तत्र । अपरं च । असौ वा
आदित्यो देवमधु ( छां. ३।१।१ ) इत्युक्त्वा—तस्य प्रतिदिक्करश्मीनां
कृपावलोकनरूपाणां मधुत्वं निरूप्य तद् यत् प्रथमममृतं तद्वसव उप-
१० जीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा
तृप्यन्ति । त एतदेव रूपमभिसंविशन्त्येतस्माद् रूपादुद्यन्ति ( छां.
३।१०।२ ) इति पठ्यते । तथा च दर्शनमात्रेणान्यधर्मानिवृत्तिस्तस्यैव
स्वतन्त्रपुरुषार्थत्वेन ज्ञानमतिशयितस्नेहजविगाढभावेन तत्रैव लयः । पुन-
स्तद्दर्शनानन्दानुभवार्थं भगवानेव कृपया पुनः पूर्वभावं संपादयतीति
१५ तस्माद्रूपादुदयश्चैतत्सर्वं भगवदङ्गत्व एवोपपद्यत इत्यपि हेत्वाभिप्रेतोर्थो
ज्ञेयः । न हि प्रतीकत्व इदं सर्वं संभवति भक्तिमार्गीयत्वादस्यार्थस्येति
भावः । अङ्गानां भगवत्स्वरूपात्मकत्वेनैक्यमिति ज्ञापनायैकवचनम् ।
एतेन स्वरूपस्यैव फलत्वमुक्तं भवतीति मुख्यः सिद्धान्तः सूचितो भवति
॥ ४।१।६ ॥

२० 

## आसीनः संभवात् ॥ ४।१।७ ॥

पूर्वसूत्रेण धर्ममात्रस्य फलत्वमुक्त्वाधुना धर्मिणः फलत्वं तत्साधनं
चाह । संभवात् । उत्कटस्नेहात्मकसाधनस्य संभवात्तदर्थिनः संस्तदग्र
आसीनो भगवान् भवति । एतेन भक्तवश्यतोक्ता ॥ ४।१।७ ॥

एवं बहिःप्राकट्यमुक्त्वान्तरं तदाह ।

## ध्यानाच्च ॥ ४।१।८ ॥

भावनौत्कट्यदशायां व्यभिचारिभावात्मकसततस्मृतिरूपध्यानादपि
हृदि प्रकटः सन्नासीनो भवतीत्यर्थः । तेन स्थैर्यमुक्तं भवति ॥ ४।१।८ ॥

एवं भक्तेच्छयैव स्वरूपप्राकट्यमित्युक्त्वा लीलानाविष्करणमाविष्करणं चापि तदिच्छयैवेत्याह ।

**अचलत्वं चापेक्ष्य ॥ ४।१।९ ॥**

भक्तेच्छामपेक्ष्याचलत्वं चकाराच्चलत्वमपीत्यर्थः ॥ ४।१।९ ॥

५ **स्मरन्ति च ॥ ४।१।१० ॥**

केचन भक्ताः स्वरूपनिरपेक्षास्तत्स्मरणजनितानन्देनैव विस्मृतापवर्गान्तफला भवन्ति । चकाराच्छ्रवणकीर्तनादयोपि समुच्चीयन्ते । तदुक्तम्—अथ ह वाव तव महिमामृतसमुद्रविप्रुषा सकृल्लीढया स्वमनसि निष्पन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतसुखलेशाभासाः परमभागवताः ( भा. १० ६।९।३९ ) इति । अथवा—अहं भक्तपराधीनः (भा. ९।४।६३ ) इत्यादिस्मृतिः पूर्वोक्ते प्रमाणत्वेनोक्ता ॥ ४।१।१० ॥ ३ ॥

---

## ४ यत्रैकाग्रताधिकरणम् ।

**यत्रैकाग्रता तत्राविशेषात् ॥ ४।१।११ ॥**

अथेदं विचार्यते । बहिराविर्भावो येभ्यो येभ्यश्चान्तस्तेषां तेषां च १५ मिथस्तारतम्यमस्ति न वेति । तत्र निर्णयमाह । यत्र भक्तेष्वेकाग्रता भगवत्स्वरूपे प्रकट एवैकास्मिन् ग्राहकचित्तधारा न त्वन्तर्बहिर्विज्ञानं तत्रोभयोरन्तः पश्यतो बहिः पश्यतश्च भावे भगवत्स्वरूपे च विशेषाभावान्न तारतम्यमस्तीत्यर्थः ॥ ४।१।११ ॥ ४ ॥

---

## ५ आप्रायणाधिकरणम् ।

२० **आप्रायणात्तत्रापि हि दृष्टम् ॥ ४।१।१२ ॥**

उक्तेर्थ एवायं संशयः । अन्तः प्राकट्यवतो यदा बहिः संवेदने सत्यपि पूर्वानुभूतभगवत्स्वरूपानुभवस्तदा पूर्वमन्तरमन्वभूवमधुना बहिरनुभवामीत्यनुव्यवसायो भवति न वेति । तत्र वैलक्षण्याद् भवितुमर्हतीति पूर्वः पक्षः । तत्र सिद्धान्तमाह । आप्रायणादिति । श्रीभागवते—प्रायणं हि

सतामहम् ( भा. ११।११।४८ ) इति भगवद्वाक्यात् प्रायणशब्देन स्वतः पुरुषार्थत्वेन प्राप्यं परमं पारलौकिकं फलमुच्यते । तथा च फलं तन्मर्यादीकृत्य तस्य सैवावस्था सार्वदिकी न तु बहिः प्राकट्येपि बहिष्ठानुसंधानमित्यर्थः । ततस्तस्य तत्र सायुज्यं भवति न वेति संशये निर्ण-
५ माह । तत्रापि प्रायणेपि प्राप्ते तस्य पूर्ववत् प्रभुणा सममालापावलोकनश्रीचरणनलिनस्पर्शादिकं दृष्टमेव फलं न त्वदृष्टं सायुज्यमित्यर्थः । यतः शुद्धपुष्टिमार्गेङ्गीकृतोन्यथा पूर्वोक्तभावसंपत्तिः कथं स्यादित्युपपत्तिर्हिशब्देन सूच्यते । एतच्च—तद्भूतस्य तु नातद्भाव ( ब्र. सू. ३।४।४० ) इत्यत्र निरूपितम् ॥ ४।१।१२ ॥ ५ ॥

---

१० 

## ६ तदधिगमाधिकरणम् ।

## तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात् ॥ ४।१।१३ ॥

पुष्टिमार्गीयभक्तस्य फलं निरूप्य मर्यादामार्गीयस्य तस्य फलं चिन्त्यते । तत्र तु ज्ञानपूर्वकत्वं भक्तेरावश्यकम् । कर्ममर्यादाया अपि
१५ स्वकृतत्वात्तामनुल्लङ्घ्यैव भगवता फलं दीयते । तच्च नाभुक्तं क्षीयते । तद्भोगानुकूलकर्मणा स्वसजातीयतत्संतानजननादनिर्मोक्ष एव सर्वस्य संपद्यते । न च प्रायाश्चित्तवज्ज्ञानस्य कर्मनाशकत्वं वक्तुं शक्यम् । तद्वत्तस्य तदुद्देशेनाविहितत्वात् । तथा कथने चान्योन्याश्रयः । दुरितस्य चित्ताशुद्धिहेतुत्वेन तन्नाशे ज्ञानोदयो यतोतो मर्यादामार्गे मुक्तिरनुक्तविषयेति
२० प्राप्त उच्यते । तदधिगमे ब्रह्मज्ञाने सति तज्ज्ञानस्वभावादेवोत्तराघस्याश्लेषोसंबन्धः पूर्वस्य तस्य विनाशो भवतीत्यर्थः। अत्रोत्तरस्योत्पन्नस्याश्लेष इति नार्थस्तस्यात्मन्येवोत्पत्तेस्तदातिरिक्तस्य श्लेषस्याभावादतोनुत्पत्तिरेवार्थः । न चैवं मर्यादामार्गीयत्वभङ्गः । साधनं विना स्वरूपबलेनैव कार्यकरणे हि पुष्टिरिह तु नियतकर्मविरोधित्वस्वभावेन ज्ञानेनैव तथा संपत्तेः । अत
२५ एव—तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते ( छां. ५।२४।३ ) इति श्रुतिरग्निदृष्टान्तमाह । स्मृतिरपि—यथैधांसि

समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन । ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा ( भ. गी. ४।३७ ) इति । सर्वं पाप्मानं तरति ब्रह्महत्यां योऽश्वमेधेन यजते ( छां. ५।२४।३ ) इत्यादिश्रुतिभिस्त्वयापि न तद्भोगनियमो वक्तुं शक्यः । एतेनाभुक्तस्याक्षयाद्भोगे च कर्मान्तरजननान्मोक्षासंभव इति ५ निरस्तं वेदितव्यम् । न चान्योन्याश्रयः । अनाद्यविद्याजनितसंसारवासनात्मिका हि सा । सा च गुरूपसत्तिश्रवणमननविध्युपासनादिरूपया ज्ञानसामग्र्यैव नाश्यते । अविद्या परं ज्ञानेन नाश्यत इति क्व तत्प्रसंगः । ज्ञानसामग्र्या बलिष्ठत्वात्कर्मणो दुर्बलत्वान्न तत्प्रतिबन्धकत्वमिति ज्ञाननाश्यत्वबोधकश्रुतिस्मृतिमता त्वयाप्युररीकार्यम् । इममेव हेतुमाहाचार्य- १० स्तद्व्यपदेशादिति ॥ ४।१।१३ ॥

## इतरस्याप्येवमसंश्लेषः पाते तु ॥ ४।१।१४॥

पापस्य शास्त्रविरोधित्वेन शास्त्रीयज्ञानेन समं विरोधो भवतु नाम । धर्मस्यातथात्वेनाविरोध एवेत्याशङ्कानिरासाय पूर्वन्यायातिदेशमाह । इतरस्य पुण्यस्याप्येवं पूर्वस्य नाश उत्तरस्याश्लेष इत्यर्थः । अतिदेशाद्धेतुरपि १५ स एव ज्ञेयः। तथाहि । उभे उ हैवैष एते तरति ( बृ. ४।४।२२) । क्षीयन्ते चास्य कर्माणि (मुं. २।२।८) इति सामान्यवचनात्—ज्ञानाग्निः सर्वकर्माणि (भ. गी. ४।३७) इति स्मृतौ सर्वशब्दाच्च तथा । अथेदं शङ्क्यते। मर्यादामार्गीयत्वाज्ज्ञानानन्तरं भरतवत्संगदोषेण भगवद्भावाच्च्युतौ संगजदोषोत्पत्तिवदग्रे विहितनिषिद्धकर्मणोरप्युत्पत्तिर्वक्तुं शक्येति ज्ञानस्य न सर्वात्मना २० कर्मविरोधित्वमिति । तत्र निर्णयमाह । पाते भक्तिमार्गे भगवद्भावाच्च्युतिः पात इत्युच्यते । तुरप्यर्थे । अपिशब्दे वाच्ये व्यवच्छेदार्थकतुशब्दोक्त्यास्मिन्मार्गे पापस्य व्यवच्छेद एव । न कर्हिचिन्मत्परा इति वाक्यात् । परंतु मर्यादामार्गीयत्वात् प्रारब्धभोगार्थं प्रभुश्चेत्तथा करोति तद्भावे पूर्णे सति तद्भोगोऽसंभावित इति तदेवं भवतीति व्यासाभिप्रायो ज्ञायते ।

२५ तथाच तस्मिन् सत्यप्युत्तरस्य कर्मणोऽसंश्लेष एवेत्यर्थः । पूर्वसूत्र एवमेवाश्लेषशब्दस्य व्युत्पत्तेः। अतिदेशस्यैवंपदेनैव प्राप्तेः सर्वं सूत्रं तत्परत्वेन

6–M, A and C read विष्णूपासनादि for विध्युपासनादि ।

न व्याख्येयम् । पातशब्दस्य देहपातं तुशब्दस्यावधारणमर्थमुक्त्वा देहपाते मुक्तेरावश्यकत्वावधारणं वाक्यार्थ इति चोक्तिर्न साधीयसी । मुक्तिप्रापकपदाभावात्—भोगेन त्वितरे क्षपयित्वाथ संपद्यते (ब्र. सू. ४।१।१९) इत्यग्रे वक्तव्यत्वाच्च ॥ ४।१।१४ ॥

५ **अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ ४।१।१५ ॥**

ननु देहस्य कर्मजन्यत्वात्तन्नाशे तन्नाशस्यावश्यकत्वाच्च ब्रह्मविदः प्रवचनानुपपत्तिः । एवं सति ब्रह्मजिज्ञासोर्गुरूपसत्त्यादिसाधनासंभवः । आचार्यवान् पुरुषो वेद (छां. ६।१४।२) इति श्रुतेस्तदभावेन ज्ञानमार्गोच्छेदेन मुक्त्युच्छेदप्रसंग इत्याशङ्क्य समाधत्ते । पूर्वे पूर्वसूत्राभ्यां १० ज्ञाननाश्यत्वेन ये प्रोक्ते पापपुण्ये ते नाशेषे किंत्वनारब्धं भोगायतनलक्षणं कार्यं याभ्यां त एवेत्यर्थः । नन्वितरनिरपेक्षं हि ज्ञानं स्वशक्त्यैवाग्निरेध इव कर्माणि दहतीति पूर्वमुक्तं तथा सत्यशेषमेव तद्दहतीति वक्तुं युक्तम् । न तु सशेषम् । शक्तेरविशिष्टत्वात् । न च कर्मनाशेपि संस्कारवशात् कुलालचक्रभ्रमिवत्तद्वासनावशात् देहा- १५ दिसत्तया प्रवचनाद्युपपत्तिरिति वाच्यम् । ज्ञानस्य सर्वतो बलवत्त्वात् सवासनस्य तस्य नाशनात् । न हि महाशिलानिष्पाते चक्रभ्रमिरनुवर्तितुं शक्नोतीत्याशङ्क्यारब्धकार्यादहने हेतुमाह—तदवधेः । तज्ज्ञानेनारब्धकार्यादहनं यत् तदखिलकारणकारणत्वेनाखिलस्य पूर्वावधिरूपभगवदिच्छालक्षणाद्धेतोरित्यर्थः । यत्र तस्यापि दहनेच्छा तत्र तथैवेति निगू- २० ढाशयः । अत एवाग्रे तथा वक्ष्यते । अत एव श्रीभागवते मृगदारकाभासेन स्वारब्धकर्मणा योगारम्भणतो विभ्रंशित (भा. ५।८।२६) इति । उपभोगेन कर्मारब्धं व्यपनयन् (भा. ५।१०।१४) इति च भरतं प्रति वचनं गीयते । एवं सति मणिमन्त्रादिप्रतिबद्धशक्तेरग्नेरिव ज्ञानस्याप्यदाहकत्वे न काचिद्धानिरिति सर्वमनवद्यम् । इच्छाप्रतिबद्धतादशायां न प्राचीना

---

1–C om. न after तत्परत्वेन ।

9–B reads भक्त्युच्छेद for मुक्त्युच्छेद ।

16–M, A and C read निपाते for निष्पाते ।

दशास्तीति तद्व्यवच्छेदज्ञापनाय तुशब्दः । एतेन भगवद्भावस्य सर्वतो बलवत्त्वात् कथं तस्य पात इति शङ्का निरस्ता । भगवदिच्छाया मूलकारणत्वेनोक्तेस्तस्याः सर्वतो बलिष्ठत्वात् । तथेच्छा च स्वकृतमर्यादापालनाय पुष्टावङ्गीकृते न तथेति सर्वमनवद्यम् ॥४।१।१५ ॥

५ **अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ ४।१।१६ ॥**

ननु प्रारब्धं हि प्राचीनं तन्नाशाय तद्भोग एव कर्तव्यो ब्रह्मविदा न तु विहितमन्यदप्यग्निहोत्रादि । प्रयोजनाभावात् । दृश्यते च तादृशानां तत्करणमत उत्तरस्य कर्मणः संश्लेष आवश्यक इत्याशङ्क्य तत्प्रयोजनमाह । तुशब्दः शङ्काव्युदासकः । अग्निहोत्रादिविहितकर्मकरणं तत्कार्यायैव १० भोगकार्याय प्रारब्धनाशायैवेत्यर्थः । येषामग्निहोत्रादिकारकं प्रारब्धमस्ति तैरेव तन्नाशाय भोगवत्तदपि क्रियते न त्वतादृशैरत एव न सनकादीनां तथात्वम् । कुत एतत् । तद्दर्शनात् । यथाकारी यथाचारी तथा भवति साधुकारी साधुर्भवति पापकारी पापो भवति पुण्यः पुण्येन कर्मणा भवति पापः पापेन ( बृ. ४।४।५ ) इति श्रुतिः पूर्वकर्मणोग्रिमकर्महेतुत्वं दर्श- १५ यतीति नानुपपत्तिः काचित् । केचित्तु ज्ञानस्य यत्कार्यं तदेवाग्निहोत्रादेरिति तत्कार्यायेति पदस्यार्थं वदन्ति । स न साधुः । तदधिगम इत्युपक्रमाद् ब्रह्मविदः प्रारब्धात्मकप्रतिबन्धनाशे मोक्षस्य पूर्वज्ञानेनैव संपत्तेः कर्मणो वैयर्थ्यापातात् । तमेतं वेदानुवचनेन (बृ. ४।४।२२) इत्यादिश्रुतिदर्शनं दर्शनपदार्थ इत्यपि पूर्वविरोधादुपेक्ष्यः ॥ ४।१।१६ ॥ ६ ॥

---

२० 
## ७ अतोन्याधिकरणम् ।

### अतोन्यापि ह्येकेषामुभयोः ॥ ४।१।१७ ॥

तदेवं पूर्वसूत्रचतुष्टयेन मर्यादामार्गीयभक्तस्य मर्यादयैव मुक्तिप्रतिबन्धसंभवस्तयैव तन्नाशश्चेति निरूपितम् । अथ पुष्टिमार्गीयस्य विनैव भोगं प्रारब्धं नश्यति न वेति विचार्यते । तत्र भोगैकनाश्यस्वभावत्वात्तस्य २५ न तं विनास्यापि तन्नश्यतीति प्राप्ते निर्णयमाह । एकेषां पुष्टिमार्गीयाणां

भक्तानामुभयोः प्रारब्धाप्रारब्धयोर्भोगं विनैव नाशो भवति। कुत एतत् । तत्राह। अतः श्रुतेः कर्मणो ज्ञाननाश्यत्वनिरूपिकायाः। ब्रह्मविद एव प्रवचनादिनिरूपणेन तदनाश्यप्रारब्धाख्यकर्माक्षेपकश्रुतेश्च । अन्यापि श्रुतिः पठ्यते। तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः ५ पापकृत्याम् इति । ज्ञानभोगाभ्यां कर्मनाशानिरूपकश्रुत्यास्याः श्रुतेर्विरोधपरिहारायावश्यं विषयभेदो वाच्यः । न च काम्यकर्मविषयेयं श्रुतिरिति वाच्यम् । तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ ( ब्र. सू. ४।१।१३ ) इति सूत्रेणेतरस्याप्येवमिति सूत्रावयवेन चाविशेषेणारब्धातिरिक्तकर्मणोरखिलयोर्नाशानिरूपणात्। पापकृत्यायां काम्यत्वा- १० संभवाच्च। तस्मादत्यनुग्रहभाजनस्य भक्तस्य स्वप्राप्तिविलम्बमसहिष्णुर्भगवानस्य प्रारब्धमेतत्संबन्धिगतं कृत्वा तस्य तेन भोगं कारयति। प्रारब्धं भोगैकनाश्यमिति स्वकृतमर्यादापालनाय न नाशयति। न च तयोरमूर्तत्वेनाकृताभ्यागमप्रसंगेन च नैवं वक्तुमुचितमिति वाच्यम् । ईश्वरत्वेनान्यथापि करणसंभवात्। मर्यादाविपरीतस्वरूपत्वात् पुष्टिमार्गस्य न काचना- १५ त्रानुपपत्तिर्भावनीया। तस्या अत्र भूषणत्वात्। अत एवैकेषामिति दुर्लभाधिकारः सूचितः॥ ४।१।१७ ॥

## यदेव विद्ययेति हि ॥४।१।१८॥

ननु—यदेव विद्यया करोति ( छां १।१।१० ) इति श्रुत्या विद्यापूर्वकं कर्मकरणे वीर्यातिशयः फलं श्रूयते। अतो ब्रह्मविद्यावतोपि तथा- २० त्वस्योचितत्वात् तदुत्तरस्याश्लेष इति यदुक्तं तन्नोपपद्यत इति प्राप्त आह। यदेवेति । हि यस्माद्धेतोस्त्वया—यदेव विद्यया करोति श्रद्धयोपनिषदा ( छां. १।१।१० ) इति श्रुतेरेव ब्रह्मविदोपि कर्मोत्पत्तिप्रसाञ्जिकात्वेनोदाहृता। सा तु न समर्था । तथाहि । ॐ मित्येदक्षरमुद्गीथमुपासीत ( छां. १।१।१ ) इत्युपक्रम्य तस्य रसतमत्वं २५ मिथुनरूपत्वमनुज्ञाक्षरत्वं त्रयीप्रवृत्तिहेतुत्वं च निरूप्यैतदग्रे—यदेव विद्यया ( छां. १।१।१० ) इत्याद्युक्त्वा—इति खल्वेतस्यैवाक्षरस्योपव्याख्यानं

भवतीत्युपसंहारादुद्गीथोपासनाविषयमेव यदेव विद्ययेति वाक्यमिति ज्ञायते । तेनोक्तरसतमत्वादिप्रकारकोपासनानां मध्ये—यदेव विद्यया करोति तदेव वीर्यवत्तरं भवति ( छां. १।१।१० ) इति तदर्थं इति न ब्रह्मविद्यागन्धोपीति न सा शङ्कात्र संभवतीत्यर्थः । यद्वा । उक्ताशङ्का-
५ निरासायैवाह । यदेवेति । ब्रह्मविद्धि प्रारब्धक्षयायैव कर्म कुरुते तत्त्व-न्यक्कृतात्कर्मणः सकाशात् सवासनतन्नाशनाद् वीर्यवत्तरं भवत्येवेति नानुपपत्तिः काचिदित्यर्थः । यद्वा । ननु पुष्टिमार्गीयस्य प्रारब्धस्यापि भोगं विनैव नाश इति श्रुत्वासंभावनां कुर्वाणं प्रति कैमुतिकन्यायेन तत्प-रिहारमाह । यदेवेत्यादि । जीवनिष्ठा विद्या हि भगवज्ज्ञानशक्तेरंशभूता ।
१० एवं सति यत्र धर्मसंबन्धिसबन्धादन्येभ्योतिशयं कर्मणि वदति श्रुतिस्तत्र साक्षाद्धर्मिसंबन्धेतिशायितकार्यसंपत्तौ कथमसंभावना कर्तुमुचितेति निगू-ढाशयः । अत एव हेतुवाची हिशब्दः ॥ ४।१।१८ ॥

## भोगेन त्वितरे क्षपयित्वाथ संपद्यते ॥ ४।१।१९ ॥

पुष्टिमार्गीयफलप्राप्तौ प्रतिबन्धाभावं सोपपत्तिकमुक्त्वा तत्प्राप्तिप्रका-
१५ रमाह । इतरे । अग्रेप्राप्यालौकिकदेहाद्भिन्ने स्थूललिङ्गशरीरे क्षपयित्वा दूरीकृत्य, अथ भगवल्लीलोपयोगिदेहप्राप्त्यनन्तरं भोगेन संपद्यते । सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ( तै. २।१ ) इति श्रुत्युक्तेन भोगेन संपद्यत इत्यर्थः । श्रुत्यर्थस्त्वानन्दमयाधिकरणे निरूपितः । अलौकिकत्वं विनोक्तदेहं विना चोक्तफलप्राप्तेर्व्यवच्छेदकस्तुशब्दः
२० ॥ ४।१।१९ ॥ ७ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये
चतुर्थाध्यायस्य प्रथमः पादः ॥ ४।१ ॥

# अथ चतुर्थाध्याये द्वितीयः पादः ।

## १ वाङ्मनोधिकरणम् ।

### वाङ् मनसि दर्शनाच्छब्दाच्च ॥ ४।२।१ ॥

पूर्वपादे लौकिकशरीरे क्षपयित्वालौकिकं तत्प्राप्य फलेन संपद्यत
५ इति निरूपितम्। अथात्रेदं चिन्त्यते। भक्तस्य सूक्ष्मशरीरस्य क्षपणं नाम किं तत्स्वरूपनाशनमुत मणिस्पर्शादयश्चामीकरत्वमिव तस्यैवालौकिकत्वसंपादनं भगवदनुग्रहादिति। अत्रोत्तर एव पक्षः साधीयानिति भाति। तथाहि यथा पूर्वं संसारिण एव जीवस्य तदनुग्रहात् पूर्वावस्थापगमो मुक्त्यवस्था चोच्यते तथात्रापि वक्तुमुचितत्वात्! न तस्मात्प्राणा उत्क्रामन्त्य-
१० त्रैव समवलीयन्ते ( बृ. ४।४।६ ) इति श्रुतिस्तु जीवस्य सायुज्यमुक्तिकाले तत्प्राणादीनामपि तथैवाहात एवाग्रे—ब्रह्मैव सन् ब्रह्माप्येति (बृ. ४।४।६) इत्युच्यते। पुष्टिमार्गीयस्योक्तमुक्त्यभावान्नेयं तद्विषयिणीति प्राप्ते प्रतिवदामः। ब्रह्मांशत्वेन जीवस्यानन्दात्मकत्वान्निर्दोषस्वरूपत्वान्नित्यत्वाच्च दोषाणां चागन्तुकत्वात्तदपगमे तस्य तथात्वमुचितम्। प्राणादयस्तु
१५ न तादृशा इति तद् दृष्टान्तेनात्रापि तथात्वं न वक्तुं शक्यम्। देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम् ( भा. ७।१।३४ ) इति श्रीभागवतवाक्याच्च। न च लौकिकत्वविशिष्टदेहादिरत्र निषिध्यत इति वाच्यम्। सामान्यनिषधे बाधकाभावात्। न च तदनुभव एव बाधक इति वाच्यम्। भगवत इव तदीयानामपि तेषां तथात्वे बाधकाभावात्।
२० नन्वागन्तुकत्वमेव बाधकमिति चेन्मैवम्। यथा व्यापिवैकुण्ठस्याक्षरात्मकत्वेनागन्तुकत्वेन नैसर्गिकतद्गताखिलवस्तुरूपत्वेन सामीप्यादिमुक्तिं प्राप्नुवतां भक्तानां देहेन्द्रियादिरूपमप्यनागन्तुकमेव वैकुण्ठप्राप्तिमात्रेण शुद्धजीवानां संपद्यते। तदीयत्वेन तत् फलतीति यावत्। तथा पुरुषोत्तमलीलाया अपि पुरुषोत्तमात्मकत्वात्तत्राङ्गीकारमात्रेण प्राचीनाशेषप्रा-
२५ वाहिकधर्मनिवृत्तौ शुद्धजीवस्य पुरुषोत्तमलीलात्मकदेहादिरपि तदीयत्वेन संपद्यत इति नानुपपन्नं किंचिदित्यवहितोवेहि। अयमेवार्थो वाजसनेयि-

शाखायाम्—अथाकामयमानः (बृ. ४।४।६) इत्युपक्रम्य—आत्मकाम आप्तकामो भवति न तस्मात् प्राणा उत्क्रामन्त्यत्रैव समवलीयन्ते ब्रह्मैव सन् ब्रह्माप्येति ( बृ. ४।४।६ ) इत्यन्तेन वाक्येन निगद्यते। अत्र प्राणशब्देन प्राणाः सर्वेन्द्रियाणि चोच्यन्ते। आत्मकामशब्देन भगवद्वाचकात्मपद-
५ ग्रहणेन भक्तस्य स्नेहातिशयजनितप्रभुदिदृक्षार्त्यतिशयस्तादृशो येन मरणमेव संपद्येत यदि प्रभुप्राकट्ये क्षणमपि विलम्बः स्यात्। अतो भगवत्प्राकट्येनैवात्मस्थितिरिति ध्वन्यते। भक्तिमार्गे प्राकट्यस्यैव परमफलत्वेन तद्दर्शनेनाप्तकामो भवति। ततः साक्षादाश्लेषादिकामनायां प्राचीनदेहप्राणादेस्तदयोग्यत्वात्ते तत्रैव लीना भवन्तीति। बहिः प्रकटस्यैवान्तरपि
१० प्राकट्यादुत्क्रमणाभाव उच्यते। आत्मातिरिक्तस्य गतिमुक्त्वा तस्य तामाह। ब्रह्मैव सन् ब्रह्माप्येति ( बृ. ४।४।६ ) इत्यनेन उक्तरीत्या पुरुषात्मकतल्लीलोपयोगिदेहेन्द्रियादिसंपत्त्या ब्रह्मैव सन्न तु ब्रह्मातिरिक्तदेहादिमानपि तादृशः सन् ब्रह्म बृहत्वात् बृंहणत्वात् पुरुषोत्तमस्वरूपं प्राप्तो भवतीत्यर्थः। अन्यथा जीवस्य ब्रह्मांशत्वेनानन्दांशाविर्भावेन च
१५ ब्रह्मत्वे प्राणादिलयोक्त्या ब्रह्म तदितरव्यवच्छेदे चानुक्तसिद्धे सति ब्रह्मैव सन्निति वा न वदेत्। अत एवैतदग्रे श्लोकोक्तिः। अथ मर्त्योमृतो भवत्यत्र ब्रह्म समश्नुते ( बृ. ४।४।७ ) इति। मृतिधर्मवच्छरीरं हि मर्त्यं तद्वत्त्वेन जीवोपि तथोच्यते। तथा चायं पूर्वं तादृश एव। अथ पुष्टिलीलाप्रवेशानन्तरममृत उक्तरूपशरीरवान् भवति। ततोत्रास्मिन्नेव शरीरे
२० ब्रह्म सम्यगश्नुते। भगवता क्रियमाणलीलारसमनुभवतीत्यर्थः। भगवान् बादरायण इमामेव श्रुतिं विषयीकृत्य तत्रोक्तप्राणानां लय एकदैवोत क्रमनियमोस्तीति संशये निर्णयमाह। वाङ् मनसीति। तत्र हेतुर्दर्शनादिति। एतदुक्तं भवति। भक्तेः स्नेहात्मकत्वात्तस्य प्रभुप्राकट्यफलकत्वात्तदौत्कण्ठ्ये तस्यावश्यकत्वादयं मां पश्यत्विति प्रभिच्छया तस्मिन् संपन्ने
२५ चक्षुर्भ्यां मनसा च तद्रूपामृतमनुभवतः स कोप्युत्कटो भावः समजानि

---

9–M, A and C read भवन्ति for भवन्तीति।

15–M, A, C and D om. ब्रह्म after प्राणादिलयोक्त्या।

येन प्रभुणा सह सर्वेन्द्रियव्यापारकृतीच्छा समभूत् । तत्र तेषामसामर्थ्यात् भगवदानन्दसंबन्धिमनःसंबन्धेन तं प्राप्स्याम इति तत्रैव संगतास्तेनानन्देन संपन्ना जाताः । अयमेवार्थोनेन सूत्रेणाग्रिमेण च—अत एव सर्वाण्यनु ( ब्र. सू. ४।२।२ ) इति सूत्रेण निरूप्यते । दर्शनानन्तरमादौ ५ सहसंभाषणेच्छैव जन्यत इति वाङ् मनसि संपद्यते ( छां. ६।८।६ ) इति च्छान्दोग्ये स्फुटोक्ते संमत्या चादौ सैवोक्ता । एवं सति वाङ् मनसि संगता सती भगवदानन्देन संपद्यत इति सूत्रार्थः संपद्यते । दर्शनाभावेपि वेण्वादिशब्दादपि तथा संपद्यत इति हेत्वन्तरमाह । शब्दाच्चेति ॥ ४।२।१ ॥

## १० अत एव सर्वाण्यनु ॥ ४।२।२ ॥

अत एव दर्शनाच्छब्दाच्च हेतोः सर्वाणीन्द्रियाणि । अनु सांनिध्याद् वाचः पश्चान्मनसि संगतानि भगवदानन्देन संपद्यन्त इत्यर्थः । केचित्त्वत्र छान्दोग्यस्थ-वाङ् मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ( छां. ६।८।६ ) इति वाक्यं विषयत्वेनोक्त्वा सूत्रे वाक्पदस्य १५ तद्वृत्तिपरत्वं वदन्ति संपत्तिं तन्नाशं च । तन्न साधीयः । तथाहि । वाक्पदस्य वृत्तिपरत्वं चेच्छ्रुत्यभिमतं स्यात्सूत्रकारस्तदा तथैव तदेन्न तु तत्सारूप्यमेव वाक्यम् । तन्निर्णयार्थमेव प्रवृत्तेः । मुख्यार्थत्यागो लक्षणापत्तिश्च । किंचैव मनसीति पदवैयर्थ्यं स्यात् । विषयवाक्योक्तक्रमत्यागानुपपत्तिश्चेति ॥ ४।२।२ ॥

## २० तन्मनः प्राण उत्तरात् ॥ ४।२।३ ॥

पूर्वोक्तसर्वेन्द्रियवैशिष्ट्यवन्मनः प्राणे संपद्यते न तु केवलम् । तत्र हेतुः । उत्तरादिति । स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सोम्य तन्मनो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते ( छां. ६।८।२ ) इत्युक्त्वा २५ तत्र हेतुमुत्तरेण वाक्येनाह । प्राणबन्धनं हि सोम्य मनः (छां. ६।८।२) इति । तस्माद्धेतोस्तथेत्यर्थः ॥ ४।२।३ ॥

## सोऽध्यक्षे तदुपगमादिभ्यः ४।२।४ ॥

सर्वेन्द्रियविशिष्टमनोविशिष्टः प्राणोऽध्यक्षे पुरो हृदि वा प्रकटे भगवति संपद्यत इत्यर्थः । अत्र हेतुः । उपगमादिभ्य इति । उपगमोऽभ्युपगमः पुष्टिमार्गेऽङ्गीकार इति यावत् । ततस्तथेत्यर्थः । आदिपदाद् भगवद्वशीकर-
५ णसमर्थः स्नेहः प्रभ्वनिङ्गितार्थत्यागस्तदनुरूपं भजनं च । अभ्यु-पगमे सिद्धे स्नेहादयोऽवश्यं भवन्त्येवेत्याशयेन तदादित्वमुक्तम् । नोद्देशः कृतः । मर्यादामार्गेऽङ्गीकृतानां तु मुक्तिपर्यवसायित्वेन मुमुक्षुत्वादुत्कटस्ने-हासंभवेन प्रभुप्राकट्यासंभवात् स्वप्रकृतौ संघातलये शुद्धजीवस्य भग-वदनुग्रहेण श्रवणादिरूपया तथाविधस्नेहरूपया च भक्त्या मुक्तिः संप-
१० द्यत इति बह्वेव तारतम्यमिति निगूढाशयेनेदमुक्तम् । अभ्युपगमादयस्तु मुण्डकोपनिषत्सु पठ्यन्ते । नायमात्मा ( मुं. ३।२।४ ) इत्युपक्रम्य— यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा वृणुते तनूं स्वाम् । नायमा-त्माबलहीनेन लभ्यो न च प्रमादात्तपसो वाथ लिङ्गात् । एतैरुपायै-र्यतते यस्तु विद्वांस्तस्यैष आत्मा विशते ब्रह्म धाम ( मुं. ३।२।४ )
१५ इति ॥ ४।२।४ ॥ १ ॥

---

## २ भूताधिकरणम् ।

उक्तं निगूढमाशयं प्रकटयति ।

## भूतेषु तच्छ्रुतेः ॥ ४।२।५ ॥

ननु मर्यादामार्गीयाणामप्येवमेव वागादिलय उतान्यथेति संशये
२० निर्णयमाह । तेषां ते भूतेषु लीयन्ते न तूक्तरीत्या भगवति । अत्र प्रमा-णमाह तच्छ्रुतेः । यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षु-रादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीꣳ शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन् केशा अप्सु लोहितं च रेतश्च निधीयते ( बृ. ३।२।१३ ) इति श्रुतेः । न चाविद्वद्विषयिणीयं श्रुतिरिति वाच्यम् । याज्ञवल्क्येति

होवाच । यत्रायं पुरुषो म्रियत उदस्मात् प्राणाः क्रामन्त्याहो नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्रायत्याध्मायत्याध्मातो मृतः शेते ( बृ. ३।२।११ ) इति पूर्ववाक्यात् । न ह्यविदुषः प्राणानामनुत्क्रमः । तमुत्क्रामन्तं प्राणोनूत्क्रामति ( बृ. ४।४।२ ) इत्यादिश्रुतेः ।
५ ननु यत्रास्य पुरुषस्य ( बृ. ३।२।१३ ) इत्युपक्रम्य—रेतश्च निधीयते ( बृ. ३।२।१३ ) इत्यन्ता श्रुतिरविद्वद्विषयिणीति मन्तव्यम् । यत एतदग्रे—क्वायं तदा पुरुषो भवति ( बृ. ३।२।१३ ) इति प्रश्ने याज्ञवल्क्यार्तभागाभ्यां विचारितमुत्तरमुच्यते । तौ ह यदूचतुः कर्म हैव तदूचतुरथ ह यत् प्रशशꣳसतुः कर्म हैव तत् प्रशशꣳसतुः पुण्यो वै पुण्येन
१० कर्मणा भवति पापः पापेन ( बृ. ३।२।१३ ) इति । एतेन कर्माश्रयस्तिष्ठतीति निर्णयः संपद्यते । एवं सति प्राणानुत्क्रमणोक्त्या संघातलयोक्त्या च विद्वद्विषयत्वमत्रावसीयते यतस्तस्यैवोक्तं द्वयं संभवति । अग्रिमश्रुत्युक्तकर्माश्रयत्वं च तस्मिन् विरुद्धमतः पूर्वोत्तरविरोधाद्विषयानिश्चये प्राप्ते प्रतिवदामः । मर्यादामार्गीयविद्वद्विषयिण्येवेयं श्रुतिरिति ।
१५ अत एव प्रश्ने क्व तदा पुरुषो भवति इत्येतावतैव चारितार्थ्येऽपि साधारणपुरुषव्यावृत्त्या मर्यादामार्गीयतत्प्रापकमय्यमिति पदम् । तस्यैवोपक्रान्तत्वात् । तथा तदग्रिमविचारितोऽर्थोऽपि तद्विषयक एवेति बुध्यस्व । ननूक्तं बाधकमिति चेत् । हन्त श्रुतिशिरःसमाकलितमाकलय । मर्यादामार्गे हि विधिप्राधान्यात्तथैव निर्माणात् । तत्र ह्येवं कृत एवं फलं
२० दास्ये न त्वकृतेऽपीति भगवदिच्छा । अतः कर्म प्रधानम् । एवं सत्यार्तभागस्यायमाशयः । वागादिरेतोन्तलयेन प्रारब्धस्यापि तदा नाशाच्छुद्धं जीवं विध्यविषयं कदाचित्पुष्टौ प्रवेशयाति नवेति संशयेन तदापि किं मर्यादामार्ग एवोत पुष्टावपि प्रवेशितो भवतीति प्रश्नः । तदास्यार्थस्येश्वरेच्छारीतिमविदुषो दुर्ज्ञेयत्वं जानन्ती स्वयमेव यद-
२५ वधारितवती तदपि रहस्यमिति स्फुटमनुक्त्वा श्रुतिः पर्यवासितमर्थमुक्त-

19–M and C read विधिप्राधान्यं for विधिप्राधान्यात् ।

वर्ती तौ हेत्यादिना। अत्र कर्मपदं मर्यादामार्गपरं तथा च मर्यादा-
मार्ग एव तस्य स्थितिरित्यर्थः संपद्यते। मुक्त एव भवतीति यावत्।
अत एव तत्प्रशंसापि। यत ईश्वरत्वेन सर्वकरणसमर्थोपि तद्दाने तदपेक्षते।
अत्र हेतुत्वेन मर्यादामार्गस्वरूपमुक्तम्—पुण्यो वै (बृ. ३।२।१३)
५ इत्यादिना॥ ४।२।५॥

ननु मर्यादामार्गीयो भक्तो ज्ञानी च भवतः। उक्तनिर्णयस्तु
ज्ञानमार्गीयविषय एव। भक्तं तु तादृशमपि कदाचित् पुष्टावपि प्रवेशय-
तीत्याशङ्क्य तन्निर्णयमाह।

## नैकस्मिन् दर्शयतो हि॥ ४।२।६॥

१० एकस्मिन् ज्ञानिनि भक्ते वा मर्यादानियमो न किंतूभयोरपि।
तत्र हेतुः—दर्शयत इति। यतो याज्ञवल्क्यार्तभागौ ज्ञानिभक्तसाधारण्येन
मर्यादानियमं दर्शयत उक्तरीत्या तौ हेत्यादिना। अन्यथाप्राकृताङ्गी-
कृतिरन्यथा भवेदित्युपपत्तिर्हिशब्देन सूच्यते। पूर्वोक्तपूर्वोत्तरश्रुतिविरोधप-
रिहारान्यथानुपपत्तिरत्र मूलमिति ज्ञेयम्। केचित्तूपसंहृतेषु वागादिषु शरीरा-
१५ न्तरप्रेप्सासामयिको जीवः क्वायं तदा पुरुष इति प्रश्नविषयः इति वदन्ति।
तन्न साधीयः। तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तꣳ सर्वे
प्राणा अनूत्क्रामन्ति (बृ. ४।४।२) इति श्रुतिर्भाविदेहान्तरजीवस्य
प्राणानामिन्द्रियाणां च सहैवोत्क्रमणं वदतीति वागादिलयस्य तत्रासंभ-
वान्नोक्तस्य प्रश्नविषयत्वं वक्तुं शक्यम्। पूर्ववाक्यैनैव समवलीयन्त इत्यु-
२० क्तत्वाच्चातोस्मदुक्त एव मार्गोनुसर्तव्यः। एतेन नायं परविद्यावान् यतः
अमृतत्वमेव तत्फलमिति। तच्च देशान्तरानायत्तमित्युत्क्रमणापेक्षा कर्मा-
श्रयत्वं च न स्यात्। किंत्वपरविद्यावान्। तस्यास्तु ब्रह्मलोकावधि
फलमिति कर्माश्रयत्वोत्क्रमणादिकं संभवतीत्यपि निरस्तं वेदितव्यम्
॥ ४।२।६॥ २॥

---

12–M, A and C read प्राकृताङ्गीकारो for प्राकृताङ्गीकृतिः।

## ३ समानाधिकरणम् ।

मर्यादापुष्ट्योर्न कदाचिदन्यथाभाव इति यदुक्तं तत्र हेत्वपेक्षायां वस्तुस्वरूपमेव तथेति बोधयितुमाह । समानेत्यादि ।

### समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ४।२।७ ॥

५ अत्रायमाशयः । साधनक्रमेण मोचनेच्छा हि मर्यादामार्गीया मर्यादा । विहितसाधनं विनैव मोचनेच्छा पुष्टिमार्गमर्यादा । तथा सति सदैकरूपत्वं तयोर्युक्तमिति । एतदेवाह । सृतिः संसृतिः । जीवानां स्वस्मात् पृथक्कृतानामविद्ययाहन्ताममतास्पदीकरणम् । तदुपक्रम आरम्भस्तं मर्यादीकृत्य मुक्तिपर्यन्तमुक्तरूपा मर्यादा समाना सदैकरूपा १० मध्ये नान्यथा भवतीत्यर्थः । एवमेवानुपोष्य व्रतमकृत्वामृतत्वमपि पुष्टिमार्गे समानमित्यर्थः । अत्रोपोषणपदमशेषमुक्तिसाधनोपलक्षकम् ॥ ४।२।७ ॥

एवं प्रासंगिकमुक्त्वा प्रकृतं परामृश्यते । सोध्यक्ष इति सूत्रेण पुष्टिमार्गीयभक्तसंघातस्य भगवत्येव लय इत्युक्तम् । अग्रिमेण तेन मर्यादा- १५ मार्गीयभक्तसंघातस्य भूतेषु लयमुक्त्वा प्रश्नानन्तरं शुद्धजीवस्य तस्य मुक्तिरेव भवतीति वक्तव्ये सति—आहर सौम्य हस्तम् ( बृ. ३।२।१३ ) इत्यादिना स्वाशयमन्येष्वप्रकटयन्तौ कर्म यन्निरूपितवन्तौ तत्कुत इत्याशङ्क्य तयोराशयं निगूढं प्रकटयति ।

### तदापीतेः संसारव्यपदेशात् ॥ ४।२।८ ॥

२० तदा नित्यलीलान्तःपातलक्षणपुष्टिमार्गीयमुक्तिदशायां मर्यादामार्गीयाया अपीतेर्मुक्तेः संसारत्वाभावेपि पुरुषोत्तमभजनानन्दानुभवाभावात् संसार इत्येव पुष्टिमार्गे व्यपदेशो यतः क्रियतेतस्तदभिसंधाय तया रीत्या निरूपणम् । अत एव श्रीभागवते श्रीशिववचनं गीयते—नारायणपराः सर्वे न कुतश्चन बिभ्यति । स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः २५ ( भा. ६।१७।२८ ) इति । श्रीभगवद्गीतास्वपि । देवान् देवयजो यान्ति

मद्भक्ता यान्ति मामपि ( भ. गी. ७।२३ ) इति वाक्येन । मर्यादामार्गीयभक्तमुक्तेरितरसाधारण्यमुच्यते ॥ ४।२।८ ॥

ननु संसारवन्मुक्तेरपि हेयत्वं यत्र तादृशं चेत् पुष्टिमार्गीयतत्त्वं तदा मुक्तेः पुरुषार्थत्वबोधिकायाः श्रुतेः प्रतारकत्वमापतीति तद्बोधक-
५ प्रमाणानां तत्स्तुतिमात्रपरत्वमेवेति प्राप्त आह ।

## सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ४।२।९ ॥

पुष्टिमार्गीयं तत्त्वं सूक्ष्मं दुर्ज्ञेयमित्यर्थः । अत्रायमाशयः । पुष्टिमर्यादामप्यतिक्रम्य पुष्टिपुष्टौ प्रवेशे तत्तत्वमनुभवविषयो भवति नान्यथा। तत्र प्रवेशस्त्वतिदुरापोतिशायितानुग्रहेतरासाध्यत्वादत उक्तेतराज्ञेयमेव
१० तद्भवति । तेषां तु मुक्तिरेव फलम् । तस्या एवेष्टत्वाद्रागिणां स्वर्गादिवत्। इष्टफलाप्राप्तौ हि प्रतारकत्वमन्यथा प्रवृत्तिमार्गीयफलबोधिकाया अपि श्रुतेः प्रतारकत्वं स्यात्। इच्छा चाधिकारानुसारिणीति नानुपपन्नं किंचिदिति। नन्वेवंविधार्थास्तित्वे किं मानमित्याकाङ्क्षायामाह । प्रमाणत इत्यादि। प्रमाणं श्रुतिः । सा तु—यतो वाचो निवर्तन्ते । अप्राप्य मनसा सह ।
१५ आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन ( तै. २।९ ) इति । एतꣳह वाव न तपति । किमहं साधु नाकरवं किमहं पापमकरवम् ( तै. २।९ ) इति ।

अत्र पूर्वार्धेन दुर्ज्ञेयत्वमुत्तरार्धेन तत्सत्ता च बोध्यते । अन्यथा मनसाप्यप्राप्यस्य वेदनकथनं विरुद्धं स्यादतो दुर्ज्ञेयत्वेनैव धर्मिग्राहकमान-
२० सिद्धं तदित्यर्थः । चकारात्तादृशानामनुभवः परिगृह्यते ॥ ४।२।९ ॥

तर्हि ब्रह्मविदामिव तादृशानां भक्तानामपि स्वमार्गोपदेशनं क्वाचिच्छ्रूयेत । न चैवम् । अतः पूर्वोक्तं न साधीय इति भातीत्युत्सूत्रमाशङ्क्य तत्र हेतुमाह ।

## नोपमर्देनातः ॥ ४।२।१० ॥

२५ उपदेशनं तदा स्याद् यदि ब्रह्मविदामिव तेषां स्वास्थ्यं स्याद्यतस्तेषां विरहिदशा प्रियसंगमदशा चेति दशाद्वयमेव भवति नान्या ।

पूर्वस्यास्त्वस्यास्त्वतिदुःसहत्वेन सर्वेषां भावानामुपमर्देन तिरोधानेनोपदेशो न भवतीत्यर्थः । संगमे तु अतः पुरःप्रकटपरमानन्दस्वरूपाद्भगवत एव हेतोरुपदेशोन्यस्मै न भवतीत्यर्थः । नहि भगवदग्रे स संभवतीति भावः ॥ ४।२।१० ॥

५ ननु—रसो वै सः रस५ ह्येवायं लब्ध्वानन्दीभवति ( तै. २।७ ) इत्युपक्रम्य—एष ह्येवानन्दयाति ( तै. २।७ ) इति श्रुतेरुक्तरूपानन्दप्राप्तौ दुःसहविरहतापोशक्यवचनः । आनन्दातिरोधान एव तत्संभवात् । तद्धेतोरसंभवात् । संभवे तु तत्प्राप्तिरेव न स्यादिति प्राप्त उत्तरं पठति

## अस्यैव चोपपत्तेरूष्मा ॥ ४।२।११ ॥

१० आनन्दात्मकरसात्मकस्यास्यैव भगवत एव धर्म ऊष्मा विरहताप इत्यर्थः । विरोधपरिहारायाह । उपपत्तेरिति । इदमुक्तं भवति । भगवद्विरहस्य सर्वसाधारणत्वेपि स्थायिभावात्मकरसरूपभगवत्प्रादुर्भावो यस्य हृदि भवति तस्यैव तदप्राप्तिजस्तापस्तदनन्तरं नियमतस्तत्प्राप्तिश्च भवति । न त्वतथाभूतस्येत्यन्वयव्यतिरेकाभ्यामुक्तरसस्यैवैष धर्म इति निश्चीयते । १५ तस्य वस्तुन एव तथात्वात्स तापोपि रसात्मक एव ॥ ४।२।११ ॥

## प्रतिषेधादिति चेन्न शारीरात् ॥ ४।२।१२ ॥

ननु—न पश्यो मृत्युं पश्यति न रोगं नोत दुःखताम् (छां.७।२६।२) इत्यादिश्रुत्या दुःखप्रतिषेधस्तादृशे भक्ते क्रियत इति तस्य दुःखित्वं न वक्तुं शक्यमित्याशङ्क्य प्रतिषेधति । नेति । कुतः । शारीरात् । शरीर- २० संबन्धिनो हेतोर्यद्दुःखं कर्मजनितमिति यावत् । तस्यैव श्रुतौ प्रतिषेधान्नात्रानुपपत्तिरित्यर्थः । एतेन दुःखत्वेन कर्मजन्यत्वानुमानमपि निरस्तं वेदितव्यम् । लौकिक एव दुःखे तज्जन्यत्वनियमात् ॥ ४।२।१२ ॥

## स्पष्टो ह्येकेषाम् ॥ ४।२।१३ ॥

एकेषां शाखिनां भगवत्स्वरूपलाभानन्तरं दुःखतन्निवर्तनलक्षणो- २५ र्थः स्पष्टः पठ्यते । तथाहि । रसो वै सः । रस५ ह्येवायं लब्ध्वानन्दी-

---

1:–M, A and C read असर्व for सर्व ।

भवति । को ह्येवान्यात् कः प्राण्यात् । यदेष आकाश आनन्दो न स्यात् । एष ह्येवानन्दयाति । ( तै. २।७ )अत्र रसात्मकभगवत्स्वरूपलाभे सत्यानन्दवत्त्वमुक्त्वा तस्यैव जीवनहेतुत्वं परमानन्दहेतुत्वं चोच्यते । मरणहेतूपस्थित्यभावे जीवनहेतुत्वं न वदेत् । स रसस्तु संयोगविप्रयोगभावाभ्यामेव ५ पूर्णो भवत्यनुभूतो नैकतरेण । तत्र विरहतापस्यात्युपमर्दित्वेन तदा प्रागस्थितिरपि न स्याद् यदि रसात्मको भगवान् हृदि न स्यादित्याशयेनाह । को ह्येवान्यादित्यादि । तद्यद्येष हृदि स्फुरद्रूप आकाशो भगवान्न स्यात्कस्तदान्यात् । अन् प्राणने । को वा जीवयेन्न कोपीत्यर्थः । तादृशस्य भगवत्स्वरूपातिरिक्तान्न जीवनमिति ज्ञापनाय सामान्यपदम् । ब्रह्मानन्दाधि-१० कपूर्णानन्दविरहासन्नमरणनिवारणासामर्थ्यमतादृशस्योचितमेवेति ज्ञापनाय हिशब्दः ।

तादृशस्य जीवनसंपादनं प्रभोरावश्यकमिति ज्ञापनायैवकारः । तापात्मकस्याप्यानन्दात्मकत्वमेवेति ज्ञापनायानन्दपदम् । तदा प्रलापगुणगानादयो ये भवन्ति तेपि तद्धर्मा एव नीलाम्बुदश्यामोतिक्लेशवशाद् १५ हृदयादपगच्छत्विति भावेपि हृदयान्नापसारयितुं शक्य इति ज्ञापनाय चाकाशत्वमुक्तम् । तदनन्तरं प्रकटीभूय तदन्यः को वा प्रकर्षेण दर्शनस्पर्शाश्लेषभाषणादिभिः स्वरूपानन्ददानेनान्यात् पूर्वतापनिवृत्तिपूर्वकमानन्दपूर्णं कुर्यादित्यर्थः । रसꣳ ह्येवायं लब्ध्वानन्दीभवति ( तै. २।७ ) इति पूर्ववाक्येनैवान्यव्यवच्छेदपूर्वकं भगवत्प्राप्तेरानन्दहेतुत्वप्राप्तावपि यत्पुनराह २० तत्रापि व्यतिरेकमुखेन तत्रापि जीवनहेतुत्वं तदपि सामान्यविशेषाभ्यां वारद्वयं तेन विरहसामयिकोक्तरूप एवार्थः श्रुतेरभिप्रेत इति निश्चीयते । अन्यथा मरणहेत्वनुपस्थितौ जीवनहेतुत्वं न वदेदित्युक्तम् । तदवस्थापन्नः को वा पुरुषो जीवेदिति वार्थः ॥ ४।२।१३ ॥

## स्मर्यते च ॥ ४।२।१४ ॥

२५ भगवद्भावस्य मरणहेतुत्वं तेनैव च जीवनं तस्य ब्रह्मादिदुरापत्वं च श्रीभागवते स्मर्यते । ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः ।

ये त्यक्तलोकधर्माश्च मदर्थे तान्बिभर्म्यहम् ( भा. १०।४६।४ ) इत्युपक्रम्य–धारयन्त्यथ कृच्छ्रेण प्रायः प्राणान् कथंचन ( भा. १०।४६।६ ) इत्यादि श्रीप्रभुवचनं श्रीमदुद्धववचनं च–एताः परं तनुभृतो भुवि गोपवध्वो गोविन्द एव निखिलात्मनि रूढभावाः । वाञ्छन्ति ये भवभियो ५ मुनयो वयं च किं ब्रह्मजन्मभिरनन्तकथारसस्य ( भा. १०।४७।५८ ) इत्यादि । तेन भगवत एव जीवनहेतुत्वं भावस्य च परमपुरुषार्थत्वं दुरापत्वं च स्फुटमवगम्यते ॥ ४।२।१४ ॥

## तानि परे तथा ह्याह ॥ ४।२।१५ ॥

ननु हृदि बहिश्च रसात्मकभगवत्प्राकट्यं तददर्शनजनितो विरह- १० भावस्तज्जनितस्तापस्तेन मरणोपस्थितिस्तन्निवर्तनं तदौत्कट्यं तदा प्राकट्यं ततः पूर्णस्वरूपानन्ददानादिकं लोके क्वचिदपि न दृष्टं श्रुतं वा वैकुण्ठेपीति कुत इत्याशङ्कायामाह । तानि । उक्तानि वस्तूनि परे प्रकृतिकालाद्यतीते वैकुण्ठादप्युत्कृष्टे श्रीगोकुल एव सन्तीति शेषः । तत्र प्रमाणमाह । तथा ह्याह श्रुतिः । ऋग्वेदे पठ्यते । ता वां वास्तून्युष्मसि १५ गमध्यै यत्र गावो भूरिशृङ्गा अयासः । अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि । ( ऋ. सं. २।२।२४ तै. सं. १।३।६ ) ता तानि वां भगवत्तदन्तरङ्गभक्तयोः संबन्धीनि वास्तूनि वस्तूनि गमध्यै प्राप्तुमुष्मसि कामयामहे । तानि कानीत्याकाङ्क्षायां गूढाभिसंधिमुद्घाटयति । यत्र श्रीगोकूले गावो भूरिशृङ्गा बहुशृङ्गा रुरुप्रभृतयो २० मृगाश्च वसन्तीति शेषः । अयासः शुभावहाः । तत उक्तगुणविशिष्टमुरु गीयत इत्युरुगायस्तस्य । गोप्यो हि सततं तं गायन्ति । अत एव तदादिभक्तेषु कामान् वर्षतीति वृषा तस्य परमं प्रकृतिकालाद्यतीतं पदं स्थानं भगवतो वैकुण्ठं भवति तत्रैतादृशलीलाभावेन तस्मादपि परममुत्कृष्टम् । अत्र भूमाववभाति प्रकाशत इत्यर्थः । तथापि स्वदृग्गोचरो न २५ भवतीति खेदेनात्राहेत्याह श्रुतिः । उरु गीयते परं सर्वत्र कामवर्षणं भक्तेष्वत्रैवेति तात्पर्येण वा विशेषणद्वयमुक्तम् । यमुनापुलिनतदुपवनानि-

कुञ्जगह्वरप्रदेशाद्रिसान्वाद्यात्मकत्वेन भूरि बहुरूपम् । तथा चैतादृशं यत्परमपदमवभाति तत्संबन्धीनि वास्तूनि कामयामह इति वाक्यार्थः संपद्यते । ते पदार्था इति वक्तव्ये सति तानीत्युक्तिर्या सा विषयवाक्यानुरोधादिति ज्ञेयम् ।

५ पुरुषोत्तमसंबन्ध्यर्थानां तत्प्राकट्यस्थान एव प्राकट्यं युक्तमिति हिशब्देनाह ॥ ४।२।१५ ॥ ३ ॥

---

## ४ अविभागाधिकरणम् ।

### अविभागो वचनात् ॥ ४।२।१६ ॥

ननु लीलाया नित्यत्वेन तन्मध्यपातिनां तद्दर्शनं यथा नित्यं १० तथा तादृक्साधनाभावेपि निजानुकम्पया कदाचित् कमपि भक्तं तत्र नयति चेत्तदा कंचित् कालं स्थापयित्वा ततस्तं वियोजयति नवेति संशयः । तोषस्य कादाचित्कत्वात् तत्साध्या तत्र स्थितिरपि तथैवेति वियोजयतीति पूर्वः पक्षः । तत्र सिद्धान्तमाह । तत्र प्रवेशितस्य तस्माद्विभाग एव । कुतः । वचनात् । तैत्तिरीयक उक्तर्गनन्तरमेव—विष्णोः कर्माणि १५ पश्यत ( तै. सं १।३।६ ) इत्यृचा तत्र कृतानि कर्माण्युक्त्वा तदग्रे वदति । ताद्विष्णोः परमं पद९ सदा पश्यन्ति सूरयः (तै.सं. १।३।६) इति । पुरुषोत्तमस्वरूपवित्त्वं सूरित्वम् । तच्च भक्त्यैवेति सूरयो भक्ता एव । तेषां सदा दर्शनमुच्यते । अन्यथा लीलानित्यत्वेनैव पूर्वगर्भ्यां तत्र स्थितगवादीनां प्रभुकर्मविषयाणां च भक्तानां सदा तद्दर्शनस्य प्राप्तत्वादिदं न वदेत्तस्मा- २० दविभाग एव । एतेनापि लीलानित्यत्वं सिध्यति । एतद्यथा तथा विद्वन्मण्डने प्रपञ्चितम् ॥ ४।२।१६ ॥ ४ ॥

---

## ५ तदोकोधिकरणम् ।

एवं पुष्टिमार्गीयभक्तवृत्तान्तमुक्त्वा ज्ञानमार्गीयस्य तमाह ।

### तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्त- २५ च्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ ४।२।१७ ॥

पूर्वं—भूतेषु तच्छ्रुतेः ( ब्र. सू. ४।२।५ ) इत्यादिना मर्यादामार्गीयस्य वागादिलय उक्तोऽधुना तस्य जीवात्मन उत्क्रमणप्रकार उच्यते। स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति ( बृ. ४।४।१ ) इति श्रुतेस्तस्यात्मन ओक आयतनं हृदयं तदग्रं पूर्वं प्रज्वलति पूर्वं
५ तथाप्रकाशमानमपि तदा प्रकाशत इति यावत् । तदा तत्प्रकाशितं द्वारं निर्गमनमार्गो यस्य तादृश उत्क्रामति । यतः श्रुतिस्तथाह। तस्य हैतस्य हृदस्याग्रं प्रद्योतते तेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वा ( छां. ४।४।२ ) इत्यादि। यद्यप्येतावत् सर्वजीवसाधारणं तथापि विद्वांस्तु नेतरवदितरनाड्या निष्क्रामति। किं तु शताधिकयैकशततम्या नाड्या मूर्धन्यया
१० निष्क्रामति—शतं चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका । तयोर्ध्वमायन्नमृतत्वमेति विष्वङ् अन्या उत्क्रमणे भवन्ति ( छां. ८।६।६ ) इति यतः श्रुतिराह । अत्र हेतुमाह । हार्दानुगृहीत इति हेत्वन्तरगर्भं विशेषणम्। गुहां प्रविष्टौ परमे परार्धे ( क. ३।१ ) इति श्रुतेर्हृदयाकाशसंबन्धी यः परमात्मा तदनुग्रहात् तथैव भवतीत्यर्थः । अनु-
१५ ग्रहे हेतुर्विद्यासामर्थ्यादिति । तस्या विद्यायाः शेषभूताङ्गभूता या गतिः प्रव्रजनरूपा तच्छेषभूतैव या भगवत्स्मृतिपरम्परा च ताभ्यां च यो भगववदनुग्रहस्तेन तथेत्यर्थः ॥ ४।२।१७॥५॥

---

## ६ रश्म्यधिकरणम् ।

## रश्म्यनुसारी ॥ ४।२।१८ ॥

२० अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गलः ( छां. ८।६।१ ) इत्युपक्रम्याग्रे पठ्यते। तमभित आसीना आहुर्जानासि मां जानासि मामिति । स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानात्यथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्व आक्रमते ( छां. ८।६।५ ) इति । अत्र तमभित इत्याद्युक्तेः सर्वसाधारण्युत्क्रान्तिः प्राप्यते।

पूर्वमादित्यत्वेनोक्तस्य पिङ्गलस्य रश्मिभिरूर्ध्वाक्रमणं च तथा। अत्र संशयः। ओकोग्रज्वलनादेरितरसाधारण्येपि यथा हार्दानुग्रहाद्विलक्षणा गतिर्विदुष उक्ता तथा रश्म्यनुसारित्वमपीतरसाधारणमुतास्मिन्नेवेति। तत्रावधारणमाह। रश्म्यनुसारी निष्क्रामत्ययमेवेति ॥ ४।२।१८ ॥ ६ ॥

---

५ ## ७ निश्यधिकरणम्।

### निशि नेति चेन्न संबन्धस्य यावद्देहभावित्वाद् दर्शयति च ४।२।१९॥

विदुष उत्क्रमणे हार्दानुग्रहकृतो यथा विशेषस्तथा कालविशेषकृतोपि विशेषो भाविष्यतीत्याशङ्क्य तन्निरासमाह। तत्राहोरात्रकृतो-
१० यनकृतो वा स भवेत्। तत्राद्यकृतो नास्तीत्याह। नेति। तत्र हेतुः। संबन्धस्येत्यादि। अनुग्रहहेतुभूतो यः पूर्वोक्तो गत्यनुस्मृतिसंबन्धस्तस्य यावद्देहभावित्वात् तत्कार्यस्यानुग्रहस्यापि तथात्वात्कालस्याप्रयोजकत्वमित्यर्थः। अत्र प्रमाणमाह। दर्शयति यतः श्रुतिः। तमेव विदित्वा मुनिर्भवत्येतमेव प्रव्राजिनो लोकमीप्सन्तः प्रव्रजन्ति ( बृ. ४।४।२२ )
१५ इति ॥ ४।२।१९ ॥

हार्दानुग्रहस्य मुक्तिहेतोर्विद्यमानत्वादयनविशेषोप्यप्रयोजक इत्याह।

### अतश्चायनेपि दक्षिणे ॥४।२।२०॥

स्पष्टार्थमिदम् ॥४।२।२०॥

ननु—यत्र काले त्वनावृत्तिम् ( भ. गी. ८।२३ ) इति काल-
२० प्राधान्येनोपक्रम्य—अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जनाः ( भ. गी. ८।२४ ) इति भगवद्वाक्याद् ब्रह्मविदोप्युक्तकालापेक्षास्तीत्याशङ्क्य विषयभेदेन समाधत्ते।

### योगिनः प्रति स्मर्यते स्मार्ते चैते ॥४।२।२१ ॥

---

13–ख om. यतः before श्रुतिः।

ज्ञानमार्गीयोगमार्गौ हि भिन्नः । तथा च योगिनमुद्दिश्यैव कालविशेषस्य गतिविशेषहेतुत्वं स्मर्यते नतु ज्ञानमार्गीयस्य श्रौतस्य । इतरनिरपेक्षत्वात् । न च योगसांख्ये अपि श्रौते एवेति वाच्यम् । यतः स्मार्ते एते । चो हेत्वर्थे । एते योगसांख्ये—अग्निर्ज्योतिः । धूमो रात्रिः । ५ ( भ. गी. ८।२४,२५ ) इति वाक्यद्वयोक्तगती वा । इदं तु श्रुत्युक्तदेवयानपितृयाणातिरिक्तमार्गमभिप्रेत्य समाहितम् । ते एव चेदत्राप्युच्येते शब्दभेदेन तदा न विरोधः ॥४।२।२१।७॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये चतुर्थाध्यायस्य द्वितीयः पादः ॥ ४।२ ॥

१० 
# अथ चतुर्थाध्याये तृतीयः पादः ।

## १ अर्चिराद्यधिकरणम् ।

## अर्चिरादिना तत्प्रथितेः ॥४।३।१ ॥

ननु ज्ञानमार्गीयस्येव मर्यादामार्गीयभक्तस्याप्यर्चिरादिमार्गेणैव गमनम् । उत सद्योमुक्तिरेव भवतीति संशयः । तत्र यथा ज्ञानिनो नियमा- १५ भावस्तथात्रापीति प्राप्त आह । अर्चिरादिमार्गेण तस्य ज्ञानमार्गीयस्यैवोत्कर्षकथनात् स एव तेन मार्गेण गच्छति न तु भक्तोपीत्यर्थः । तथाहि । पञ्चाग्निविद्याप्रकरणे—तद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसंभवन्त्यार्चिषोहरहरापूर्यमाणपक्षम् (छां. ५।१०।१) इत्यत्रोपक्रमे भक्तातिरिक्तानेवाधिकृत्य तथा गतिरुच्यते । स्मृतावपि— २० अग्निर्ज्योतिरहः शुक्लः ( भ. गी. ८।२४ ) इत्यत्र ब्रह्मविदो जना इति वचनेन ज्ञानमार्गीयस्यैव स पन्था इत्युच्यते । अथेदं चिन्त्यते । सामोपनिषत्सु पठ्यते । अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गलः (छां. ८।६।१) इत्युपक्रम्यादित्यरूपस्य पिङ्गलस्य रश्मिरूपत्वं नाडीना-

मुक्त्वाग्रे वदति। अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्व-
माक्रमते (छां. ८।६।५) इति नाडीरश्मिसंबन्धेनैका परलोक-
गतिः श्रूयते। अर्चिरादिका चान्या तेर्चिषमभिसंभवन्त्यर्चिषोहः।
(छां. ५।१०।१) इत्यादिश्रुत्युक्ता। स एतं देवयानं पन्थानमापद्याग्नि-
५ लोकमागच्छति (कौ. १।३) इति चापरा। स यदा वै पुरुषोस्मा-
ल्लोकात्प्रैति स वायुमागच्छति (बृ. ५।१०।१) इति चेतरा। सूर्यद्वारेण
ते विरजाः प्रयान्ति (मुं. १।२।१३) इति चान्या। एवमनेकेषु मार्गेषु
सत्स्वर्चिरादेरेवोक्तिः कुत इति। तत्र सर्वेषां पारिभाषिकमर्चिरादित्वमत
एव—अथैतयोः पथोः कतरेणचन (छां. ५।१०।८) इति मार्गद्वय-
१० भ्रष्टानामतिकष्टं—जायस्व म्रियस्वेति तृतीयं स्थानम् (छां. ५।१०।८)
इत्युक्तमन्यथानेकेषां मार्गाणामुक्तानां श्रूयमाणत्वादस्य तृतीयत्वं नोच्ये-
तातः प्रकरणभेदाद्भिन्नोपासनमशेषत्वान्मिथोनपेक्षा। भिन्ना एवैते मार्गा
ब्रह्मप्रापका इति मन्तव्यमिति चेत्तत्रोच्यते। न हीयं परिभाषा सर्वेषु
श्रुतास्ति यतस्तथोच्येत। अतो लाघवादनेकपर्वविशिष्ट एक एव मार्ग
१५ इति मन्तव्यं नतु पर्वभेदेन मार्गभेद इति। गौरवप्रसंगात्। न चैवमथै-
तैरेव राश्मिभिरित्यवधारणानुपपत्तिरिति वाच्यम्। तस्याः श्रुतेरुत्क्रमण-
मात्रमार्गनिरूपकत्वात्। तथाहि। तत्रोपक्रमे हि—अथ यत्रैतदस्माच्छ-
रीरादुत्क्रामत्यथैतैरेव राश्मिभिरूर्ध्व आक्रमते (छां. ८।६।५) इत्युच्यते।
एतस्मात्पुरस्तात्—अथ या एता हृदयस्य नाड्यः (छां. ८।६।१)
२० इत्युपक्रम्य पिङ्गलस्यादित्यत्वमुक्त्वा—तद्यथा महापथ आतत उभौ ग्रामौ
गच्छतीमं चामुं चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमं
चामुं चामुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो
नाडीभ्यः प्रतायन्ते तेमुष्मिन्नादित्ये सृप्ता इत्यन्तेन वाक्येन नाडीषु
रश्मिप्रचारमुक्त्वाग्रे अथ यत्रैतदस्मादित्याद्युक्तम्। उपसंहारे च—शतं
२५ चैका हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका। तयोर्ध्वमायन्नमृतत्व-
मेति विष्वङ्ङन्या उत्क्रमणे भवन्ति (छां. ८।६।६) इति। एवमुपक्र-
मोपसंहाराभ्यामुत्क्रमणमात्रमार्गनिरूपकत्वं न तु ब्रह्मप्रापकमार्गस्यातस्त-

दनुपपत्तिपरिहारोनर्थकः । नन्वनेकपर्वविशिष्टत्वेन मार्गस्यैकत्वे तं निरूपयन्ती श्रुतिः क्वचित् किंचित् पर्व निरूपयति । क्वचिन्नेति कथम् । उपसंहारेण प्राप्स्यत इति तात्पर्येण तथेति चेद् ब्रवीषि तदा शाखान्तरमविदुषस्तदसंभवेन तं प्रति श्रुतेर्न्यूनतापातः । न हि सर्व-
५ शाखाविदं प्रत्येव कथनमिति वक्तुमुचितम् । तस्यासंभवादतः स्वस्वशाखाज्ञानवन्तं प्रत्येव तथा । अध्ययनविधेरपि तावन्मात्रपरत्वात् । शाखान्तरसंवादिपर्वकथनानुपपत्तिश्च । उपसंहारेणैव तस्यापि प्राप्तिसंभवादतो विरुद्धदिक्कानां स्वस्वमार्गेणैकग्रामप्राप्तिवदिहापि भवितुमर्हति स्वातन्त्र्येण सर्वैर्मार्गैर्ब्रह्मप्राप्तिः । न चैवमथैतयोः पथोरिति द्विवचनानुपप-
१० त्तिर्जायस्व म्रियस्वेत्यस्य तृतीयत्वं चानुपपन्नमिति वाच्यम् । अर्चिरादिकमुक्त्वोपसंहरत्येष देवयानः पन्था इति । श्रुत्यन्तरे च—स एनं देवयानं पन्थानमापद्याग्निलोकमागच्छति ( कौ. १।३ ) इति । तथा च ब्रह्मप्रापकाः सर्वे मार्गा देवयाना इत्युच्यन्ते । दैवी संपद्विमोक्षाय ( भ. गी. १६।५ ) इति भगवद्वाक्याद् दैव्यां संपदि ये जातास्ते देवा इत्युच्यन्ते
१५ तेषां यानं गमनं यत्रेति ते सर्वेपि मार्गा देवयानशब्देनोच्यन्ते । द्वितीयस्त्वविशिष्टः । एवं द्वित्वं त्रित्वं चोपपद्यते । न चोक्तरीत्या लाघवादेक एव स मन्तव्यः । स्वतः प्रमाणभूता हि श्रुतिः । सा येन यदा या श्रुता तदर्थावधारणे द्वितीयस्या अनुपस्थितत्वान्न लाघवगौरवतद्विचारावसरः । क्वचिदुपस्थितौ चोक्तबाधकैरुपसंहारानवकाशः । अपरं च ब्रह्मविदः
२० क्रममुक्तौ गन्तव्यो मार्गो ह्ययमुपदिश्यते । तत्तल्लोके तदानन्दानुभवश्चावश्यकः । तथा चोपासनभेदात् फलभेदस्यावश्यकत्वान्मार्गभेदोपि तथेति सर्वेष्वेकरूपफलप्रसञ्जक उपसंहारो न युक्तः । किंच । उपासने कर्मणि चोपसंहारः संमतः । मार्गस्तु नान्यतररूपोतो यस्योपासकस्य येन मार्गेण गमनं स मार्ग उपदिश्यत इति नोपसंहारो युक्तः । अविधेयत्वादपि
२५ तथा । एतद्यथा तथा पुरस्तान्निरूपितम्—उपसंहारोर्थाभेदाद्विधिशेषवत्समाने च ( ब्र. सू. ३।३।५ ) इत्यत्र । एवं सत्यार्चिश्शब्देनार्चिरुपलक्षितो मार्ग उच्यते । आदिपदेनान्ये सर्वे मार्गाः संगृह्यन्त इति नानुपपत्तिः

कांचिदिति चेदत्र वदामः। अर्चिरादिभ्य इत्युक्तं भवेत् त्वद्रीतिरेव चेद-
भिप्रेता भवेत्तस्मान्नैवमित्यवधार्यते। अर्चिरादिनेत्येकवचनान्यथानुपपत्त्या
मार्गस्यैकत्वमवश्यमुररीकार्यम्। एवं सति श्रुतिषु यावन्ति पर्वाण्युक्तानि तानि
सर्वाण्येकस्मिन्नेवार्चिरादिमार्गे वर्तमानान्यपि यस्योपासकस्य यावत्पर्वभोगो
५ भावी तं प्रति तावत्पर्वोक्तिर्यस्य यावतां तेषां स न भावी तं प्रति न तदुक्ति-
स्तद्भोगाभावादिति नानुपपन्नं किंचित्। ननु त्वयाप्यनुक्तानां पर्वणां तत्र
स्थितिं वदतोपसंहार एवोक्तो भवति प्रापकत्वेनेति चेत्। स्यादेतदेवं यदि
तस्यैव गन्तुर्भोगाय तदपि पर्व तत्रोच्येत। न त्वेवं किंत्वेकवचनानुरो-
धान्मार्गैक्ये निश्चिते यं प्रति यत्पर्वोच्यते तत्तत्र कण्ठोक्तमेवेति नोपसंहारा-
१० पेक्षा। अग्नेन्यत्रोक्तानां पर्वणामुक्तस्थले संनिवेशोक्त्यापि सूत्रकाराभिमत
एक एव मार्ग इति ज्ञायते। श्रुतौ सर्वत्र पूर्वपरामर्शादपि तथा ४।३।१॥

## वायुमब्दादविशेषविशेषाभ्याम् ॥ ४।३।२ ॥

छान्दोग्ये वायुर्न पठ्यते। कौषीतकिश्रुतौ तु—स एतं देवयानं पन्थानमा-
पद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजा-
१५ पतिलोकं स ब्रह्मलोकम् (कौ. १।३) इति वाय्वादयः श्रूयन्ते।
तत्रार्चिषोग्नेश्चाभेदान्न विचारणीयमस्ति। वायुलोकं कस्माल्लोकाद्गच्छती-
त्याकाङ्क्षायामाह। वायुमब्दादिति। अर्चिषोहरह्न आपूर्यमाणपक्षमापूर्य-
माणपक्षाद्यान् षडुदङ्ङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यम्
(छां. ५।१०।२) इत्यत्र संवत्सरलोकात्परस्ताद्वायुलोको निवेशयितव्यस्तथा
२० च संवत्सरलोकाद्वायुलोकं गच्छतीत्यर्थः। तत्र विनिगमकमाह। अवि-
शेषविशेषाभ्यामिति।

अत्रेदं ज्ञेयम्। अग्निहोत्रादिकर्मभिश्चित्तशुद्धावुपासनादिभिर्ज्ञानो-
दये क्रममुक्त्यधिकारी हि तत्तल्लोकं गत्वा भुक्त्वान्ते ब्रह्म प्राप्नोति। कर्म
त्वग्निसाध्यं भूलोक एव च भवत्यत आदौ तत्रत्यो भोगस्ततस्तदुपरितन-
२० लोकानां—पृथिवी दीक्षा तयाग्निर्दीक्षया दीक्षितः। (तै. ब्रा. ३।७।७) यया
पृथिव्यग्निगर्भा (आ.सू. १।१३।५) इत्यादिश्रुतिभ्यो भूरग्निप्रधाना भवत्यतो-
र्चिराख्यमग्निलोकमादौ गच्छति।

ततः कर्मोपासनयोरहरादिसंवत्सरान्ते काले विहितत्वात्तत्र तत्र[1] गत्वा भुङ्क्ते । तथा च संवत्सरान्तानां भूसंबन्धित्वेनाविशेषात्तन्मध्ये वायोर्न प्रवेशः । भूलोकादुपर्यन्तरिक्षलोकस्तदुपरि द्युलोकस्तथा च वायुरन्तरिक्षस्याधिपतिः ( तै. सं. ३।४।५ ) इति श्रुतेः सूर्यो दिवोधि- ५ पतिः ( तै. सं. ३।४।५ ) इति श्रुतेस्तयोः पौर्वापर्ये विशेषो हेतुरस्तीत्यादित्यलोकात् पूर्वमुक्तरीत्या भूलोकमध्यपातिसंवत्सरस्य परस्ताच्च वायुर्निवेशयितव्य इत्यर्थः । ननु तेर्चिषमभिसंभवन्त्यर्चिषोहरित्यादिश्रुतिरुक्तमुक्तमनूद्यानूद्यापादानत्वं वदन्ती पूर्वोत्तरयोरव्यवधानं सूचयतीति नोक्तमादरणीयामिति चेत् । सत्यम् । यस्योपासकस्य न वायुलोकभोगस्तं १० प्रति सोक्तिर्यस्य तु तद्भोगस्तस्योक्तरीतिर्मार्गैक्यादिति नानुपपत्तिः काचित् । केचित्तु—स एनं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकम् ( कौ. १।३ ) इत्यविशेषेण वायुरुपदिश्यते । मिथः पौर्वापर्यप्रापकपदाभावात् । यदा वै पुरुषोस्माल्लोकात् प्रैति स वायुमागच्छति तस्मै स तत्र विजिहीते यथा रथचक्रस्य खं तेन स ऊर्ध्व आक्रमते स १५ आदित्यमागच्छति ( बृ. ५।१०।१ ) इति श्रुत्यादित्यात्पूर्वो वायुर्विशेषेणोपदिश्यत इत्यब्दादित्ययोरन्तराले निवेशयितव्य इत्यर्थं वदन्ति । स चिन्त्यते । यथा तेन स ऊर्ध्व आक्रमते स आदित्यमागच्छतीति विशेषोपदेश इत्युच्यते तथा स वरुणलोकमित्यत्रापि वक्तुं शक्यम् । न च स आदित्यमागच्छतीत्यत्र तच्छब्दस्य पूर्वपरामर्शित्वात् वायुलोकगतस्यैव २० पूर्वत्वात्तथेति वाच्यम् । अग्निलोकमागच्छति स वायुलोकं स वरुणलोकम् ( कौ. १।३ ) इत्यत्रापि तुल्यत्वात् । किंचैवमग्निलोकानन्तरं वायुलोक इत्यपि वक्तुं शक्यमतो विद्वद्भिरुपेक्ष्योयम् । वाजसनेयिनस्तु मासेभ्यो देवलोकं देवलोकादादित्यम् ( बृ. ६।२।१५ ) इति पठन्ति । तत्राप्यादित्यात्पूर्वो देवलोकात्परो वायुर्ज्ञेयः । एकत्रादित्यात्पूर्वत्वे सिद्धे मार्गै- २५ क्यादन्यत्रापि तथात्वस्य न्यायप्राप्तत्वात् । सूत्रकारेण तु छान्दोग्यश्रुत्यपेक्षयोक्तं वायुमब्दादिति । एवं सति मासेभ्यः परस्तादब्दनिवेशनं कार्यम् ।

1—ख reads तत्र लोके for तत्र तत्र ।

न च वायुमब्दादिति सूत्रान्मार्गभेदापत्तिः । देवलोकस्यादित्याधिष्ठेयत्वे-
नादित्यमध्यपातित्वमभिप्रेत्य छन्दोगश्रुतिस्तथोक्तवती । तदनुसारेण व्यासो-
प्यतो नानुपपत्तिः ॥ ४।३।२ ॥

## तडितोऽधि वरुणः संबन्धात् ॥ ४।३।३ ॥

५ आदित्याच्चन्द्रमसं चन्द्रमसो विद्युतम् ( छां. ४।१५।५ ) इत्यत्र
पठितविद्युल्लोकात्परतो वरुणलोको निवेशनीयः । तत्र हेतुः । संबन्धात् ।
तडितोऽप्संबन्धित्वाद्वरुणस्य तत्पतित्वात्तथा ॥ ४।३।३ ॥

## वरुणाच्चाधीन्द्रप्रजापती ॥ ४।३।४ ॥

स्पष्टमिदम् । अर्चिरादिपाठे विद्युदनन्तरं तत्पुरुषोमानवः स एतान्
१० ब्रह्म गमयति ( छां. ४।१५।५ ) इति पठ्यते । तत्र यस्योपासकस्य
वरुणादिलोकगमनापेक्षा नास्ति तमपेक्ष्येति ज्ञेयम् । मार्गैक्यनियमम-
भिप्रेत्य सूत्रकारोन्यत्रोक्तानामन्येषामपि लोकानां तत्रैव निवेशन-
माह ॥ ४।३।४ ॥ १ ॥

---

## २ आतिवाहिकाधिकरणम् ।

१५ ## आतिवाहिकास्तल्लिङ्गात् ॥ ४।३।५ ॥

विद्युदनन्तरं स तत्पुरुषोमानवः स एतान् ब्रह्म गमयतीत्यत्र
भवति संशयः । उक्तश्रुतेर्गमयित्रैव ब्रह्मप्राप्तिरिति निश्चीयते । स च विद्युद-
नन्तरमेव पठ्यते । एवं सति यस्य वरुणादिलोकगमनं तस्य वचनाभावेन
गमयित्रप्राप्तेर्ब्रह्मप्राप्तिर्भवति न वेति । तत्र वाचनिकस्य यावद्वचनत्वात्त-
२० दभावेन सा न भवतीति प्राप्त आह । आतिवाहिका इति । एतदुक्तं
भवति । यस्योपासकस्य यावत्फलभोगानन्तरं ब्रह्मप्राप्तिर्भाविनी तस्य ताव-
त्तद्भोगानन्तरं ब्रह्मप्राप्तिर्भवत्यत एव कौषीतकीश्रुतौ प्रजापतिलोकानन्तरं
ब्रह्मलोकः पठ्यते । अन्यथा कृतसाधनवैयर्थ्यं तेषां ब्रह्मप्राप्तिसाधनत्वबो-

10–M, A and C read तत्तु for तत्र and ख reads तच्च for the same.

धकश्रुतिविरोधश्च स्यात् । तथा च यत्रातिवाहिकश्रुतिर्नास्ति तत्राप्यातिवाहिको भगवदीय एव ब्रह्म प्रापयतीति ज्ञेयम् । वस्तुतस्तु बहव एव तादृशाः सन्तीति ज्ञापनाय बहुवचनमत्रोक्तम् । तन्मध्ये कश्चनागत्यैक एव नयतीति ज्ञापनाय श्रुतावेकवचनम् । तत्र हेतुस्तल्लिङ्गात् । तत्पुरुषोमानव इत्यत्र
५ ब्रह्मसंबन्धित्वं लिङ्गमुच्यते । तेनेदं ज्ञाप्यते यथा विद्याबलात् तत्तल्लोकप्राप्तिस्तथैव ब्रह्मप्राप्तिरपीति न किंतु भगवदीयपुरुषानुग्रहेणैवेति । न च पूर्वपूर्वलोकाधिष्ठातृदेवा उत्तरोत्तरलोकं प्रत्यातिवाहिका यथा तथा ब्रह्मप्राप्त्यव्यवहितपूर्वलोकदेवा एव ब्रह्मप्रापका इति तत्पदेन स लोक एवोच्यत इति वाच्यम् । तदेतरलोकेषु तदकथनं यथा तथात्रापि न कथयेत् ।
१० लोकाधिष्ठातृदेवानामातिवाहिकोक्तावर्चिर्लोकप्रापकातिवाहिकस्याभावात् तत्प्राप्तिर्न स्यात् । तथा सति देवयानमार्ग एवोच्छिद्येत । अतो यथा विद्याबलेनैवार्चिषः प्राप्तिस्तथेतरेषामपीति बुध्यस्व । कस्यचिदल्पलोकगत्यनन्तरमेव ब्रह्मप्राप्तिः । कस्यचिद् बहुलोकगत्यनन्तरं सोच्यत इति । भोगभूमित्वमेव तेषामवगन्तव्यम् । सर्वेषां सर्वत्र गमने देवयानं पन्थानं
१५ वदन्त्याः श्रुतेः सामितत्कथनमनुपपन्नं स्यादत उपासनाभेदेन फलभेदं ज्ञापयन्ती तथा वदतीति युक्तमुत्पश्यामः ॥ ४।३।५ ॥

ननु तेषामिह न पुनरावृत्तिरस्तीत्यादिश्रुतिभ्यो देवयानपथं प्राप्तानां पुंसां ब्रह्मवित्त्वमवश्यं वाच्यम् । तेन सद्योमुक्तौ संभवन्त्यां सत्यां क्षयिष्णुत्वेन क्षुद्रानन्दत्वेन च हेयानां परमफलप्राप्तिविलम्बहेतूनामर्चिरा-
२० दिलोकानां कामना कुतो यतस्तद्धेतुभूतोपासनाः संभवन्ति । किंच । अर्चिरादिना तत्प्रथितेः (ब्र. सू. ४।३।१) इत्यत्र यदुक्तं ज्ञानमार्गीयस्यैवार्चिरादिप्राप्तिर्न भक्तिमार्गीयस्येति तदप्यनुपपन्नम् । यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च यत् ( भा. ११।२१।३२ ) इत्युपक्रम्य—सर्वं मद्भक्तियोगेन मद्भक्तो लभतेञ्जसा । स्वर्गापवर्गं मद्धाम कथंचिद्यदि वाञ्छति ॥
२५ ( भा. ११।२१।३३ ) इति भगवद्वाक्याद्भक्तस्याप्येतद्वाञ्छाफले संभवतः । अन्यथा प्रभुर्न वदेत् । एवं सति भक्तिसुखं हित्वान्यत्र कामनायां हेतुर्वाच्य इत्याकाङ्क्षायां तमाह ।

## उभयव्यामोहात्तत्सिद्धेः ॥ ४।३।६ ॥

अत्रेदं ज्ञेयम् । देवयानः पन्था अपि भगवतैव सृष्टोस्ति । तथा चोक्तहेतुभिस्तत्र कस्यापि कामनाभावे तत्सृष्टिर्व्यर्था स्यादतो भगवानेव कांश्च व्यामोहयति ज्ञानिनो मर्यादामार्गीयभक्तांश्चातस्तत्कामनासिद्धेस्त-
५ त्फलभोग इति । यत्त्वर्चिरादिमार्गगन्तॄणां देहवियोगेन संपिण्डितकरण-ग्रामत्वेनास्वातन्त्र्यं व्यामोहः । अर्चिरादीनां चाचेतनत्वेनास्वातन्त्र्यं व्यामोहः । कार्यकरणासामर्थ्यमिति यावत् । तेनार्चिराद्यधिष्ठातृदेवैर-तिवाह्यन्त इति सिद्धमिति व्याख्यानम् । तन्न साधीयः । व्यामोहशब्द-स्यान्यथाज्ञानवाचकत्वेनासामर्थ्यावाचकत्वात् । तथा सत्यर्चिर्लोकमपि न
१० प्राप्नुयात् । प्रापकाभावादित्युक्तम् ॥ ४।३।६ ॥

ननु विद्युतो वरुणादिलोकप्राप्त्यनन्तरं यस्य ब्रह्मप्राप्तिस्तस्य तल्लोकसंबन्धी ब्रह्मप्रापकः पुरुषोस्त्युत स स्वत एव तत्प्राप्नोतीति संशय उत्तरं पठति ।

## वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ४।३।७ ॥

१५ नहि ब्रह्मप्राप्तिर्विद्युल्लोकसंबन्धिपुरुषसामर्थ्येनोच्यते । किंतु ब्रह्मसंब-न्धितत्सामर्थ्येन । तथा च यत एव लोकात्तत्प्राप्तिस्ततो ब्रह्मसंबन्धिपुरुषा-देव । एवं सति विद्युल्लोकात्तत्प्राप्तौ यो ब्रह्मसंबन्धी पुरुषः प्रापक उक्तस्ते-नैव ततो वरुणादिलोकेभ्योपि ब्रह्मप्राप्तिस्तत्र हेतुमाह । तच्छ्रुतेः । तान् वैद्युतान्पुरुषोमानस एत्य ब्रह्मलोकान् गमयति (बृ. ६।२।१५) इति श्रुतेः ।
२० अत्रैत्येति वचनाद्यत एव लोकाद् ब्रह्मप्राप्तिर्भवित्री तत्रैवागत्य ब्रह्म प्रापय-तीति गम्यते । श्रुतौ वैद्युतं लोकमागत्य तस्माद् ब्रह्मलोकान् गमयतीत्युक्त-मिति स पुरुषो वैद्युत इत्युच्यते न तु तल्लोकवासित्वेन । तथा सत्येत्येति न वदेत् तत एव ब्रह्मप्रापणे । अत एव मानस इत्युक्तः । भगवन्मनसि भवत्य-थैनं मां प्रापयत्विति तदैव प्रापयतीति तथा ।

२५ छान्दोग्ये त्वमानव इति पठ्यते । तच्चालौकिकत्वं तदप्युक्तरूप-मेवेति न कश्चिद्विशेषः । वाजसनेयके ब्रह्मलोकान्गमयतीति पठ्यते ।

छान्दोग्ये तु ब्रह्मेति। तत्रायं भावः । भक्तं तु वैकुण्ठलोकं नयति ते बहुविधा इति ब्रह्मलोकानित्युक्तम् । ज्ञानमार्गीयं त्वक्षरं ब्रह्म प्रापयतीति ब्रह्मेत्युक्तम् । अत एवोभयव्यामोह उक्त आचार्येण ॥ ४।३।७ ॥ २ ॥

---

## ३ कार्याधिकरणम् ॥

५ अत्र सिद्धान्तदार्ढ्यार्थमुक्तमर्थं हस्तापिहितामिव कृत्वा बादरिमतं पूर्वपक्षत्वेनाह।

### कार्यं बादरिरस्य गत्युपपत्तेः ॥ ४।३।८ ॥

स एतान् ब्रह्म गमयति ( छां. ४।१५।५ ) इत्यत्र ब्रह्मपदेनाविकृतं परमेव ब्रह्मोच्यते । उत कार्यरूपो ब्रह्मलोक इति भवति संशयः ।
१० परस्य व्यापकत्वेन देशविशेषगमयित्रोरनपेक्षितयोरुक्तेः कार्यरूप एव स ब्रह्मपदेनोच्यत इति बादरिराचार्यो मन्यते । कुतः । अस्य गत्युपपत्तेः । तस्य परिच्छिन्नत्वेन तत्स्थितिदेशं प्रत्यस्य गन्तुर्गतेरुपपत्तेरित्यर्थः॥४।३।८॥

### विशेषितत्वाच्च ॥ ४।३।९ ॥

ब्रह्मलोकान्गमयाति ते तेषु ब्रह्मलोकेषु पराः परावतो वसन्ति
१५ ( बृ. ६।२।१५ ) इति श्रुतौ बहुत्वेन वासाधिकरणत्वेन च विशेषिता लोकाः । गन्तारश्च दूरदेशगत्या विशेषिता इति न परं ब्रह्म तत् । किंतु कार्यमेवेत्यर्थः । लोकपदं तज्जन्यभोगपरम् । तेन तस्यैकत्वेपि विविधभोगज्ञापनाय बहुवचनं घटते ॥ ४।३।९ ॥

तत्र ब्रह्मशब्दप्रयोगे हेतुमाह ।

२० 
### सामीप्यात्तु तद्व्यपदेशः ॥ ४।३।१० ॥

तल्लोकस्थितानां नान्यलोकव्यवधानं परप्राप्तौ किंतु तत एवेति परब्रह्मसामीप्याद् ब्रह्मत्वेन व्यपदेशः कृतः । तुशब्दस्तु वस्तुतो ब्रह्मत्वं व्यवच्छिनत्ति ॥ ४।३।१० ॥

ननु—आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोर्जुन ( भ. गी. ८।१६ )

इति वाक्यात्ततः पुनरावर्तते । अत्र तेषामिह न पुनरावृत्तिरस्तीति पठ्यत इति परमेवात्र ब्रह्मशब्देनोच्यत इति प्राप्त उत्तरं पठति ।

## कार्यात्यये तदध्यक्षेण सहातः परमभिधानात् ॥ ४।३।११ ॥

कल्पसमाप्तौ कार्यस्य ब्रह्मलोकस्य नाशे सति तदध्यक्षेण चतुर्मु-
५ खेन ब्रह्मणा सहातो ब्रह्मणः सकाशात्परमीश्वरं प्राप्नोत्यतोपुनरावृत्तिश्रु-
तिर्न विरुध्यते । अत्र प्रमाणमाह । अभिधानादिति । श्रुतौ तथाभिधाना-
दित्यर्थः । सा तु—वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः
शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे
( मुं. ३।२।६ ) इति । परान्तकाल इत्यत्र परशब्देन ब्रह्मणः पूर्ण-
१० मायुरुच्यते ॥ ४।३।११ ॥

उक्तेर्थे श्रुतिं प्रमाणत्वेनोक्त्वा स्मृतिमप्याह ।

## स्मृतेश्च ॥ ४।३।१२ ॥

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् इति स्मृत्यापि स एवार्थः प्रतिपाद्यते ॥ ४।३।१२ ॥

१५ अत्र सिद्धान्तमाह ।

## परं जैमिनिर्मुख्यत्वात् ॥ ४।३।१३ ॥

स एतान् ब्रह्म गमयति ( छां. ४।१५।५ ) इत्यय ब्रह्मपदेन परमेव ब्रह्मोच्यते । इति जैमिनिराचार्यो मन्यते । कुतः मुख्यत्वात् । बृहत्त्वादिधर्मविशिष्टं हि ब्रह्मपदेनोच्यते । तादृक् परमेव ब्रह्म भवतीति
२० मुख्या वृत्तिर्ब्रह्मपदस्य परस्मिन्नेवान्यत्र गौणी । तथा च मुख्यगौणयोर्मध्ये मुख्यस्यैव बलिष्ठत्वात् तथा ॥ ४।३।१३ ॥

## दर्शनाच्च ॥ ४।३।१४ ॥

स एनं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकम् (कौ. १।३) इति
२५ कौषीतकिश्रुतेरग्न्यादिलोकप्राप्तिवदविशेषेणैव प्रजापतिलोकप्राप्त्यनन्तरं

ब्रह्मलोकप्राप्तिं दर्शयति। न हि तत्र ब्रह्मलोकशब्देन कार्यः स उच्यत इति वक्तुं शक्यम्। पार्थक्येन प्रजापतिलोकस्योक्तत्वात्। अपरं च ये चेमेरण्ये श्रद्धातप इत्युपासते तेर्चिषमभिसंभवन्ति (छां. ५।१०।१) इति छान्दोग्यश्रुतिं विषयीकृत्य ह्यर्चिरादिना तत्प्रथितेः (ब्र. सू. ४।३।१)
५ इत्युपक्रम्याचार्येण कृतोन्यत्रार्चिःशब्दस्याभावात्। तत्र चान्ते ब्रह्म गमयतीत्युच्यते। तथा च छान्दोग्येनुक्तानामन्यत्रोक्तानां लोकानां मार्गैक्यसिध्यर्थं तत्रैव संनिवेशो वायुमब्दात्। तडितोधिवरुणः (ब्र. सू. ४।३।३) वरुणाच्चाधीन्द्रप्रजापती (ब्र. सू. ४।३।४) इत्यन्तेनोक्तः। एवं सत्यादावर्चिषं ततोहस्ततः सितपक्षं ततः संवत्सरं ततो वायुं ततो
१० देवलोकं तत आदित्यं ततश्चन्द्रमसं ततो विद्युतं ततो वरुणं तत इन्द्रं ततः प्रजापतिं ततश्चामानवेन पुरुषेण ब्रह्मप्राप्तिरिति निर्णयः संपद्यते। एवं सति प्रजापतिलोकादन्यस्य कार्यब्रह्मलोकस्यासंभवात् तच्छङ्कापि भवितुं नार्हति यद्यपि तथापि व्यासोक्तमार्गैक्यममन्वानस्तथावददिति ज्ञायते। परंतु वेदार्थनिर्णयार्थमेव प्रवृत्तत्वाद् भगवदवतारत्वाच्च तदुक्त-
१५ एव शास्त्रार्थ इति मन्तव्यम्। किंच स प्रजापतिलोकं स ब्रह्मलोकम् (कौ. १।३) इत्यत्र ब्रह्मपदस्य परवाचकत्वं तेनापि वाच्यं चेत् तद्दृष्टान्तेनान्यत्रापि तथैव वाच्यम्। बाधकाभावात्।

ननु परस्य व्यापकत्वान्निर्विशेषत्वाच्च न गन्तव्यतोपपद्यते। जीवस्याप्यविद्योपाध्यवच्छिन्नतादशायां परब्रह्मणि गन्तृत्वासंभवात्तन्नाशे च
२० वस्तुतोभिन्नत्वात् स्वरूपेणावस्थानमेव भवतीति न गन्तृत्वमप्युपपद्यते। तस्यैवाभावात्। जीवत्वदशायां तूपाध्यवच्छेदाद गन्तृत्वं जीवस्यापरस्य ब्रह्मणश्चाविद्यकरूपनामवत्त्वेन गन्तव्यता चोपपद्यते। उपासनाफलत्वादस्य गमनस्योपास्यस्य च सगुणत्वेन तत्प्राप्तेरेवोचितत्वाच्च निर्गुणब्रह्मविद्यावतो गन्तृत्वासंभव इत्युक्तमतो बादरिमतमेव साधीयः। न च ब्रह्मपदस्य
२५ मुख्यार्थत्वमुक्तरीत्यात्र संभवत्यतोत्रामुख्यार्थत्वमेवानुसर्तव्यमिति चेत्। स्यादेतदेवं यद्यौपाधिकमुपास्यरूपं जीवत्वं वा स्याद् नत्वेवम्। प्रकृतैतावत्त्वं हि प्रतिषेधति (ब्र. सू. ३।२।२२) इत्यादिभिः तद्गुणसार-

त्वाच्च तद्व्यपदेशः ( ब्र. सू. २।३।२९ ) इत्याद्यधिकरणैः श्रुत्यर्थनिर्णयेन ब्रह्मणि विशेषाणामौपाधिकत्वस्य जीवपुरुषोत्तमाभेदस्य च पुरस्तादेव निरस्तत्वात्। न च व्यापकत्वं गन्तव्यत्वे बाधकम्। प्रारब्धभोगं विना तत्प्राप्त्यसंभवाद् यदा यत्र तद्भोगसमाप्तिस्तदा तत्र ५ तत्प्राप्तेर्निष्प्रत्यूहत्वात्।

किंच। उपास्यरूपाणां सर्वेषां निर्गुणत्वमेवोपासकस्य। परं सगुणत्वेन तत्तारतम्यात् फलतारतम्यम्। यस्तु भगवदनुग्रहेण प्राकृतगुणरहितोभूत् स निर्गुणब्रह्मविद्यावानित्युच्यते। तादृशस्यैव मुक्तिप्रकारद्वयमुक्तं सद्योमुक्तिक्रममुक्तिभेदेन। न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समव- १० लीयन्ते ब्रह्मैव सन् ब्रह्माप्येति ( बृ. ४।४।२२ ) इत्यादिश्रुतिस्तु प्रारब्धरहितविषया। निर्गुणब्रह्मविद्यावतोपि प्रारब्धभोगस्तु त्वयापि वाच्योन्यथा प्रवचनासंभवेन ज्ञानमार्ग एवोच्छिद्येत। ते ब्रह्मलोके तु परान्तकाले ( मुं. ३।२।६ ) इति श्रुतिरपि परान्तकाल एव येषां प्रारब्धभोगसमाप्तिस्तद्विषयिणीति मन्तव्यम्। अन्यथा वेदान्तविज्ञानेत्याद्यु- १५ क्तधर्मविशिष्टानां मुक्तौ विलम्बो नोपपद्यत इति दिक्॥ ४।३।१४॥

## न च कार्ये प्रतिपत्त्यभिसंधिः॥ ४।३।१५॥

अपि च—ब्रह्मविदाप्नोति परम् ( तै २।१ ) इति संक्षेपेणोक्त्वा तदेषाभ्युक्ता इति तद्विवरिकामृचं प्रस्तुत्य सोक्ता। सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायाम् परमे व्योमन्। सोश्नुते सर्वान् कामान् सह २० ब्रह्मणा विपश्चिता ( तै. २।१ ) इति। अत्रोपक्रमानुरोधेन परेणैव ब्रह्मणा सह सर्वकामभोगलक्षणा प्रतिपत्तिरुच्यत इति कार्यरूपे वस्तुमात्रे प्रतिपत्तिर्न क्वापि श्रुतेरभिप्रेतातोत्रापि परमेव ब्रह्मपदेनोच्यते। ऋगर्थस्त्वानन्दमयाधिकरणे प्रपञ्चित इति नात्रोक्तः॥ ४।३।१५॥ ३॥

---

15–M. A and C read नोपपद्येत for नोपपद्यते।

## ४ अप्रतीकाधिकरणम् ।

### अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात्तत्क्रतुश्च ॥ ४।३।१६ ॥

क्रममुक्त्यधिकारिणः प्रारब्धं भुक्त्वामानवेन पुरुषेण प्रापिताः पर-
५ मेव ब्रह्म प्राप्नुवन्तीति सिद्धम् । तत्रेदं संदिह्यते । आर्चिरादिलोकप्राप्तिर्ह्यु-
पासनाविशेषफलम् । एवं सत्यमानवः पुरुषस्तान् सर्वान् ब्रह्म प्रापयत्युत
कांश्चिदेवेति । किमत्र युक्तम् । सर्वानेवेति । यतोर्चिरादिमार्गगताना-
मन्ते ब्रह्मप्रापणार्थमेव स नियुक्तस्ततोन्यथाकरणे हेत्वभावात्तथैव स
करोतीति प्राप्ते ।

१० उच्यते । श्रुतौ ब्रह्मत्वेनैव सर्वत्रोपासनाया उक्तत्वादुपास्येषु भगव-
द्विभूतिरूपत्वेन शुद्धब्रह्मरूपेष्वप्यतथात्वं ज्ञात्वा श्रुतिर्ब्रह्मत्वोपासनायाः
फलसाधनत्वं वदति । न तूपास्ये ब्रह्मतामपीति मन्वाना य उपासते ते
प्रतीकालम्बना इत्युच्यन्ते । तथा च सत्यपि वेदविहितत्वेनोपासनायाः
कृतत्वेन सफलत्वात् तत्फलकत्वेनोपासकानामर्चिरादिलोकप्राप्तावपि तान-
१५ मानवः पुरुषो ब्रह्म न प्रापयति किंतु शुद्धब्रह्मत्वं ज्ञात्वा य उपासते
तानेव ब्रह्म प्रापयतीति बादरायण आचार्यो मन्यते । तत्र हेतुमाह ।
उभयथा दोषादिति । वस्तुतो यद्ब्रह्मरूपं तत्राब्रह्मत्वनिश्चय उपासनार्थं च
ब्रह्मत्वेन भावनमेवमुभयथा करणे दोषः संपद्यत इति तस्य न ब्रह्म-
प्राप्तावधिकारोस्तीति युक्तं तदनयनमित्यर्थः । तथा च श्रुतिः । असन्नेव
२० स भवति । असद् ब्रह्मेति वेद चेत् ( तै. २।६ ) इति । योन्यथा सन्त-
मात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चौरेणात्माप-
हारिणा इति । एवं ज्ञानमार्गीयव्यवस्थामुक्त्वा भक्तिमार्गीयस्यापि
तामाह । तत्क्रतुश्चेति । सर्वं मद्भक्तियोगेन (भा. ११।२०।३२) इति वाक्यान्न
तस्योपासनापेक्षेति न प्रतीकादिसंभावना । तत्र कथंचिद्यदि वाञ्छतीति

11–D reads ब्रह्मत्वेन for ब्रह्मत्व ।

वाक्यादिच्छामात्रेण तद्भोगकरणानन्तरं प्राचीनभगवद्भजनलक्षणक्रतुश्च नीयत इत्यर्थः। वस्तुतस्तु भक्तस्यामानवपुमपेक्षाभावात् स्वयमेव ब्रह्मलोकान् प्राप्नोतीति ज्ञापनाय प्रथमान्त उक्तः । ननु ब्रह्मणोधिकं न किंचिदस्ति । न तत्समश्चाभ्यधिकश्च दृश्यते (श्वे. ६।८) इति श्रुतेः। एवं सति च्छान्दोग्ये
५ सनत्कुमारनारदसंवादे—स यो नाम ब्रह्मेत्युपास्ते (छां. ७।१।१) इत्यादिना नामवाङ्मनःसंकल्पचित्तध्यानविज्ञानादीनां ब्रह्मत्वेनोपासनमुत्तरोत्तरं पूर्वस्मात् पूर्वस्माद् भूयस्त्वं चोच्यतेतो न ब्रह्मत्वं सर्वेषामुपास्यानां वक्तुं शक्यमिति चेत् मैवम् । विभूतिरूपाणां नियतफलदातृत्वाद् येन रूपेणाल्पफलदानं तत्राधिकगुणप्राकट्ये प्रयोजनाभावात् तावन्मात्रगुणप्रकटनं येन रू-
१० पेण ततोधिकफलदानं तत्र ततोधिकगुणप्रकटनमिति पूर्वस्मादाधिक्यमुच्यते। एवमेव सर्वत्र । नियतफलदानं तु स्वतन्त्रेच्छत्वाल्लीलारूपमिति नानुपपन्नं किंचित् । प्रतिमादिष्वावाहनेन संनिहिते विभूतिरूपे तद्भावनं पूजामार्गे । भक्तिमार्गे तु भक्त्या तत्र प्रकटे तथा । गुरौ तु शाब्दे परे च निष्णातं ब्रह्मणीति विशेषणवत्त्वेन भगवदावेशात् तत्र तद्भावनमिति सर्वमवदातम् ।
१५ अपि च बादरिजैमिनिमतोक्त्यनन्तरं स्वमतोक्त्या तत्समानविषयत्वमत्रापीत्यवगम्यते । तत्र च कार्यब्रह्मलोकप्राप्तिपरब्रह्मप्राप्तिविषयत्वमुक्तं पूर्वोत्तरपक्षभेदेन । बादरिमते सविशेषस्यैवोपास्यत्वाद्विशेषाणां चाविद्यकत्वादुपासनानां सर्वासां प्रतीकतद्रूपत्वमेव सिध्यति । एवं सत्यप्रतीकालम्बनान्नयतीति वदता व्यासेन बादरिमतानुसारिण उपासकस्य न कस्यापि
२० ब्रह्मप्राप्तिरिति ज्ञाप्यते । वस्तुतस्तूपासनायामुपास्यस्वरूपज्ञानस्याप्यङ्गत्वात्तन्मतीयानामुक्तरीत्या तदभावेन निरङ्गत्वादर्चिरादिप्राप्तिरपि न संभवति किं पुनर्ब्रह्मण इति निगूढाशयो व्यासस्य । एवं सति परप्राप्तावेवोपोद्बलकमुक्तं भवतीति सैव व्यासाभिमतेति सिद्धम् । ये तु प्रतीकेष्वब्रह्मक्रतुत्वं वदन्तः पञ्चाग्निविद्यायास्तथात्वेपि वचनबलात् तद्वतो ब्रह्मप्राप्ति-
२५ रिति वदन्ति । तत्रेदमुच्यते । वचनं तु वस्तुसतः पदार्थस्य बोधकं न तु कारकमतस्तच्चेद् बोधयति तदाप्रतीकालम्बनान्नयतीति व्यासो-

25–C reads वस्तुतः for वस्तुसतः ।

स्त्यविरोधाय तत्राप्यप्रतीकत्वमूरीकार्यम् । अन्यथा पञ्चाग्निविद्या-निरूपिकां श्रुतिं पश्यन्नेवं स न वदेत् । न चौत्सर्गिकं पक्षमाश्रित्य तथोक्तमिति वाच्यम् । तस्य बाधकापनोद्यत्वाद्वचनस्य चोक्तन्याये-नाबाधकत्वात् । यत्र वचनस्य बाधकत्वमुच्यते तत्र बाधबोधकत्वमेव ।
५ न तु तथात्वमित्युपेक्षणीयास्ते । ननु मनःप्रभृतीनां शुद्धब्रह्मत्वे-मनो ब्रह्मोपास्ते इति वदेन्न तु प्रकारवाचीतिशब्दशिरस्कं ब्रह्म-पदमत उपासनाप्रकारावच्छेदकत्वमेव ब्रह्मपदस्य न तु स्वरूपनिरूप-कत्वमिति चेद् हन्तेदं शब्दार्थानवगमविजृम्भितमेव । यतो मन उपास्स्वे-त्युक्त्वा तदुपासनाफलं यावन्मनोगतं तत्रास्य कामचारो भवतीति वदिष्यं-
१० स्तदुपासनाया एतत्फलसाधकत्वे प्रयोजकरूपाकाङ्क्षायामाह । मनो ब्रह्मेति । इति शब्दोत्र हेतुत्ववाची । तथा च यतो मनो ब्रह्मातो हेतोस्तदुपासनं तादृक्फलसाधकमित्यर्थः । अत एव मनो हि ब्रह्म मन उपास्स्वेति पूर्व-मुक्तम् । सर्वत्रैवमेव ज्ञेयम् ॥ ४।३।१६ ॥ ४ ॥

---

## ५ विशेषाधिकरणम् ।

१५ **विशेषं च दर्शयति ॥ ४।३।१७ ॥**

सर्वाण्युपास्यानि रूपाणि ब्रह्मरूपाण्येवेति तदुपासकानां परप्राप्ति-रेवेति सिद्धम् । तत्रेदं चिन्त्यते । ज्ञानमार्गीयाणां भक्तिमार्गीयाणां चावि-शेषेणैव परप्राप्तिरुत कश्चिद्विशेषोस्तीति । तत्रोभयोरपि ब्रह्मोपासकत्वेना-विशेषेणैव फलं भवतीति प्राप्ते प्रत्याह । विशेषं च श्रुतिर्दर्शयति ।
२० तैत्तिरीयके पठ्यते । ब्रह्मविदाप्नोति परम् ( तै. २।१ ) इति गूढा-भिसंधिना सामान्यत एतावदुक्त्वा गूढं तमुद्घाटयन्त्यतिगोप्यत्वमस्मि-न्नर्थेनुभवैकवेद्यत्वं च ज्ञापयन्त्याह--तदेषाभ्युक्ता । सत्यं ज्ञानमनन्तं ब्रह्म । यो वेद निहितं गुहायां परमे व्योमन् । सोश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चिता ( तै. २।१ ) इति । तत्पूर्वोक्तं प्रतिपाद्यत्वेना-
२५ भिमुखीकृत्यैषर्गुक्ता तदनुभवकर्तृभिरिति शेषः । ब्रह्मविदक्षरब्रह्मविदाप्नोति

सांन्निध्यादक्षरमेवाप्नोति । एतावानर्थो यो वेदेत्यन्तयर्चोक्तः । अथ परमाप्नोतीत्यस्यार्थ उच्यते निहितमित्यादिना । अत एव मध्ये क्रियापद-मुभयसंबन्धित्वज्ञापकमुक्तम् । तत्प्राप्तिश्च मर्यादापुष्टिभेदेन द्वेधा । तत्रादौ मर्यादायामुच्यते । इह्रायमाशयो ज्ञेयः । नायमात्मा प्रवचनेन ( मुं ३।२।
५ ३ ) इति श्रुत्या भगवद्वरणातिरिक्तसाधननिरासः क्रियते पुरुषोत्तमप्राप्तौ । एवं सत्यक्षरब्रह्मज्ञानस्य तत्साधनत्व उच्यमाने तद्विरोधः स्यात् । तेनैव-मेतदर्थो निरूप्यते । ज्ञानमार्गीयाणामक्षरज्ञानेनाक्षरप्राप्तिस्तेषां तदेकपर्यव-सायित्वात् । भक्तानामेव पुरुषोत्तमपर्यवसायित्वात् । तदुक्तं भगवद्गीतासु —एवं सततयुक्ता ये (भ. गी. १२।१) इति प्रश्ने—मय्यावेश्य मनो ये माम्
१० ( भ. गी. १२।२ ) ये त्वक्षरमनिर्देश्यम् । (भ. गी.१२।३) श्रीभागवते च—भक्त्याहमेकया ग्राह्यः (भा. ११।१४।२१) तस्मान्मद्भक्तियुक्तस्येत्यु-पक्रम्य—न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह ( भा. ११।२०।३१) इत्यादिना । तथा च ब्रह्मविदं चेद्भगवान् वृणुते तदा भक्तिरुदेति । तत्प्र-चुरभावे सति स्वयं तद् हृदि प्रकटीभविष्णुः स्वस्थानभूतं व्यापिवैकुण्ठं
१५ तद्गुहायां हृदयाकाशे प्रकटीकरोति तत् परमव्योमशब्देनोच्यते । अलौ-किकप्रयोगेण तस्यालौकिकत्वं ज्ञाप्यते । यथा स्वस्थापितं वस्त्ववश्यं दर्शनयोग्यं भवति तथात्र भगवानपीति ज्ञापनाय निहितमित्युक्तम् । तथा च परमाप्नोतीति पदविवृतिरूपत्वादस्य गुहायां परमे व्योम्नि निहितं यो वेद स नास्य प्राणा उत्क्रामन्तीहैव समवलीयन्ते ब्रह्मैव सन् ब्रह्मोपैति ( बृ. ४।४।
२० २२ ) इति श्रुत्युक्तरीत्या परमाप्नोतीत्यर्थः संपद्यते । अथ शुद्धपुष्टिमार्गेङ्गीकृ-तस्य व्यवस्थामाह । सोश्नुते ( तै. २।१) इत्यादिना । अत्रायमभिसंधिः । यथा स्वयं प्रकटीभूय लोके लीलां करोति तथात्यनुग्रहवशात् स्वान्तः-स्थितमपि भक्तं प्रकटीकृत्य तत्स्नेहातिशयेन तद्वशः सन् स्वलीलारसा-नुभवं कारयतीति स भक्तो ब्रह्मणा परब्रह्मणा पुरुषोत्तमेन सह सर्वान्
२५ कामानश्नुत इति । चकारादुक्ता श्रुतिः स्मृतयश्च संगृह्यन्ते । एवं सति

17–C reads स्वदर्शन for दर्शन ।

ज्ञानमार्गीयाणामक्षरप्राप्तिरेव । भक्तानामेव पुरुषोत्तमप्राप्तिरिति सिद्धम् ॥ ४।३।१७ ॥ ५ ॥

इति श्रीवेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये चतुर्थाध्यायस्य तृतीयः पादः ॥ ४।३ ॥

---

# अथ चतुर्थाध्याये चतुर्थः पादः ।

## १ संपद्याविर्भावाधिकरणम् ।

### संपद्याविर्भावः स्वेन शब्दात् ॥ ४।४।१ ॥

ब्रह्मविदाप्नोति परम् ( तै. २।१ ) इत्युपक्रम्य—सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ( तै. २।१ ) इति तैत्तिरीयके पठ्यते । तत्रेदं संदिह्यते । किमन्तःस्थित एवाश्नुते । उत पुनर्जन्म प्राप्नोति । तत्रान्त्यस्त्वनुपपन्नः । न स पुनरावर्तते (का. २) तेषामिह न पुनरावृत्तिरस्ति (बृ. ६।२।१५) इत्यादिश्रुतिविरोधात् कर्माभावाच्चेति प्राप्ते प्रतिवदति। संपद्य ब्रह्म संपद्यापि स्थितस्य जीवस्य प्रभोरत्यनुग्रहवशाद् रूपात्मकभजनानन्ददित्सायां तत्कृत आविर्भावो भवत्येव। भगवदधीनत्वज्ञापनायास्य तत्र कर्तृत्वं नोक्तम् । ननूक्तं—न स पुनरावर्तते (का. २) इत्यादिश्रुतिविरोधः कर्माभावश्च बाधक इत्यत आह । स्वेनेति । स्वशब्दोत्र भगवद्वाची । तथा च भगवत्स्वरूपबलेनैवाविर्भाव इत्यर्थः । एवं सत्युक्तश्रुतिर्मर्यादामार्गविषयिणीति न विरोध इति भावः । तेषामिह प्रपञ्चे न पुनरावृत्तिरस्तीति हि श्रुतिराह । लीलायाः प्रपञ्चातीतत्वात् तत्राविर्भावस्य निषेधाविषयत्वादपि न विरोधः । अत्र प्रमाणाकाङ्क्षायामाह । शब्दादिति । सोश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता (तै. २।१) इति श्रुतिः पुरुषोत्तमेन सह सर्वकामभोगं वदति । स च न विग्रहं विना संभवतीति श्रुतिबलादेव तथा मन्तव्यमित्यर्थः ॥ ४।४।१ ॥

हेत्वन्तरमाह ।

### मुक्तः प्रतिज्ञानात् ॥ ४।४।२ ॥

अत्रोपक्रमे—ब्रह्मविदाप्नोति परम् (तै. २।१) इति वाक्येन परप्राप्तिलक्षणां मुक्तिं प्रतिज्ञाय हि तद्विवृतिरेव सोऽश्नुत इत्यादिना क्रियते। तेन पुष्टिमार्गीयमुक्तिरूपत्वमेव तस्याशनस्य सिध्यत्यतोपि हेतोस्तदाविर्भावस्य न लौकिकत्वं न चावृत्तिरूपत्वमित्यर्थः ॥ ४।४।२ ॥

५ **आत्मा प्रकरणात् ॥ ४।४।३ ॥**

ननु परस्य ब्रह्मणो निर्गुणत्वात्कामभोगस्य गुणसाध्यत्वात्सह ब्रह्मणेत्यत्र ब्रह्मपदं सगुणतत्परमतो न तस्य मुक्तिरूपत्वमित्यत आह। अत्र ब्रह्मपदेनात्मा व्यापको मायातद्गुणसंबन्धरहितो यः स एवोच्यते। कुतः। प्रकरणात्। ब्रह्मविदाप्नोति परम् (तै. २।१) इत्युपक्रम्य तत्पाठाद् गुणाती-
१० तस्यैवैतत्प्रकरणमिति तदेवात्र ब्रह्मशब्देनोच्यत इत्यर्थः ॥ ४।४।३ ॥

**अविभागेन दृष्टत्वात् ॥ ४।४।४॥**

ननु—ब्रह्मविदाप्नोति परम् (तै. २।१) इति भिन्नं वाक्यम् ऋग्भिन्नातो नैकं प्रकरणमिति सगुणमेव तत्र ब्रह्मपदेनोच्यत इत्याशङ्क्य प्रतिवदति। पूर्ववाक्येन समविभागेनैवेयमृक् पठिता न तु विभागेन ।
१५ कुतः । दृष्टत्वात् । ब्रह्मविदिति वाक्यानन्तरं तत्पूर्वोक्तमर्थं प्रतिपाद्यत्वेनाभिमुखीकृत्यैषर्गुक्तेति श्रुतिर्दृश्यते । तदेषाभ्युक्तेति । तेन पूर्ववाक्योक्तार्थमधिकृत्यैवर्गुच्यत इति गुणातीतमेव तदत्र वाच्यमित्यर्थः ॥ ४।४।४।१ ॥

---

## २ ब्राह्माधिकरणम्।

### ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ४।४।५ ॥

२० पूर्वेण मुक्तो जीवो भगवदनुग्रहातिशयेच्छातो बहिराविर्भूतो गुणातीतेन पुरुषोत्तमेनैव सह सर्वान् कामानश्नुत इति सिद्धम् । अथ तत्रैवेदं विचार्यते । आविर्भूतो जीवः प्राकृतेन शरीरेण भुङ्क्त उताप्राकृतेनेति । तत्र भोगस्य लौकिकत्वे तदायतनस्यापि तादृशेनैव भवितव्यमिति मन्वानं प्रत्याह । ब्राह्मेण ब्रह्मसंबन्धिना ब्रह्मणा भगवतैव स्वभोगानुरूपतया
२५ संपादितेन सत्यज्ञानानन्दात्मकेन शरीरेण पूर्वोक्तानश्नुत इति जैमिनि-

राचार्यो मनुते । तत्र हेतुरुपन्यासादिभ्य इति। ब्रह्मविदाप्नोति परमिति ब्रह्मविदः परप्राप्तिं प्रतिज्ञाय तदर्थस्यैवोपन्यासोऽग्निमयर्चा क्रियते सोऽश्नुत इत्यादिना । तथा च परप्राप्तेर्मुक्तिरूपत्वात् पुष्टिमार्गीयायास्तस्या एवं- रूपत्वादक्षरब्रह्मणः पुरुषोत्तमायतनरूपत्वात्तदात्मकमेव शरीरं तस्य वक्तु- ५ मुचितं न तु प्राकृतम् । एतद्बोधनायैवाग्नेन्नमयादीनि विभूतिरूपाण्युक्तानि। भक्तशरीरे प्रतीयमानानामर्थानां विभूतिरूपत्वेन ब्रह्मात्मकत्वं तेन साधितं भवति । इदमेवादिपदेन बहुवचनेन च ज्ञाप्यते । एतदानन्दमयाधिकरणे प्रपञ्चितमतो नात्र पुनरुच्यते तत्र कर्मवादी जैमिनिरेवं मनुते तत्रान्येषामेव- मङ्गीकारे किमाश्चर्यमिति ज्ञापनाय तन्मतोपन्यासः कृतः ॥ ४।४।५ ॥

१० **चितितन्मात्रेण तदात्मत्वादित्यौडुलोमिः ॥ ४।४।६ ॥**

स यथा सैन्धवघनोनन्तरोबाह्यः कृत्स्नो रसघन एवं वा अरे अयमात्मानन्तरोबाह्यः कृत्स्नः प्रज्ञानघनः ( बृ. ४।५।१३ ) इति श्रुतौ घनपदेन ज्ञानात्मकविग्रहात्मत्त्वं ब्रह्मणो बोध्यते । अन्यथा न वदेत् । प्रयोजनाभावात् । तथा च तादृशेन सह भोगकर्त्री तादृशेनैव भाव्यमिति १५ चिति चिद्रूपे ब्रह्माणि तन्मात्रेण चिन्मात्रेण रूपेण कामान् भुङ्क्ते न तु विग्रहेण । श्रुतौ जीवस्य तथात्वस्यानुक्तेः । पूर्णानन्दत्वाद्भगवतस्तत्संब- न्धेन तदानन्दमनुभवतीत्यर्थः संपद्यते । चिदात्मत्वं जीवस्य यतो नैस- र्गिकमित्यौडुलोमिराचार्यो मनुते । अशरीरं वाव ( छां. ८।१२।१ ) इति श्रुतिरेतादृशान्याविषयिणीति ज्ञेयम् । मुक्तिदशायां तदनुभवस्य २० भगवदिच्छाविषयत्वाभावान्न तथा । तथा चैतदेतज्जातीयकानन्दानुभवोस्य भवत्विति भगवदिच्छैव श्रुतौ कामशब्देनोच्यते ॥ ४।४।६ ॥

**एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ४।४।७॥**

परमाचार्यो बादरायणस्तु नैवं मनुते । ब्रह्मविदाप्नोति परमित्य- स्योपन्यास एवमपि विग्रहवत्त्वेनापि कृतो यतः । तथाहि । यो वेद २५ निहितं गुहायाम् ( तै. २।१ ) इत्यत्र गुहाया उक्तत्वात्तस्या विग्रह एव संभवात् । किंच । प्रथमान्तोपस्थितत्वेन प्राप्नोतीत्युक्त्वा च ब्रह्मविदः

परप्राप्तौ स्वातन्त्र्यं ज्ञाप्यते। तदेव ब्रह्मणा सहेति पदेनोपन्यस्तम्। तेन ब्रह्मणोपि तत्समानक्रियावत्त्वं ज्ञाप्यते। परं त्वप्राधान्येन। तथा च भक्तस्यैव कामा वक्तुमुचितास्ते च न विग्रहं विना संभवन्ति। किंच। विपश्चितेति विशेषणेन विविधं पश्यच्चिद्रूपत्वमुच्यते। कामभोगोक्तिप्रस्ताव ५ एतदुक्त्या तदुपयोग्येव सर्वं वाच्यम्। एवं सति भक्तविविधभावान् पश्यति स्वयंभोगचतुरश्चेत्युक्तं भवति। एतेनापि भक्तविग्रहः सिध्यति। ननु विग्रहस्यागन्तुकत्वेन लौकिकत्वादलौकिकेन ब्रह्मणा भोगो विरुद्ध इत्यत आह। पूर्वभावादिति। भक्तप्राप्तेः पूर्वमेव भगवदीप्सितभोगानुरूप- विग्रहाणां सत्त्वान्न विरोधः। किंच। उक्तश्रुतिसूत्रैः पुरुषोत्तमेन सह १० भक्तस्य कामभोगो निरूपितः। स यावतार्थेन विना नोपपद्यते तावान् स श्रुत्यभिमत इति मन्तव्यम्। तथा च ब्रह्मसंबन्धयोग्यानि शरीराणि नित्यानि सन्त्येव। यथानुग्रहो यस्मिञ्जीवे स तादृशं तदाविश्य भगव- दानन्दमश्नुत इति सर्वमवदातम्॥ ४।४।७॥

## संकल्पादेव च तच्छ्रुतेः॥ ४।४।८॥

१५ एवं परप्राप्तिः केषांचिदेव भवति। तत्र हेत्वपेक्षायामाह। भजना- नन्दं दातुं यमेव संकल्पविषयं करोति स एवैवं प्राप्नोतीति भगवत्संकल्प एव तत्र हेतुः। तत्र प्रमाणमाह। तच्छ्रुतेः। नायमात्मेत्युपक्रम्य—यमे- वैष वृणुते तेन लभ्यः (मुं. ३।२।३) इति श्रुतिः श्रूयतेतः स एवात्र हेतुः। श्रुतौ प्रवचनादिदोषः कृत इत्यत्राप्येवकार उक्तः। चकारात्तज्जनितैवैत- २० दनुरूपा परमार्तिः संगृह्यते॥ ४।४।८॥

## अत एव चानन्याधिपतिः॥ ४।४।९॥

यतो हेतोः साधनं फलं चोक्तरीत्या स्वयमेव नान्योतो हेतो- स्तेषां हृदि साधनत्वेन फलत्वेन प्रभुरेव स्फुरति नान्यस्तेनानन्यास्ते। तेषामेवाधिपतिः पुरुषोत्तमः। अन्यत्राधिपत्यं विभूतिरूपैः करोत्यतः सर्व-

17–B reads आत्मेत्युक्तस्य for आत्मेत्युपक्रम्य।

स्याधिपतिरिति श्रुतिरपि तदभिप्रायेणैवेति भावः । चकारात्—मदन्यत्ते न जानन्ति नाहं तेभ्यो मनागपि ( भा. ९।४।६८ ) इति भगवद्वाक्यं संगृह्यते । अन्यथा सर्वज्ञस्याकुण्ठितज्ञानशक्तेरेवं कथनमयुक्तं स्यादतः पुष्टिमार्गोनुग्रहैकसाध्यः प्रमाणमार्गाद्विलक्षणस्तत्र विश्वासश्च तथेति
५ सिद्धम् ॥ ४।४।९ ॥

## अभावं बादरिराह ह्येवम् ॥ ४।४।१० ॥

मुक्तोपि जीवः पुष्टिमार्गेङ्गीकृतो भगवद्दत्तं विग्रहं प्राप्य भजनानन्दं प्राप्नोतीति सिद्धम् । अत्र प्रत्यवतिष्ठते बादरिराचार्यो मुक्तस्य देहाद्यभावं मनुते । तत्र हेतुराह । ह्येवमिति । ब्रह्मविदो हि मुक्तिरुच्यते।
१० यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति (बृ.२।४।१४) इत्याद्युक्त्वा—यत्र त्वस्य सर्वमात्मैवाभूत् तत्केन कं पश्येत् ( बृ. २।४।१४ ) इत्यादिना द्वितीयज्ञाननिषेधमाह ब्रह्मविदः श्रुतिः । तथा च तस्य कामभोगवार्ता दूरतरेति तदाक्षेप्यदेहोपि तथा ॥ ४।४।१० ॥

## भावं जैमिनिर्विकल्पामननात् ॥ ४।४।११ ॥

१५ जैमिनिराचार्यस्तु मुक्तस्य पुंसो देहादेर्भावं सत्तां मन्यते। तत्र हेतुर्विकल्पेत्यादि । ब्रह्मविदाप्नोति परमिति श्रुत्या ब्रह्मज्ञानस्य तत्प्राप्तिसाधनत्वमुच्यते । नायमात्मा ( मुं. ३।२।३ ) इति श्रुत्या तु वरणमात्रप्राप्यत्वम् । सोश्नुत इत्यादिना च परप्राप्त्युपन्यासः क्रियते । इहैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येति ( बृ. ४।४।२२ ) इति च
२० पठ्यते । एवं सति मिथो विरोधे तदभावायोक्तव्याख्यानरीत्या ज्ञानमार्गीयस्य ब्रह्मज्ञानेनाक्षरब्रह्मप्राप्तिः पुष्टिमार्गीयभक्तस्य तु सोश्नुत इत्यनेनोक्ता परप्राप्तिरिति व्यवस्थितविकल्प एव श्रुत्यभिमत इति ज्ञायते । तेन नायमात्मेति श्रुतिः परप्राप्तिविषयिणी । इहैवेत्यादिश्रुतिस्तु मर्यादामार्गीयविषयिणी मन्तव्यम् । एवं सति पुष्टिमार्गीयस्य भोगसाधनात्मकविग्र-
२५ हवत्त्वं निष्प्रत्यूहं सिध्यति । तत् केन कं पश्येदित्यादिना तु ब्रह्मज्ञानसामयिकीं व्यवस्थामाह न तु तदुत्तरकालीनपरप्राप्तिसामायिकीमिति किमनुपपन्नम् ॥ ४।४।११ ॥

## द्वादशाहवदुभयविधं बादरायणोतः ॥ ४।४।१२ ॥

ब्रह्मणा सह सर्वकामाशनप्रयोजकं शरीरं शरीरत्वस्य भूतजन्यत्वव्याप्यत्वात्तदभावेनाशरीररूपं तद्भोगायतनत्वेन शरीररूपमपीति बादरायण आचार्यो मन्यते । अत्र हेतुरत इति । तथाविधश्रुतेरित्यर्थः ।
५ तथाहि । सुखं त्वेव विजिज्ञासितव्यमित्युक्त्वा तत्स्वरूपमाह । यो वै भूमा तत्सुखम् ( छां. ७।२३।१ ) इत्युपक्रम्याग्र उच्यते । यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा ( छां. ७।२४।१ ) इत्यनेन केवलभावविषयत्वं पुरुषोत्तमलक्षणमुक्त्वा केवलभाववतो भक्तस्य विप्रयोगगसामयिकीं व्यवस्थामाह स एवाधस्तात् स उपरिष्टात् स पश्चात्स
१० पुरस्तात् ( छां. ७।२५।१ ) इत्यादिना । ततः– स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन् ( छां. ७।२५।२ ) इति पूर्वावस्थामनूद्य संयोगावस्थामाह । आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः ( छां. ७।२५।२ ) इति वाक्येन सोश्नुत इति श्रुतिसंवादिनमर्थमुक्त्वा भक्तस्वरूपमाह । तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत
१५ आत्मतः प्राणः ( छां. ७।२६।१ ) इत्युपक्रम्य—आत्मत एवेद*ँ* सर्वम् ( छां. ७।२६।१ ) इति। तेनाशरीरत्वं सिध्यति। अव्ययप्रयोगेणाविकृतादेव पुरुषोत्तमात्प्राणाद्याविर्भाव उच्यते । अत्र ल्यब्लोपे पञ्चमी । पूर्वं विरहदशायां प्राणादयो भगवत्येव लीना आसंस्ततस्तत्प्राकट्ये तत एव प्राणादयोपि संपन्ना इति तत्प्राप्तेर्निमित्तत्वं यतो विभूतिरूपाणामपि पुरु-
२० षोत्तमे लयो नानुपपन्नः । आत्मरतिरित्यादिना सोश्नुत इत्यनेन च शरीरत्वम् । जैमिनिरप्यत एव ब्राह्मेणेति मनुते । एकस्य विरुद्धोभयधर्मवत्त्वममन्वानं प्रति वैदिकं दृष्टान्तमाह । द्वादशाहवदिति । यः कामयेत प्रजायेयेति स द्वादशरात्रेण यजेत ( तै. सं. ७।२।९ ) इति चोदनया द्विरात्रेण यजेत ( तै. सं. ७।१।४ ) इत्यादिवन्नियतकर्तृकत्वेनाहीनत्वं
२५ गम्यते । द्वादशाहमृद्धिकामा उपेयुः । य एवं विद्वा*ँ*सः सत्रमुपयन्ति ( तै. सं. ७।५।१ ) इति श्रुत्या च सत्रत्वं बहुकर्तृकस्य गम्यते । एवमेव द्वादशाङ्गशरीरेन्द्रियप्राणान्तःकरणात्मभिरश्नुत इति सत्रतुल्यत्वम् । वस्तुतो

---

22--C reads सर्वभूत for भूत ।

भगवद्विभूतिरूपत्वेन ब्रह्मात्मत्वेनैकरूपत्वमतो द्वादशाहवदुभयाविधम् । सत्रे प्रत्येकं चेतनानां यजमानानां फलभागित्ववदत्रापि तादृग्भक्तदेहादीनामपि ब्रह्मात्मकत्वाच्चेतनत्वमेवेत्यप्यनेन दृष्टान्तेन ज्ञाप्यते । अत एव श्रीभागवते—देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम् ( भा. ७।१।३४ ) ५ इति गीयते ॥ ४।४।१२ ॥ २ ॥

---

## ३ तत्त्वभावाधिकरणम् ।

## तत्त्वभावे संध्यवदुपपत्तेः ॥ ४।४।१३ ॥

अथेदं चिन्त्यते । भगवत्स्वरूपे प्राकृतशरीर इवावस्था दृश्यन्ते तत्कालीनैः पुंभिरिति कथमप्राकृतत्वमुपपद्यत इति तत्रोपपत्तिमाह । तद्द- १० र्शनस्य वास्तववस्तुविषयकत्वव्यवच्छेदेन पूर्वपक्षव्युदासाय तुशब्दः । तत् प्राकृततुल्यदर्शनमभावे तथात्वस्याभाव एव भवति । न तु तत्र प्राकृता धर्माः सन्ति । नन्वविद्यमानानामर्थानां कथं दर्शनमुपपद्यत इत्यत आह। संध्यवदिति । स्वप्ने यथा वासनावशादविद्यमानानामप्यर्थानां भवति तथा भगवदिच्छावशात्तत्रापि प्राकृततुल्यत्वदर्शनस्योपपत्तेर्न प्राकृतत्वं तत्र ज्ञेय- १५ मित्यर्थः । तथा च श्रुतिः । संध्यं तृतीयꣳ स्वप्नस्थानं तस्मिन् संध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदं च परलोकस्थानं च । अथ यथाक्रमोयं परलोकस्थाने भवति तमाक्रममाक्रम्योभयान् पाप्मन आनन्दांश्च पश्यति । स यत्रायं प्रस्वपिति ( बृ. ४।३।९ ) इत्युपक्रम्य स्वयं विहृत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपित्यत्रायं पुरुषः स्वयंज्योतिर्भव- २० ति—न तत्र रथा न रथयोगा न पन्थानो भवन्ति ( बृ. ४।३।१० ) इत्यादिरूपा । एवमेव भगवानासुराणां प्राकृतगुणे तमस्येव दुःखात्मके लयं चिकीर्षुः स्वस्मिन् प्राकृतत्वबुद्धिसंपादनाय तादृशीमिव लीलां दर्शयत्यतो न प्राकृतत्वशङ्कागन्धोप्यत्र । अत एव भगवतोक्तम्—मामात्मपरदेहेषु प्रद्विषन्तोभ्यसूयकाः (भ. गी. १६।१८ ) इत्युपक्रम्य—ततो यान्त्य- २५ धमां गतिम् ( भ. गी. १६।२० ) इति । तेषामासुरत्वेन मुक्त्यनधिकारित्वात् तथाकरणमतः सुष्ठूक्तं संध्यवदुपपत्तेरिति ॥ ४।४।१३ ॥

## भावे जाग्रद्वत् ॥ ४।४।१४ ॥

लौकिकवद्भासमाने लीलापदार्थे यद्दर्शनं भक्तानां तत्तु भावे विषये विद्यमाने सति भवति । अत्र दृष्टान्तमाह । जाग्रद्वत् । यथा मोहाभाववतः पुंसः सत एवार्थस्य दर्शनं तथेति । एताभ्यां सूत्राभ्यामेतदुक्तं भवति ।
५ सोऽश्नुते सर्वान् कामान् सह । ब्रह्मणा विपश्चिता ( तै. २।१ ) इति श्रुत्या भक्तकामपूरणाय भगवान् लीलां करोतीति गम्यते । यद्दर्शनश्रवण-स्मरणैर्भक्तानां दुःखं भवति तादृशीमपि तां करोतीति श्रूयते । यथा सौभयुद्धे मोहवचनानि । हस्तादायुधच्युतिः । प्रभासीयलीला च । उक्तरीत्या सोऽश्नुत इति श्रुत्या परब्रह्मत्वमवगम्यते । उक्तलीलया तद्वि-
१० परीत्यं च । एवं सत्येकस्या वास्तवत्वमन्यस्या अवास्तवत्वं वाच्यम् । ते ते धामान्युष्मसि ( तै. सं. १।३।६।१ ) विष्णोः कर्माणि पश्यत ( तै. सं. १।३।६।२ ) तद्विष्णोः परमं पदम् (तै. सं. १।३।६।२ ) तद्वि-प्रासो विपन्यवः ( ऋ. सं. १।२२।२१ ) इत्यादिश्रुतिभिः । सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम् । विश्वं नारायणं देवमक्षरं परमं पदम् ।
१५ विश्वतः परमं नित्यं विश्वं नारायणꣳ हरिम् । विश्वमेवेदं पुरुषस्तद्विश्व-मुपजीवति । पतिं विश्वस्यात्मेश्वरꣳ शाश्वतं शिवमच्युतम् (म. ना. १३।१) इत्यादिभिश्च शुद्धब्रह्मणस्तद्विपरीतदर्शनेऽवश्यं हेतुर्वाच्यः । स त्वासुरव्या-मोहनमेवेति पूर्वसूत्रेणोपपादितः । भक्तेभ्यः स्वरूपानन्ददानाय—लोकवत्तु लीलाकैवल्यम् ( ब्र. सू. २।१।३३ ) इति न्यायेन या लीलाः करोति
२० यथा रिङ्गणादिर्लीला भगवतो नैसर्गिकधर्मरूपानन्दात्मकत्वेन विद्यमाना एव ता भक्ताः पश्यन्तीति द्वितीयसूत्रेणोक्तम् । अत एव लीलाया अनेकरूपत्वाद् ब्रह्मणश्च श्रुतौ सैन्धवदृष्टान्तेनैकरसत्वनिरूपणाच्छुद्ध-ब्रह्मधर्मत्वं न संभवतीति शङ्कानिरासाय कैवल्यमित्युक्तम् ।

साक्षी चेता केवलो निर्गुणश्च ( श्वे. ६।११ ) इत्यादि-
२५ श्रुतिषु यान्यधर्मराहित्यलक्षणा केवलतोक्ता सा लीलात्मिकैव लीला-विशिष्टमेव शुद्धं परं ब्रह्म न कदाचित्तद्रहितमित्यर्थः पर्यव-स्यति । तेन स्वरूपात्मकत्वं लीलायाः पर्यवस्यति तेन च नित्यत्वम् ।

एतद्विद्वन्मण्डने प्रपञ्चितम्। अथवा लीलैव कैवल्यं जीवानां मुक्तिरूपम् तत्र प्रवेशः परमा मुक्तिरिति यावदित्यर्थः ॥ ४।४।१४ ॥ ३ ॥

---

## ४ प्रदीपाधिकरणम्।

### प्रदीपवदावेशस्तथाहि दर्शयति ॥ ४।४।१५ ॥

५ ननु पूर्णज्ञानक्रियाशक्तिमता ब्रह्मणा तुल्यभावेन तत्रापि प्रधानभावं प्राप्य कामभोगकरणमपूर्णज्ञानक्रियावतो भक्तस्यानुपपन्नमित्याशङ्कायां तत्रोपपत्तिमाह। नहि तदा नैसर्गिकज्ञानक्रियाभ्यां तथा भोक्तुं शक्तो भवति किंतु भगवांस्तस्मिन्नाविशति यदा तदायमपि तथैव भवतीति सर्वमुपपद्यते। एतदेवाह। प्रदीप-
१० वदिति। यथा प्राचीनः प्रकृष्टो दीपः स्नेहयुक्तायां वर्त्यामर्वाचीनायामाविष्टः स्वसमानकार्यक्षमां तां करोति स्नेहाधीनस्थितिश्च भवति स्वयं तथात्रापीत्यर्थः। अत्र प्रमाणमाह। तथाहि दर्शयति श्रुतिः। भर्ता संभ्रियमाणो बिभर्ति। एको देवो बहुधा निविष्टः (तै. आ. ३।१४) इति। सर्वान् कामानित्युक्तत्वाद् यस्य कामस्य भोगो यथा निवेशे सति
१५ तत्तथा तदा निवेश इति बहुधा निवेश उक्तः। अयं निवेशो नान्तर्यामित्वेन तस्यैकधैव प्रवेशात्। निसर्गतः सर्वेषां जीवानां भगवान् भवत्येव प्रभुर्यद्यपि तथापि यं स्वीयत्वेन वृणुते तस्य विवाहितः पतिरिव भर्ता सन् वरणजस्नेहातिशयेन भक्तेनापि भ्रियमाणः सन् स भक्त इव स्वयमपि तं स्वस्मिन् बिभर्ति। अत एव स्नेहराहित्येनायोगोलकादिकं विहाय
२० प्रदीपं दृष्टान्तमुक्तवान् व्यासः। अत एव देवपदमुक्तम्। स्वरूपानन्ददानाद्भावोद्दीपनात् पूतनादिमुक्तिदानेन स्वमाहात्म्यद्योतनाद्वैकुण्ठादिस्थितेश्च। तदुक्तं निरुक्ते—दिवो दानाद्वा। दीपनाद्वा। द्योतनाद्वा। द्युस्थानो भवतीति वा यो देवः (नि. ७।१५) इति। किंच भक्तानां कामभोजनार्थं क्रीडाकरणात् क्रीडायामेव जयेच्छाकरणाद्भक्तैः सह व्यव-
२५ हारकरणाद् भक्तेषु स्वमाहात्म्येच्छादिद्योतनाद्—न पारयेऽहं (भा. १०।३२। ३७) न त्वादृशीं प्रणयिनीम् (भा. १०।६०।५५) इत्यादिभिः स्तुतिकर-

णात् भक्तप्रपत्तिदर्शनेन कालीयदमनादौ मोदकरणात् तेष्वेव भक्तिमद-करणात् ते स्वप्नेपि प्रियमेव पश्यन्तीति स्वप्नकरणात्तेषां कान्तिकरणादि-च्छाकरणाद्वा तन्निकटे गमनादपि देवः । तदुक्तं धातुपाठे—दिवु क्रीडा-विजिगीषाव्यवहारद्युतिस्तुतिमोदमदस्वप्नकान्तिगतिषु (पा. धा. पा. दि. १)
५ इति । एवं सति युक्तमेव तेषां तथात्वमिति हिशब्देनाह ॥ ४।४।१५ ॥

ननु—अस्थूलमनण्वह्रस्वम् ( बृ. ३।८।८ ) इत्याद्यनन्तरं पठ्यते । न तदश्नोति कश्चन । न तदश्नोति कश्चन ( बृ. ३।८।८ ) इति । उक्त-श्रुतौ च ब्रह्मणा सह जीवस्य भोग उच्यते । तथा च सगुणनिर्गुणभेदेन विषयभेदोवश्यं वाच्यो विरोधपरिहारायेत्यत उत्तरं पठति ।

## १० स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि ॥ ४।४।१६ ॥

इहायमाशयः । प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ( ब्र. सू. ३।२।२२ ) इत्याद्यधिकरणेः—परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ( श्वे. ६।८ ) इत्यादिश्रुतिभ्यश्च प्राकृता एव धर्मा निषिध्यन्ते ब्रह्मण्यप्राकृता एव बोध्यन्तेन्यथा तद्बोधनमेव न
१५ स्यान्निषेधकवाक्य एव तद्बोधनमपि न स्यात्—एतस्यैवाक्षरस्य प्रशासनम् ( बृ. ३।८।९ ) इत्यादिरूपमतोचिन्त्यानन्तशक्तेर्भगवतः का वा कार्याक्ष-मता यया प्राकृतान् गुणानुरीकुर्यादतो निर्गुणमेव सदा सर्वत्र भगवद्रूप-मिति मन्तव्यम् । एवं सति—तद्यथापि हिरण्यनिधिं निहितमक्षेत्रज्ञा उपर्युपरि संचरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं
२० ब्रह्मलोकं न विदन्ति ( छां. ८।३।२ ) इति च्छान्दोग्यश्रुतेः प्रस्वापदशायां न कश्चिद् ब्रह्माश्नाति तच्च न कंचनेति तद्विषयिणी निषेधिका श्रुतिः । ब्रह्मविदाप्नोति परम् ( तै. २।१ ) इति श्रुत्युक्तपरब्रह्मप्राप्तिदशाविषयिणी भोगबोधिका सेति न विरोधगन्धोपि । एतदेवाह । स्वाप्ययः प्रस्वापः । स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते (छां. ६।८।१) इति श्रुतेः । संप-
२५ त्तिर्ब्रह्मसंपत्तिरुक्तरीत्या पुष्टिमार्गीयो मोक्ष एतयोरन्यतरापेक्षमुभयश्रुत्युक्त-मित्यर्थः । भगवत्कर्तृकभोगस्य लीलारूपत्वात् तस्याश्च—लोकवत्तु लीला-

केवल्यम् ( ब्र. सू. २।१।३३ ) इत्यत्र मुक्तित्वेन निरूपणात् तत्प्राप्तेः संपद्रूपत्वं युक्ततरमिति हिशब्दार्थः ॥ ४।४।१६ ॥ ४ ॥

---

## ५ जगद्व्यापाराधिकरणम् ।

### जगद्व्यापारवर्जं प्रकरणादसंनिहितत्वाच्च ॥ ।४।४।१७ ॥

५ ब्रह्मणा सह भोगकरणं लौकिकव्यापारयुतमुत नेति संशये तद्युतमिति पूर्वः पक्षस्तथा सति मुक्तित्वभङ्गात् पूर्वोक्तमनुपपन्नमिति प्राप्त आह । जगदित्यादि । पूर्वोक्तस्य जगत्संबन्धी लौकिको यो व्यापारः कायवाङ्मनसां तद्वर्जं तद्रहितं भोगकरणम् । तत्र हेतू आह । प्रकरणादसंनिहितत्वाच्चेति । ब्रह्मविदाप्नोति परमित्युपक्रमेण मुक्तिप्रकरणात् तत्र १० लौकिकव्यापारोसंभावितः । किंच । लीलायाः कालमायाव्यतीतत्वेन प्राकृतं जगद् दूरतरमितोपि हेतोर्न तत्संभवः । कदाचिल्लोके लीलाप्रकटनेच्छायां तदधिष्ठानत्वयोग्ये मथुरादिदेशेतिशुद्धे गोलके चक्षुरिन्द्रियमिव स्थापयित्वा लीलां करोति । तदापि लीलामध्यपातिनां न लौकिकव्यापारसंभवः । न हि चक्षुरिन्द्रियं गोलककार्यं करोति न वा १५ तन्नाशे नश्यति । एतत्सर्वं—दिवीव चक्षुराततम् ( ऋ. १।२२।२० ) इति श्रुतिव्याख्याने विद्वन्मण्डने प्रपञ्चितम् । किंच छान्दोग्ये—भूमैव सुखं भूमा त्वेव विजिज्ञासितव्यः ( छां. ७।२३।१ ) इत्युक्त्वा भूम्नो लक्षणमाह । यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद् विजानाति स भूमा ( छां. ७।२४।१ ) इति । अत्र २० नान्यद्विजानातीत्येतावतैव नाभिप्रायोऽपि यश्चेन्द्रियव्यापारो निषिद्धस्तत्राप्यन्यविषयकस्तेन भगवद्विषयकः स सिद्धो भवतीति जगद्व्यापारराहित्यं सिद्धम् । तत्र तेन भगवत एव स्वतन्त्रं फलत्वमुक्तं भवति । न हि सुखस्यान्यत् प्रयोजनमस्ति ॥ ४।४।१७ ॥

## प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ ४।४।१८ ॥

नन्वेतत्प्रकरण एव छान्दोग्ये पठ्यते । सर्वं ह पश्यति ( छां. ७।२६।२ ) इति सर्वविषयकप्रत्यक्षमुपदिश्यत इत्यन्यविषयव्यापाररा-
५ हित्यं नोपपद्यत इत्याशङ्क्य समाधत्ते । आधिकारिकेत्यादिना । अत्रेद-मुच्यते । सोऽश्नुते ( तै. २।१ ) लोकवत्तु लीलाकैवल्यम् (ब्र. सू. २।१।३३) इत्यादिभिर्नित्यलीलामध्यपातित्वं तस्योच्यते । नान्यत् पश्यति ( छां. ७।२४।१ ) इत्यादिश्रुतिवशाज्जगद्व्यापारवर्जं भोगकरणं पूर्वसूत्रेणोक्तम् । अत्रेदं विचार्यते । नान्यत्पश्यतीति प्रकरण एव सर्वं ह पश्यति ( छां.
१० ७।२६।२ ) इति सर्वविषयकं दर्शनमुच्यते तत् कथं पूर्वोक्तमुपपद्यत इति । किं च । एकस्यैव भक्तस्य देशकालभेदेन क्रियमाणानेकलीलासंबन्धित्वं भवति । तच्च लीलानित्यतायां न घटते । यतस्तत्तद्देशतत्तत्कालसंबन्धिनी सा नित्या । एवं सत्येकस्यानेकरूपत्वं जीवस्य न संभवतीति तन्नित्यत्वमपि न सिध्यतीति । तत्रोच्यते ।
१५ श्रुतौ सर्वपदेन न जगदुच्यते किंतु यस्यां यस्यां लीलायां देशकालभेदेन क्रियमाणायामधिकृतो य एको भक्तस्तस्यैव तावन्ति रूपाणि सन्ति तान्याधिकारिकाणीत्युच्यन्ते । तेषां मण्डलं समूहस्तत्र स्थितवस्तुमात्रमुच्यत इति नानुपपन्नं किंचित् । अत एवाग्रे पठ्यते । सर्वमाप्नोति सर्वशः ( छां. ७।२६।२ ) इति । स एकधा भवति त्रिधा भवति पञ्चधा भवति
२० सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः । शतं च दश चैकश्च सहस्राणि च विंशतिः ( छां. ७।२६।२ ) इति । यथा मण्डलवर्तिषु पुंसु नैकस्य प्राथम्येन प्राधान्यं वक्तुं शक्यं तथैतेष्वपि रूपेष्विति ज्ञापनाय मण्डलपदमुक्तम् ॥ ४।४।१८ ॥

## विकारावर्ति च तथाहि स्थितिमाह ॥ ४।४।१९ ॥

---

1—घ reads विषयक for विषय ।

नन्वेवं सति श्वस्त्वद्गेहमायास्य इति प्रभुणोक्ते तदाशया तत्स्थि-
तिर्नोपपद्यते । नित्यत्वाल्लीलायास्तस्य कालस्य तदागमनस्य च तदापि
वर्तमानत्वात् । तथा प्रभूक्तिरपि नोपपद्यत इत्याशङ्क्य समाधत्ते । इह
भगवल्लीलाप्रकृतिस्तद्विरुद्धोर्थो विकार इत्युच्यते । तत्र न वर्तते तज्ज्ञानं
५ तादृशं च भवति यत्स्वरूपं प्रति तथा वदति तस्य स्वगेहे तदा भगव-
त्स्थितिज्ञानं न भवतीत्यर्थः । उपलक्षणं चैतदतो यद्देशकालविशिष्टा
यादृशी या लीला तस्यास्तादृश्या एव तल्लीलामध्यपातिनो भक्तस्य ज्ञानं
नान्यविषयकमिति ज्ञेयम् । अत एव द्वितीयस्यापि मह्यं पूर्वमुक्तमासीत्ते-
नागत इत्येव ज्ञानं भवति । तदेव हि रसादयोतो रसस्वरूपमध्यपातित्वा-
१० ल्लीलाया रसस्य च भगवदात्मकत्वाद्भगवद्रूपत्वेन सर्वमुपपद्यते लीलायाम् ।
अत्र प्रमाणमाह । तथाहि स्थितिमाहेति । सर्वमाप्नोति सर्वशः ( छां.
७।२६।२ ) इति श्रुतिरेकस्यैव भक्तस्य सर्वशः सर्वैः प्रकारैः सर्वलीला-
रसमाप्नोतीति वदन्त्युक्तरीत्यैव लीलायां स्थितिमाहेत्यर्थः । अतो वस्त्वे-
वेदमलौकिकमीदृशमिति मन्तव्यं वैदिकैरिति भावः । अलौकिकेर्थे
१५ लौकिकरीत्यनुसरणं न युक्तं किं त्वलौकिकरीत्यनुसरणमेव युक्तमिति
हिशब्देन द्योत्यते । एतेन रसो वै सः ( तै. २।७ ) इति श्रुतेर्लीला-
विशिष्ट एव प्रभुस्तथेति तादृश एव परमफलमिति ज्ञापितं भवति
॥ ४।४।१९ ॥

## दर्शयतश्चैवं प्रत्यक्षानुमाने ॥४।४।२० ॥

न च लौकिकयुक्तिविरोधोत्र बाधकत्वेन मन्तव्यः किंतु साधकत्वेन।
२० यतः प्रत्यक्षानुमाने श्रुतिस्मृती अपि लौकिकयुक्त्यप्रसारेणालौकिके भग-
वत्संबन्धिन्यर्थेन्यथाभावनं निषेधति । नैषा तर्केण मतिरापनेया ( क.
१।२।९ ) । परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च ।
( श्वे. ६।८ ) अलौकिकास्तु ये भावा न तांस्तर्केण योजयेत् ( म. भा.
भी. ५।१२ ) । श्रीभागवते च - न हि विरोध उभयं भवत्यपरिगणितगुण-
गण ईश्वरेनवगाह्यमाहात्म्येर्वाचीनविकल्पवितर्कविचारप्रमाणाभासकुतर्क-

शास्त्रकलिलान्तःकरणाशयदुरवग्रहवादिनां विवादानवसर ( भा. ६।९।३६) इत्यादिवाक्यैरचिन्त्यानन्तशक्तिमत्त्वेन भगवत्स्वरूपस्यैव परमफलत्वं प्रदर्श्यते। किंच। ता वां वास्तून्युष्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरि (ऋ.सं. २।२।२४ ) इति
५ ऋग्वेदे पठ्यते । किंचित्पाठभेदेन यजुःशाखायामपि । ता तानि वास्तूनि वां गोपीमाधवयोः संबन्धीनि गमध्यै प्रसादत्वेन प्राप्तुमुष्मसि कामयामहे तानि कानीत्याकाङ्क्षायां गूढाभिसंधिमुद्घाटयति यत्र श्रीगोकुले गावो भूरिशृङ्गा बहुशृङ्गा रुरुप्रभृतयो वसन्तीति शेषः। ग्राम्यारण्यपशूपलक्षणार्थमुभयोरेव ग्रहणम्। अत्राह भूमावेव तदुरुगायस्य बहुगीयमानस्य वृष्णः
१० भक्तेषु कामान् वर्षतीति वृषा तस्य पदं स्थानं वैकुण्ठं ततोपि परममधिकमत्र विचित्रलीलाकरणात्। भूरि यमुनापुलिननिकुञ्जगोवर्धनादिरूपत्वेन बहुरूपम्। तथा च तत्रत्यानि तानि कामयामह इति वाक्यार्थः संपद्यते। एतेन लीलासंबन्धिवस्तूनां यत्र फलत्वेन बहुरूपप्रार्थनं तत्र तल्लीलाकर्तुः परमफलत्वे किं वाच्यमित्याशयो ज्ञाप्यते। अथ ह वाव तव महिमामृत-
१५ समुद्रविप्रुषा सकृल्लीढया स्वमनसि निष्यन्दमानानवरतसुखेन विस्मारितदृष्टश्रुतसुखलेशाभासाः परमभागवताः (भा. ६।९।३९) इति श्रीभागवते। एतेनापि कैमुतिकन्यायेन प्रभोरेव स्वतः पुरुषार्थत्वं ज्ञाप्यते । फलप्रकरणत्वात्तदेवाचार्यतात्पर्यविषय इति ज्ञायते ॥ ४।४।२० ॥

## भोगमात्रसाम्यलिङ्गाच्च ॥ ४।४।२१ ॥

२० इतोपि हेतोः पुरुषोत्तमस्वरूपमेव परमं फलमिति ज्ञायते । यतः सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता ( तै. २।१ ) इति श्रुतौ भक्तसाम्यमुच्यते। तच्च पुरुषोत्तम एव संभवति। यतः सख्यं दत्त्वा तत्कृतात्मनिवेदनमङ्गीकुर्वन्नतिकरुणः स्वस्वरूपानन्दमनुभावयंस्तं प्रधानीकरोति। अन्यथा भक्तोनुभवितुं न शक्नुयात्। युक्तं चैतत्। प्राप्तं फलं
२५ स्वाधीनं भवत्येवान्यथा फलत्वमेव न स्यात्। तथा चास्माल्लिङ्गादपि

---

21–M om. श्रुतौ after इति ।

प्रभोरेव परमफलत्वं सिध्याति । न तत्समश्चाभ्यधिकश्च दृश्यते ( श्वे. ६।८ ) इति श्रुतिविरोधपरिहाराय मात्रपदम् । न चात्र कामभोगस्य फलत्वं शङ्कनीयम् । आप्नोति परामित्येतद्याकृतिरूपत्वात् स्वरूपानुभवरूपत्वाद् भोगस्य । अनुभूयमानस्यैव हि सुखस्य लोके पुरुषार्थत्वोक्तेः ५ ॥ ४।४।२१ ॥

एवं भगवतः स्वतः पुरुषार्थरूपत्वमुक्त्वा कर्मफलभोगानन्तरमावृत्तिवदत्राप्यावृत्तिर्भविष्यतीत्याशङ्कानिरासायोत्तरं पठति ।

## अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ ४।४।२२ ॥

अनावृत्तिर्भक्तानां ज्ञानिनां चोच्यते । तत्र मानं शब्दः । सच १० तयोर्ध्वमायन्नमृतत्वमेति ( छां. ८।६।६ ) । न तेषां पुनरावृत्तिरेतेन प्रतिपद्यमाना इमं मानवमावर्तं नावर्तन्ते ( छां. ४।१५।६ )। ब्रह्मलोकमभिसंपद्यते । न च पुनरावर्तते ( छां. ८।१५।१ ) इत्यादिरूपस्तु ज्ञानिनां तामाह । न हि भक्तानां नाड्यादिप्रयुक्तममृतत्वम् । तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः । न ज्ञानं न च वैराग्यं प्रायः श्रेयो १५ भवेदिह ( भा. ११।२०।३१ ) इत्यादिवाक्येभ्यः । किंतु यमेवेति श्रुतेर्वरणमात्रलभ्यः पुरुषोत्तमः । एवं सति ब्रह्मविदाप्नोति परम् ( तै. २।१ ) इति श्रुतेर्विरोधपरिहारपूर्वकोक्तव्याख्यानरीत्या भक्तस्य परं ब्रह्म प्राप्तस्य निर्दोषत्वादावृत्तिहेत्वभावात् प्रपञ्चेनावृत्तिः संभवति । तादृशं प्रतीश्वरेच्छापि न तथा भवितुमर्हति । ये दारागारपुत्राप्तप्राणान् वित्तमिमं परम् । २० हित्वा मां शरणं याताः कथं तांस्त्यक्तुमुत्सहे ( भा. ९।४।६५ ) इति भगवद्वाक्यात् परप्राप्तिरूपत्वाच्च भोगस्य न नाशसंभावना । किंच यत्रैकस्यैव भक्तस्य देशकालभेदेनानेकविधलीलासंबन्धित्वेपि तत्तल्लीलासंबन्धित्वमनश्वरमुच्यते तत्र सर्वथा तदभावः कथं वक्तुं शक्यो ब्रह्मणापि। अपरं च । कालसाध्यो हि नश्वरः स्याद् न हि पुरुषोत्तमे २५ कालः प्रभवितुं शक्नोति । न यत्र कालोनिमिषां परः प्रभुः । (भा. २।२।१७)

इत्यादिवाक्येभ्यः । तथा च ज्ञानमार्गीयभक्तिमार्गीययोरनावृत्तौ तुल्यत्वेपि फलप्राप्तौ वैलक्षण्यात् । पूर्ववाक्येन भक्तानामाहानावृत्तिमुत्तरवाक्येन ज्ञानिनामिति ज्ञायते । न च फलप्रकरणान्तेनावृत्त्युक्तेः संसाराभाव एव जीवस्य परमं फलमित्याचार्याभिप्रायो ज्ञायत इति ५ वाच्यम् । ब्रह्मविदः परप्राप्तिं फलत्वेनोक्त्वा तत्स्वरूपस्य सर्वकामभोगत्वेन श्रुत्या निरूपणात् स च स्वस्वाधिकारानुसारेण निवेदितार्थाङ्गीकाररूप एवेति ज्ञेयम् । तेन स एव परमं फलमनावृत्तिस्त्वार्थिकी । परं त्वावृत्तौ संभवत्यां परमफलत्वं नोपपद्यत इति ज्ञानदुर्बलशङ्कानिरासायेयमुक्ता । पुष्टिमार्गीयभक्तविशेषप्रवर्तकनिवर्तकवेणुशब्दाद्भगवन्निकटगतावना-
१० वृत्तिः पूर्वेणोक्ता । मर्यादामार्गीयाणां वेदरूपाच्छब्दात्तदुक्तसाधनादनावृत्तिं द्वितीयेनेत्यपि तात्पर्यविषयः श्लिष्टोर्थो ज्ञेयः । तथा सति परमफलमग्रे स्वत एव भावीति भाव इत्यलं विस्तरेण ॥ ४।४।२२ ॥ ५ ॥

जानीत परमं तत्त्वं यशोदोत्सङ्गलालितम् ।
तदन्यदिति ये प्राहुरासुरांस्तानहो बुधाः ॥ ५८ ॥
१५ नानामतध्वान्तविनाशनक्षमो
वेदान्तहृत्पद्मविकासने पटुः ।
आविष्कृतोयं भुवि भाष्यभास्करो
मुधा बुधा धावत नान्यवर्त्मसु ॥ ५९ ॥
पुरन्दरमदोद्भवप्रचुरवृष्टिसंपीडित-
२० स्वकीयवरगोकुलावनपरायणो लीलया ।
स्मितामृतसुवृष्टिभिः परिपुपोष तान्यो गिरिं
दधार च स एव हि श्रुतिशिरःसु संराजते ॥ ६० ॥

---

15– नानामतेत्यादिश्लोकत्रयं M. A. पुस्तकयोर्नास्ति ( ग्रन्थशरीरे ) ग्रन्थसमाप्त्यनन्तरं तु M. पुस्तके श्लोकद्वयं A पुस्तके श्लोकत्रयं च वर्तते । प्रकाशव्याख्याकृता तु व्याख्याताः सर्वे श्लोकाः ।
D पुस्तकेपि ग्रन्थाद्बहिरेवेमौ श्लोकौ ।

16–C reads सिद्धान्त for हृत्पद्म ।

श्रीकृष्णकृपयैवायं सिद्धान्तो हृदि भासते ।
तेनाधिकं वरीवर्ति न वक्तव्यं हरेर्नृणाम् ॥ ६१ ॥
भाष्यपुष्पाञ्जलिः श्रीमदाचार्यचरणाम्बुजे ।
निवेदितस्तेन तुष्टा भवन्तु मयि ते सदा ॥ ६२ ॥

५ इति श्रीमद्वेदव्यासमतवर्तिश्रीवल्लभाचार्यविरचिते ब्रह्मसूत्राणुभाष्ये चतुर्थाध्यायस्य चतुर्थः पादः ॥ ४।४ ॥

समाप्तश्चतुर्थोऽध्यायः ॥

## श्रीमद्वल्लभाचार्यकारिकाः ।



## ॥ श्रीमद्विट्ठलेश्वरकारिकाः ॥



॥ आचार्याणां कारिकाः समाप्ताः ॥



श्रीः

# अधिकरणानां सूचीपत्रम् ।

# श्रीमद्वाल्लभभाष्यापाठानुसारतः श्रीमद्बादरायणप्रणीत-ब्रह्मसूत्राणां वर्णानुक्रमः ।

—○○○○○—

# श्रीमदणुभाष्योद्धृतानां प्रमाणवाक्यानां सूचीपत्रम् ।

[ सर्वत्र पृष्ठाङ्काः निर्दिष्टाः ]

### अथर्वब्रह्मसूक्तम् ।



### अथर्ववेदः ।



### आदित्यहृदयम् ।



### आपस्तम्बधर्मसूत्रम् ।



### आपस्तम्बश्रौतसूत्रम् ।



### ईशावास्यम् ।



### ऋक्संहिता ।



### ऐतरेयोपनिषद् ।



### ऐतरेयब्राह्मणम् ।



### कठोपनिषद् ।

## कालाग्निरुद्रोपनिषद् ।



## केनोपनिषद् ।



## कौषीतक्युपनिषत् ।

## गोपालपूर्वतापनीयोपनिषत् ।



## गोपालोत्तरतापनीयोपनिषत् ।



## गौतमसूत्रम् ।



## छान्दोग्योपनिषद् ।

## जाबालोपनिषद् ।



## जैमिनीयसूत्रम् ।



## तैत्तिरीयारण्यकम् ।



## तैत्तिरीयोपनिषत् ।

## तैत्तिरीयब्राह्मणम् ।



## तैत्तिरीयसंहिता

## ताण्ड्यब्राह्मणम् ।



## नारायणोपनिषद् ।



## निरुक्तम् ।



## नृसिंहपूर्वतापनीयोपनिषद् ।



## नृसिंहोत्तरतापनीयोपनिषद् ।



## पद्मपुराणम् ।



## पाणिनीयधातुपाठः ।



## पाणिनीयशिक्षा ।



## पाणिनीयसूत्रम् ।



## पाराशरस्मृतिः ।



## प्रश्नोपनिषद् ।

### बृहदारण्यकोपनिषद् ।

### बृहज्जाबालशाखा ।



### बृहदारण्यकवाजसनेयी-शाखासतान्नब्राह्मणम् ।



### ब्रह्मबिन्दूपनिषद् ।



### ब्रह्मोपनिषद् ।



### ब्रह्मसूत्रम् ।



### भगवद्गीता ।

**भागवतम् ।**

## मनुस्मृतिः ।



## महानारायणोपनिषत्



## महाभारतम्



## मत्स्यपुराणम् ।



## मार्कण्डेयपुराणं देवीमाहात्म्यम् ।



## मुण्डकोपनिषद् ।

## मैत्रेय्युपनिषद् ।



## याज्ञवल्क्यस्मृतिः ।



## योगसूत्रम् ।



## रामोत्तरतापनीयोपनिषत् ।



## वराहपुराणम् ।



## वसिष्ठस्मृतिः ।



## शतपथब्राह्मणम् ।



## शुक्लयजुर्वेदसंहिता ।

## श्वेताश्वतरोपनिषद् ।



## सर्वसारोपनिषत् ।



## सांख्यकारिका ।



## अनिर्दिष्टस्थलानि वाक्यानि ।

# श्रीमदणुभाष्यकृद्भिर्नामग्राहं निर्दिष्टा ग्रन्था ग्रन्थकृतश्च ।



### ग्रन्थाः ।

अथर्वाङ्गिरसम् ।
आथर्वणोपनिषत् ।
उपाख्यानश्रुतिः ।
उपनिषदः ।
ऋक्शाखा ।
ऐतरेयकम् ।
कठवल्ली ।
कौषीतकिब्राह्मणोपनिषत् ।
गार्गीब्राह्मणम् ।
छान्दोग्यम् ।
ज्योतिर्ब्राह्मणाः ।
तैत्तिरीयकम् ।
दशमस्कन्धनिवृत्तिः ।
पञ्चरात्रम् ।
पुरुषसूक्तम् ।
बृहदारण्यकम् ।
ब्राह्मणम् ।
भक्तिहंसः ।
भगवद्गीता ।
भार्गवीविद्या ।
मुण्डकम् ।
मैत्रेयीब्राह्मणम् ।
रसशाखम् ।
राणायनीयानां खिलानि ।
विद्वन्मण्डनम् ।
श्रीभागवतम् ।
श्वेताश्वतरोपनिषत् ।

### ग्रन्थकृतः ।

मार्कण्डेयः ।
वेदव्यासः (व्यासः) ।
श्रीविठ्ठलः ।

## BOMBAY SANSKRIT AND PRAKRIT SERIES.

*Edited under the supervision of the Publication Department of the Bhandarkar Oriental Research Institute, Poona.*

:o:

| | | Rs | As. |
|---|---|---|---|
| o. I | Pañcatantra, Book IV and V, edited with Notes by Dr. G. Bühler ... ... ... | 0 | 4 |
| o. II | Nāgojibhaṭṭa's Paribhāsenduśekhara, Part I, Sanskrit Text and Various Readings, edited by Dr. F. Kielhorn (*out of Stock*) ... ... | ... | |
| o. III | Pañcatantra Books II, and III, edited with Notes by Dr. G. Bühler ... ... ... | 0 | 4 |
| o. IV | Pañcatantra, Book I, edited with Notes by Dr. F. Kielhorn ... ... ... | 0 | 6 |
| o. V | Raghuvaṁśa of Kālidāsa, with the Commentary of Mallinātha, Part I (Cantos 1-VI), edited with Notes by Mr. S. P. Pandit, M. A. ... | 1 | 8 |
| o. VI | Mālavikāgnimitra of Kālidāsa, edited with Notes by Mr. S. P. Pandit, M. A., 2nd edition (*out of stock*) ... ... ... ... | ... | |
| o. VII | Nāgojibhaṭṭa's Paribhāsenduśekhara, Part IIA, Paribhāṣās 1-37), Translation and Notes, by Dr. F. Kielhorn ... ... ... | 0 | 8 |
| o. VIII | Raghuvaṁśa of Kālidāsa, with the Commentary of Mallinātha, Part II (Cantos VII-XIII) edited with Notes, by Mr. S. P. Pandit, M. A.(*out of stock*) ... ... ... | ... | |
| o. IX | Nāgojibhaṭṭa's Paribhāsenduśekhara, Part IIB, (Paribhāṣās 38-69), Translation and notes, by Dr. F. Kielhorn ... ... ... | 0 | 8 |
| o. X | Daśakumāracarita of Daṇḍin, Part I by Dr. Bühler, and Part II by Dr. Peterson, re-edited with Notes in one Volume, by G. J. Agashe ... | 4 | 6 |
| o. XI | Nītiśataka and Vairāgyaśataka of Bhartṛhari, edited with Notes by Justice K. T. Telang, M.A. (*copy-right restored to the editor*) ... ... | ... | |
| o. XII | Nāgojibhaṭṭa's Paribhāsenduśekhara, Part IIC, (Paribhāṣās 70-122), Translation and Notes, by Dr. F. Kielhorn ... ... ... | 0 | 8 |

| | Rs. | As. |
|---|---|---|
| No. XIII Raghuvaṁśa of Kālidāsa, with the Commentary of Mallinātha, Part III ( Cantos XIV-XIX ) edited with Notes, by Mr. S. P. Pandit, M. A. ( *out of stock* ) ... ... ... | ... | |
| No. XIV Vikramāṅkadevacarita of Bilhaṇa, edited by Dr. G. Bühler (*copy-right restored to the editor*) | ... | |
| No. XV Mālatī-Mādhava, with the Commentary of Jagaddhara, edited with Critical Notes, etc. by Dr. R. G. Bhandarkar, *Second edition* ... | 4 | 4 |
| No. XVI Vikramorvaśīya of Kālidāsa, with Notes, by S. P. Pandit, M. A., *Third edition* ... | 2 | 0 |
| No. XVII Hemacandra's Deśīnāmamālā, Part I, by Prof. Pischel and Dr. Bühler, *Under revision* ... | ... | |
| No. XVIII* Vyākaraṇa-Mahābhāṣya of Patañjali, Vol. I, Part I, by Dr. F. Kielhorn, *Second edition* ... | 1 | 8 |
| No. XIX* Vyākaraṇa-Mahābhāṣya of Patañjali, Vol. I, Part II, by Dr. F. Kielhorn, *Second edition* ... | 1 | 8 |
| No. XX* Vyākaraṇa-Mahābhāṣya of Patañjali, Vol. I, Part III, by Dr. F. Kielhorn, *Second edition* ... | 1 | 8 |
| No. XXI† Vyākaraṇa-Mahābhāṣya of Patañjali, Vol. II, Part I, by Dr. F. Kielhorn, *Second edition* ... | 3 | 0 |
| No. XXII† Vyākaraṇa-Mahābhāṣya of Patañjali, Vol. II, Part II, by Dr. F. Kielhron, *Second edition* ... | 3 | 0 |
| No. XXIII Vāsiṣṭha-Dharmaśāstra, edited with Notes by Dr. A. A. Führer, *Second edition* ... ... | 0 | 12 |
| No. XXIV Kādambarī by Bāṇa and his Son, Vol. I, Text, Vol. II, Notes and Introduction, by Dr. P. Peterson, Vol. II, *out of stock*, Vol. I, Rs. 2; *both together* ... ... ... ... | 5 | 8 |
| No. XXV Kīrtikaumudī, edited with Notes, by Prof. A. V. Kathawate (*copy-right restored to the editor*) | ... | |
| No. XXVI† Vyākaraṇa-Mahābhāṣya of Patañjali, Vol. II, Part III, by Dr. F. Kielhorn, *Second edition* ... | 3 | 0 |
| No. XXVII Mudrārākṣasa of Viśākhadatta, with the Commentary of Dhuṇḍirāja, edited with Notes by Justice K. T. Telang, M. A. ( *copy-right restored to the editor* ) ... ... ... | ... | |

* Nos, 18, 19 and 20 are bound together in one volume, the whole volume being priced Rs. 4-8.

† Nos. 21, 22 and 26 are bound together in one volume, the whole volume being priced Rs. 9.

Rs. As.

No. XXVIII* Vyākaraṇa-Mahābhāṣya of Patañjali, Vol. III, Part I, by Dr. F. Kielhorn, *Second edition* ... ... ... 3 0

No. XXIX* Vyākaraṇa-Mahābhāṣya of Patañjali, Vol. III, Part II, by Dr. F. Kielhorn, *Second edition* ... ... ... ... 3 0

No. XXX* Vyākaraṇa-Mahābhāṣya of Patañjali, Vol. III, Part III, by Dr. F. Kielhorn, *Second edition* 3 0

No. XXXI Subhāṣitāvali of Vallabhadeva, edited by Dr. P. Peterson and Pandit Durgaprasad ... 2 8

No. XXXII Tarkakaumudī of Laugākṣi Bhāskara, edited by Mr. M. N. Dvivedi ( *copy-right restored to the editor* ) ... ... ... ... ...

No. XXXIII Hitopadeśa of Nārāyana, edited by Dr. P. Peterson ... ... ... ... 0 14

No. XXXIV Gaüḍavaho of Vākpati, edited by Mr. S. P. Pandit, M. A. ( *under revision* ) ... ...

No. XXXV Mahānārāyaṇa Upaniṣad, edited by Col. G. A. Jacob ... ... ... ... 0 7

No. XXXVI Selections of Hymns from the Ṛgveda (First Series) By Dr. P. Peterson, ( *Fourth edition* ) ... ... ... ... 2 0

No. XXXVII Sārṅgadharapaddhati, Vol. I, edited by Dr. P. Peterson ... ... ... ...

No. XXXVIII Naiṣkarmyasiddhi, by Col. G. A. Jacob ( *under revision*) ... ... ... ...

No. XXXIX Concordance to the Principal Upaniṣads and the Bhagavadgītā, by Col. G. A. Jacob ... 4 0

No. XL Eleven Atharvaṇa Upaniṣads, with Dīpikās, edited by Col. G. A. Jacob, *Second edition* ... 1 8

No. XLI Handbook to the study of Ṛgveda, Part I, comprising Sāyaṇa's Introduction to his Ṛgveda-bhāṣya, with English Translation, by Dr. P. Peterson (*under revision*) ... ... ... ...

No. XLII† Daśakumāracarita of Daṇḍin, Part II, by Dr. P. Peterson ... ... ... ...

No. XLIII Handbook to the Study of Ṛgveda, Part II, Comprising the Seventh Maṇḍala of Ṛigveda with the Bhāṣya of Sāyaṇa ... ... 2 8

* Nos. 28, 29 and 30 are bound together in one volume, the whole volume being priced Rs. 9.

† See above, No. X.

| | Rs. | As. |
|---|---|---|
| LVIII Selections of Hymns from the Ṛgveda ( Second Series ), by Dr. P. Peterson ( *under revision* ) ... ... ... ... | ... | |
| LIX Parāśara's Dharma-Saṁhitā, with the Commentary of Sāyaṇa-Mādhavācārya Vol. II, Part I, by Mr. Vaman Shastri Islampurkar ... | 4 | 0 |
| LX Kumārapālacarita of Hemacandra (in Prākrit) by Mr. S. P. Pandit, M. A. ... ... | 8 | 8 |
| LXI Rekhāgaṇita, Vol. I, by Messrs. H. H. Dhruva and K. P. Trivedi ... ... ... | 12 | 0 |
| LXII Rekhāgaṇita, Vol. II, by Messrs. H. H. Dhruva and K. P. Trivedi ... ... | 9 | 0 |
| LXIII Ekāvali of Vidyādhara, with Mallinātha's Commentary, edited by Rao Bahadur K. P. Trivedi ... ... ... ... | 14 | 0 |
| LXIV Parāśara's Dharma-Saṁhitā, with the Commentary of Sāyaṇa-Mādhavācārya, Vol. II, Part II, by Mr. Vaman Shastri Islampurkar ... | 5 | 0 |
| LXV Pratāparudra-yaśobhūṣaṇa of Vidyānātha, with Commentary, Ratnāpaṇa, of Kumārsvāmin, edited by Rao Bahadur K. P. Trivedi ... | 11 | 0 |
| LXVI Harṣacarita of Bāṇa, Part I, Text with Commentary, Saṁketa, edited by Dr. A. A. Führer ... ... ... ... | 2 | 0 |
| LXVII Parāśara's Dharma-Saṁhitā, with the Commentary of Sāyaṇa-Mādhavācārya, Vol. III, Part I, by Mr. Vaman Shastri Islampurkar ... | 4 | 0 |
| LXVIII Śrībhāṣya of Rāmānuja, Vol. I, Text, edited by Mr. Vasudev Shastri Abhyankar ... | 11 | 0 |
| LXIX Dvyāśrayakāvya of Hemacandra, Vol. I, ( Cantos I—X ) by Prof. A. V. Kathawate ... | 9 | 0 |
| LXX Vaiyākaraṇabhūṣaṇa of Koṇḍabhaṭṭa, with the Vaiyākaraṇabhūṣaṇasāra and the Commentary Kāśika of Harirāma, edited with Notes, by K. P. Trivedi ... ... ... ... | 10 | 0 |
| LXXI Ṣaḍbhāṣācandrikā of Lakṣmīdhara, with Introduction, Notes etc., by Rao Bahadur K. P. Trivedi ... ... ... | 7 | 8 |
| LXXII Śrībhāṣya of Rāmānuja, Vol. II, Sanskrit Notes by Mr. Vasudev Shastri Abhyankar ... | 6 | 8 |

# THE SAME LIST ABRIDGED AND ARRANGED ALPHABETICALLY.

( *For fuller details see the earlier list.* )

| | Rs. | As. |
|---|---|---|
| Aitareya-Brāhmaṇa, Word-index to—, by Viswanath Balkrishna Joshi ( out of Series ) ... ... | 4 | 0 |
| Amarakośa with Maheśvara's Commentary, by Ramchandra Shaṣtri Talekar, ( out of Series ) ... | 0 | 6 |
| Aṇubhāṣya of Vallabha, with Commentary, by Shridhar Shastri Pathak, Part I ... ... | 3 | 4 |
| Āpastamba-Dharmasūtra, Part I, by Bühler, (No. 44) | 1 | 3 |
| Āpastamba-Dharmasūtra, Part II, by Bühler, ( No. 50) | 0 | 2 |
| Atharvaveda-Saṁhitā with Sāyaṇa-bhāṣya, four volumes, by S. P. Pandit, ( out of Series) ... | 40 | 0 |
| Ātharvaṇa Upaniṣads, eleven, with Dīpikās, by G. A. Jacob, ( No. 40 ) ... ... ... | 1 | 8 |
| Bhaṭṭikāvya with Mallinātha's Commentary, Part I, by K. P. Trivedi, ( No. 56 ) ... ... | 9 | 0 |
| Bhaṭṭikāvya with Mallinātha's Commentary, Part II, by K. P. Trivedi, ( No. 57 ) ... ... | 6 | 0 |
| Concordance to the Principal Upaniṣads and the Bhagavadgītā, by G. A. Jacob, ( No. 39 ) ... | 4 | 0 |
| Daśakumāracarita, Part I, by G. Bühler, ( No. 10 ) and Part II, by P. Peterson ( No. 42 ), both together ... ... ... ... | 4 | 6 |
| Deśī-nāmamālā, Part I, by Pischel and Bühler ( No. 17 )... ... ... ... ... | ... | |
| Dvyāśrayakāvya, Part I, by A. V. Kathawate, (No. 69) | 9 | 0 |
| Dvyāśrayakāvya, Part II, by A. V. Kathawate (No. 76) | 9 | 0 |
| Ekāvali, with Commentary, by K. P. Trivedi, (No.63) | 14 | 0 |
| Gaüḍavaho, by S. P. Pandit ( No. 34 ) ... ... | ... | |
| Handbook to the Study of Ṛgveda, Part I, by P. Peterson (No. 41) ... ... ... | ... | |
| Handbook to the Study of Ṛgveda, Part II, by P. Peterson ( No. 43 ) ... ... ... | 2 | 8 |
| Harṣacarita, with Commentary, by Führer ( No. 66) ... | 2 | 0 |
| Hitopadeśa, by P. Peterson ( No. 33 ) ... ... | 0 | 14 |
| Hymns from Ṛgveda, Selection of, ( First Series ) by Peterson ( No. 36 ) ... ... ... | 2 | 0 |
| Hymns from Ṛgveda, Selection of, (Second Series) by Peterson, (No. 58) ... ... ... | ... | |

| | Rs. | As. |
|---|---|---|
| No. XLIV Āpastamba-Dharmasūtra, with the Commentary of the Hiraṇyakeśin Part I, by Dr. G. Bühler (*under revision*) ... ... ... | ... | |
| No. XLV Rājataraṅgiṇī of Kalhaṇa, Part I, (Cantos I to VII ) by Pandit Durgaprasad ... ... | 1 | 8 |
| No. XLVI Patañjali's Yogasūtra, with the Scholia of Vyāsa, and the Commentary of Vācaspati, and the Vṛtti of Nāgojibhaṭṭa, by Rajaram Shastri Bodas and Vasudeo Shastri Abhyankar ( *Second edition* ) ... ... ... ... | 3 | 8 |
| No. XLVII Parāśara's Dharma-Saṁhitā, with the Commentary of Sāyaṇa-Mādhavācārya, Vol. I, Part I, by Mr. Vaman Shastri Islampurkar ... | 2 | 2 |
| No. XLVIII Parāśara's Dharma-Saṁhitā, with the Commentary of Sāyaṇa-Mādhavācārya, Vol. I, Part II, by Mr. Vama Shastri Islampurkar ... | 2 | 0 |
| No. XLIX Nyāyakośa by Mahāmahopādhyāya Bhimacharya Jhalkikar, ( *under revision* ) ... ... | ... | |
| No. L Āpastamba-Dharmasūtra, with the Commentary of Hiraṇyakeśin Part II, by Dr. Bühler ( *under revision* ) ... ... ... ... | ... | |
| No. LI Rājataraṅgiṇī of Kalhaṇa, Vol. II, (Canto VIII) by Pandit Durgaprasad ( *under revision* ) ... | ... | |
| No. LII Mṛcchakaṭika, Vol. I, Text with two Commentaries and Various Readings, by Mr. N. B. Godbole ... ... ... ... | 3 | 8 |
| No. LIII Navasāhasāṅkacarita, Part I, by Mr. Vaman Shastri Islampurkar ... ... ... | 1 | 10 |
| No. LIV Rājataraṅgiṇī of Kalhaṇa, Vol. III, containing the Suppliments to the work, by Dr. P. Peterson (*under revision*) ... ... ... | ... | |
| No. LV Tarkasaṁgraha of Annambhaṭṭa, with Dīpikā and Nyāyabodhinī, edited with Notes by Mr. Y. V. Athalye and M. R. Bodas ( *Second edition* ) ... | 3 | 0 |
| No. LVI Bhaṭṭikāvya, edited with the Commentary of Mallinātha, Vol. I, by Rao Bahadur K. P. Trivedi ... ... ... ... | 9 | 0 |
| No. LVII Bhaṭṭikāvya, edited with the Commentary of Mallinātha, Vol. II, by Rao Bahadur K. P. Trivedi ... ... ... ... | 6 | 0 |

## ११ ज्ञोत एवेत्यधिकरणम् ।

गुणान्निरूपयन्प्रथमतश्चैतन्यगुणमाह ।

### ज्ञोत एव ॥ २।३।१८ ॥

ज्ञश्चैतन्यस्वरूपः ।अत एव श्रुतिभ्यो विज्ञानमय इत्यादिभ्यः ।
५ सर्वविप्लववादी ब्रह्मवाक्यान्युदाहृत्य सूत्रोक्तसिद्धान्तमन्यथाकृत्य श्रुतिसूत्रोल्लङ्घनेन प्रगल्भते । स वक्तव्यः । किं जीवस्य ब्रह्मत्वं प्रतिपाद्यते जीवत्वं वा निराक्रियत इति । आद्य इष्टापत्तिः । न हि विस्फुलिङ्गोऽन्यंशो भूत्वा नाग्निः । द्वितीये स्वरूपनाशः । जीवत्वं कल्पितमिति चेन्न। अनेन जीवेनात्मना ( छां. ६।३।२ ) इतिश्रुतिविरोधात् । न नानादिरयं
१० जीवब्रह्माविभागो बुद्धिकृतः । प्रमाणाभावात् । सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ( छां. ६।२।१) इति श्रुतिविरोधश्च । न च जीवातिरिक्तं ब्रह्म नास्ति । सर्वश्रुतिसूत्रनाशप्रसंगात् । यः सर्वज्ञः सर्वशक्तिः । अयमात्मापहतमाप्मा ( छां. ८।१।५ ) अधिकं तु भेदनिर्देशात् ( ब्र. सू. २।१।२२ ) इत्यादिबाधः । तस्मात् सदंशस्य तद्व्यपदेशवाक्यमात्रं
१५ स्वीकृत्य शिष्टपरिग्रहार्थमाध्यमिकस्यैवायमपरावतारो नितरां सद्भिरुपेक्ष्यः ॥ २।३।१८ ॥ ११ ॥

---

## १२ उत्क्रान्तिगत्यागतीनामित्यधिकरणम् ।

### उत्क्रान्तिगत्यागतीनाम् ॥ २।३।१९ ॥

अत एवेति वर्तते । स यदास्माच्छरीराडुत्क्रामति स हैवैतैः सर्वै-
२० रुत्क्रामति । ये के चास्माल्लोकात्प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ति ( कौ. ३।३ ) इति । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे । श्रुत्युक्तानामुत्क्रान्तिगत्यागतीनां श्रवणाद्यथायोग्यं तस्य परिमाणमङ्गीकर्तव्यम् यद्यपि—आराग्रमात्रो ह्यपरोपि दृष्टः ( श्वे. ५।८) इतिश्रुत्यैव परिमाणमुक्तं

---

14—A and C read सदंशस्य for सदंशस्य ।

एव जीवश्चैतन्यमात्रं शरीरादिसंघाते प्रविष्ट इति चिति तन्मात्रेण प्रवेशो च मोक्ष इति औडुलोमिराचार्यः । काशकृत्स्नस्त्वासक्त्या विषयभोक्तृरूपं भगवत एव जीव इति तेपि स्वमतानुसारेणात्र परिहरन्ति । तत्र पुत्रादिप्रियसहवचनाज्जीवप्रकरणमेवैतदित्याशङ्क्य जीवोपक्रमस्यान्यत्प्रयोजनमित्याह । प्रतिज्ञासिद्धेरिति षष्ठी । तस्या लिङ्गमंशत्वाज्जीवस्य तदभेदेनोपक्रमः प्रतिज्ञासिद्धेर्लिङ्गं भवति । एकविज्ञानेन सर्वविज्ञानं प्रतिज्ञा ।

तस्यैवाग्रे व्युत्पाद्यमानत्वात्तस्या एतत्साधकम् । यथा जीवो भगवानेवं जड इति । एवमाश्मरथ्यो मन्यते । श्रोतव्यादिविषयस्तु भगवानेव । तस्मान्नियतधर्मजीववादेपि न जीवोपक्रमो दोषः ॥ १।४।२० ॥

## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥ १।४।२१ ॥

लिङ्गमित्यनुवर्तते । यदत्र जीवोपक्रमेण भगवतः श्रवणादिकमुक्तं तत्संसारभावादुत्क्रमिष्यतो जीवस्य लिङ्गम् । मुक्तौ जीवो भगवानेव भविष्यतीति ज्ञापकम् । अन्यथा सैव कथममृता भवेत् । इतिशब्दो हेतौ । स्त्रिया विश्वासार्थं गौणप्रियवैराग्यार्थं च जीवोपक्रमः कर्तव्य एवेत्यौडुलोमिराचार्यो मन्यते तस्माद् भिन्नजीवपक्षेपि नात्र दूषणम् ॥ १।४।२१ ॥

## अवस्थितेरिति काशकृत्स्नः ॥ १।४।२२ ॥

लिङ्गमित्येव । भगवत एवावस्था जीव इति । अतः संसारदशायामपि जीवो ब्रह्मेति नात्रोत्क्रमणमुपचारो वा । अन्यथा कथमात्मनस्तु कामाय सर्वं प्रियं भवतीति । न ह्यन्यस्य सर्वं प्रियं भवति । मोक्षस्तु ज्ञानमेव । उत्तरत्र कर्तव्याभावात् । अवस्थया व्यवसायात् सिद्धान्ताद्विशेषः । इतिशब्देनैतावदरे खल्वमृतत्वमित्युपसंहारो हेतुरस्य पक्षस्येति काशकृत्स्नो मन्यते । तस्माज्जीवोपक्रमो भगवत एवावस्थाविशेषो जीव इत्यस्य पक्षस्य लिङ्गम् । तस्मान्मैत्रेयीब्राह्मणेनापि जीवद्वारा प्रकृतिकारणवादासिद्धिरिति सिद्धम् ॥ १।४।२२ ॥ ७ ॥

---

23-B om. पक्षस्य before लिङ्गम् ।

एवं प्रकृतिकारणवादनिराकरणेन ब्रह्मण एव कारणत्वे सिद्धे-ऽप्यर्धजरतीयतयोभयस्थापनपक्षं परिहर्तुमधिकरणमारभते ।

## ८ प्रकृतिश्चेत्यधिकरणम् ।

## प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ॥ १।४।२३ ॥

५ ननु ब्रह्मकारणतां न निराकुर्मः श्रुतिसिद्धत्वात् । किंतु समवायिकारणं प्रकृतिरेव । कार्यकारणयोरवैलक्षण्यात् । समवायिकारणानुरोधि हि कार्यम् । अन्यत्सर्वं भगवानस्तु । अपेक्ष्यते च समवायिनिमित्तयोर्भेदः। कर्मण्यपि श्रुतिस्मृतिसमवायो धर्मे । एवं ब्रह्मवादेपि स्मृत्युक्ता प्रकृतिः संमवायि कारणम् । ब्रह्म निमित्तकारणमित्येवं प्राप्ते । उच्यते । प्रकृतिश्च ।
१० निमित्तकारणं समवायिकारणं च ब्रह्मैव । प्रकृतिपदप्रयोगात्स्मृतिसिद्धतृतीयसर्वधर्मापदेशः । चकारात् यश्चेत्यादिसर्वसंग्रहः । कुत एतत् । प्रतिज्ञादृष्टान्तानुपरोधात् । प्रतिज्ञा—अपि वा तमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतं भवत्यविज्ञातं विज्ञातं भवति ( छां. ६।१।२ ) इति । दृष्टान्तो—यथैकेन मृत्पिण्डेन सर्वं मृण्मयं विज्ञातं स्यात् ( छां. ६।१।४ ) इत्यादि ।
१५ प्रतिज्ञादृष्टान्तयोरनुपरोधोबाधनं तस्मात् । समवायिकारणज्ञाने हि कार्यज्ञानम् । उभयोर्ग्रहणमुपचारव्यावृत्त्यर्थम् । उपक्रमोपसंहारवत् । प्रतिज्ञामात्रत्वेदृष्टद्वारापि भवेत् । दृष्टान्तमात्रत्वे त्वनुमानविषया स्यात् तथा सति सर्वसमानधर्मवद् ब्रह्म स्यान्न समवायिकारणम् । उभयोर्ग्रहणे तु प्रतिज्ञाया दृष्टमेव द्वारमिति समवायित्वसिद्धिः । कार्यकारणयोर्भेदाभेदमतनि-
२० राकरणाय पिण्डमणिनखनिकृन्तनग्रहणम् ॥

तथा सति यत्र क्वचिद् भगवाञ्ज्ञातः सर्वत्र ज्ञातो भवति । सर्वं च ज्ञातं भवतीति सामान्यलक्षणप्रत्यासत्तिनिराकरणाय च—वाचारम्भणं विकारो नामधेयम् ( छां. ६।१।४ ) इति ।

अलीकत्वानिराकरणाय च मृत्तिकेत्येव । ब्रह्मत्वेनैव जगतः सत्यत्वं
२५ नान्यथेति । सामान्यलक्षणप्रत्यासत्तिनिराकरणं च स्पष्टमेवाग्रे त्रीणि

---

19—क reads समवायत्वसिद्धिरिति for समवायित्वसिद्धिः ।

| | Rs. | As. |
|---|---|---|
| No. LXXIII Nirukta of Yāska, with Durgācārya's Commentary, Vol. I, by Professor H. M. Bhadkamkar ... ... ... ... | 9 | 8 |
| No. LXXIV Parāśara's Dharma-Saṁhitā, with the Commentary of Sāyaṇa-Mādhavācārya Vol. III, Part II, by Vaman Shastri Islampurkar ... | 5 | 8 |
| No. LXXV Kāvyādarśa of Daṇḍin with a new Commentary, edited with Notes by Prof. S. K. Belvalkar and Rangacharya Raddi Shastri, Parts I and II published, Part III in Press ; The published Parts together ... ... ... | 4 | 4 |
| No. LXXVI Dvyāśrayakāvya of Hemacandra with the Commentary of Abhayatilakagaṇi, Vol. II, ( Cantos XI—XX ) by Prof. A. V. Kathawate ... | 9 | 0 |
| No. LXXVII Aṇubhāṣya of Vallabhācārya, edited with an original Sanskrit Commentary by Pandit Shridhar Shastri Pathak, Part I, Text ... | 3 | 4 |

## WORKS OUT OF SERIES.

| | | |
|---|---|---|
| Aitareya Brāhmaṇa, Word-index to—, compiled by Pandit Vishwanath Balkrishna Joshi ... | 4 | 0 |
| Amarakośa with Maheśvara's Commentary, edited, with an Index, by Mr. Ramchandra Shastri Talekar | 0 | 13 |
| Atharvaveda Saṁhitā, with the Commentary of Sāyaṇācārya, edited by Mr. S. P. Pandit, *Four volumes, at Rs. 10 each* ... ... | 40 | 0 |
| Kāvyaprakāśa*, edited by Vamanacharya Jhalkikar with his own Commentary, *Fourth edition* ... | 6 | 0 |
| Vendidad, *Complete in two volumes* ... ... | 5 | 0 |

| | | |
|---|---|---|
| * Kāvyaprakāśa, Ullāsas I and II ( available separately ) ... | 0 | 10 |
| Kāvyaprakāśa, Ullāsas I, II, and X with Jhalkikar's Sanskrit Introduction ( available separately) ... ... | 3 | 0 |

| | Rs. | As. |
|---|---|---|
| Kādambarī, Vol. I, Text and Vol. II, Notes and Introduction, by Dr. Peterson, ( No. 24 ) ... | 6 | 6 |
| Kāvyaprakāśa,* with a Commentary, by Vamanacharya Jhalkikar ( out of Series ) ... ... | 6 | 0 |
| Kāvyādarśa with Commentary, Notes, etc. by S. K. Belvalkar and Raddi Shastri, Parts 1 and 2 (*Part 3 in Press*) ... ... ... ... | 4 | 4 |
| Kīrtikaumudī, by A. V. Kathawate, ( No. 25 ) ... | ... | |
| Kumārapālacarita, by S. P. Pandit, ( No. 60 ) ... | 8 | 8 |
| Mṛcchakaṭika, Vol. I, by N. B. Godbole ( No. 52 ) ... | 3 | 8 |
| Mālavikāgnimitra, by S. P. Pandit, ( No. 6 ) ... | ... | |
| Mālatī-Mādhava, by R. G. Bhandarkar, ( No. 15 ) ... | 4 | 4 |
| Mahābhāṣya, Vyākaraṇa—, of Patañjali, Vol. I, Parts I, II, and III together (Nos. 18, 19, 20) ... | 4 | 8 |
| Māhābhāṣya, Vyākaraṇa—, of Patañjali, Vol. II, Parts I, II, and III together ( Nos. 21, 22, 26 ) ... | 9 | 0 |
| Māhābhāṣya, Vyākaraṇa—, of Patañjali, Vol. III, Parts I, II, and III together ( Nos. 28, 29, 30 ) ... | 9 | 0 |
| Mudrārākṣasa, by K. T. Telang, ( No. 27 ) ... | ... | |
| Mahānārāyaṇa Upaniṣad, by G. A. Jacob ( No. 35 ) ... | 0 | 7 |
| Naiṣkarmyasiddhi by G. A. Jacob, ( No. 38 ) ... | 2 | 8 |
| Navasāhasāṅkacarita Part I, by Vaman Shastri Islampurkar, ( No 53 ) ... ... ... | 1 | 10 |
| Nīrukta of Yāska, with Durga's Commentary, Vol I, by H. M. Bhadkamkar.... ... ... | 9 | 8 |
| Nīti and Vairāgya Śatakas, by K. T. Telang, ( No. 11 ) | ... | |
| Nyāyakośa, by Bhimacharya Jhalkikar, ( No. 49 ) ... | ... | |
| Pañcatantra, Book I, by F. Kielhorn, ( No. 4 ) ... | 0 | 6 |
| Pañcatantra Books II and III, by G. Bühler, ( No. 3 )... | 0 | 4 |
| Pañcatantra, Books IV and V by G. Bühler, ( No. 1 )... | 0 | 4 |
| Parāśara Dharma-Saṁhitā, Vol. I, Part I, by Vaman Shastri Islampurkar, ( No. 47 ) ... ... | 2 | 2 |
| Parāśara Dharma-Saṁhitā Vol. I, Part II, by Vaman Shastri Islampurkar, ( No. 48 ) ... ... | 2 | 0 |
| Parāśara Dharma-Saṁhitā Vol. II, Part I, by Vaman Shastri Islampurkar, ( No. 59 ) ... ... | 4 | 0 |
| Parāśara Dharma-Saṁhitā, Vol. II, Part II, by Vaman Shastri Islampurkar, ( No. 64 ) ... ... | 5 | 0 |

* Kāvyaprakāśa, Ullāsas I and II (available separately) ... 0 10
Kāvyaprakāsa, Ullāsas I, II, and X with Jhalkikar's Sanskrit Introduction (available separately) ... ... ... 3 0

Parāśara Dharma-Saṁhitā, Vol. III. Part I, by Vaman Shastri Islampurkar, ( No. 67 ) ... ... 4 0
Parāśara Dharma-Saṁhitā, Vol. III, Part II, by Vaman Shastri Islampurkar, ( No. 74 ) ... ... 5 8
Paribhāṣenduśekhara, Part I, by Kielhorn, (No. 2) ... ...
Paribhāṣenduśekhara, Part II A, by Kielhorn, (No.7)... 0 8
Paribhāṣenduśekhara, Part II B, by Kielhorn, (No.9)... 0 8
Paribhāṣenduśekhara, Part II C, by Kielhorn, (No.12) 0 8
Pratāparudrayaśobhūṣaṇa, of Vidyānātha, with Commentary, by K. P. Trivedi, ( No. 65 ) ... 11 0
Raghuvaṁśa, Part I, by S. P. Pandit, ( No. 5 ) ... 1 8
Raghuvaṁśa, Part II, by S. P. Pandit, ( No. 8 ) ... ...
Raghuvaṁśa, Part III, by S. P. Pandit, ( No. 13 ) ... ...
Rājataraṅgiṇī, Part I, by Durgaprasad, (No.45) ... 1 8
Rājataraṅgiṇī, Part II, by Durgaprasad, ( No. 51 ) ... ...
Rājataraṅgiṇī, Part III, by P. Peterson, ( No. 54 ) ... ...
Rekhāgaṇita, Part I, by H. H. Dhruva and K. P. Trivedi, ( No. 61 ) ... ... ... 12 0
Rekhāgaṇita, Part II, by H. H. Dhruva and K. P. Trivedi, (No. 62 ) ... ... ... 9 0
Śārṅgadharapaddhati, Part I, by P. Peterson ( No. 37 ) ...
Ṣaḍbhāṣācandrikā of Lakṣmīdhara, by Trivedi, (No. 71) 7 8
Śrībhāṣya, Part I, by Abhyankar Shastri, (No. 68) ... 11
Śrībhāṣya, Part II, by Abhyankar Shastri, (No. 72 ) ... 6 0
Subhāṣitāvali of Vallabhadeva, by Peterson (No.31) ... 2 8
Tarkakaumudī of Laugākṣi Bhāskara, by N. M. Dvivedi, (No. 32) ... ... ... ...
Tarkasaṁgraha of Annambhaṭṭa, by Y. V. Athalye and M. R. Bodas ( No. 55 ) ... ... ... 3 0
Vāsiṣṭha-Dharmaśāstra, by A. A. Führer, ( No. 23 ) ... 0 12
Vaiyākaraṇabhūṣaṇa of Koṇḍabhaṭṭa, with two Commentaries, by K. P. Trivedi, ( No. 70 ) ... 10 0
Vendidad, in Two Volumes, ( out of Series ) ... 5 0
Vikramāṅkadevacarita, by G. Bühler, ( No. 14 ) ... ...
Vikramorvaśīya by S. P. Pandit, ( No. 16 ) ... 2 0
Yogasūtras of Patañjali, by Rajaram Shastri Bodas, and Vasudev Shastri Abhyankar, ( No. 46 ) ... 3 8

## BOMBAY SANSKRIT AND PRAKRIT SERIES.

*i) Works in Press.*

(1) Aṇubhāṣya of Vallabhācārya with an Original Commentary by Pandit Shridhar Shastri Pathak, Part II.

(2) Gaüḍavaho of Vākpati, by S. P. Pandit, No. 34 (*Second edition*).

(3) Hymns from Ṛgveda, Second Selection, By P. Peterson, No. 58 (*Second edition*).

(4) Kāvyādarśa of Daṇḍin with Com. Notes, etc. Part 3, by Dr. S. K. Belvalkar, and Raddi Shastri (No. 75).

(5) Kāvyālaṁkārasārasaṁgraha by N. D. Banhatti.

(6) Syādvādamañjarī of Malliṣeṇa with the Com. of Hemacandra and Notes by Prof. A. B. Dhruva, M. A., LL. B.

(7) Tarkabhāṣā of Keśavamiśra, with Notes, by Prof. D. R. Bhandarkar and Pandit Kedarnath.

*(ii) Works under Revision.*

(1) Āpastamba-Dharmasūtra Parts I and II, by Bühler, Nos. 44 and 50 (*Second edition*).

(2) Deśi-nāmamālā of Hemacandra, Second edition, with an Index by Prof. P. V. Ramanujaswami, M. A. (No. 17).

(3) Handbook to the study of Ṛgveda Parts I and II by P Peterson, Second edition (Nos. 41 and 43.)

(4) Naiṣkarmyasiddhi Second edition, by Prof. Hiriyanna, M. A., (No. 38)

(5) Nyāyakośa by Vamanacharya Jhalkikar, Second edition, revised and enlarged, (No. 49.)

(6) Rājataraṅginī of Kalhaṇa, Parts I, II, and III, by P. Peterson and Pandit Durgaprasad, Second edition, (Nos. 45, 51 and 54).

*(iii) Works in Preparation.*

(1) Mṛcchakaṭika, Vol. II, Notes, etc., by Sardar K. C. Mehendale, B. A.

(2) Nirukta, Vol. II, by R. G. hadkamkar, M. A.

(3) Prakriyākaumudī of Rāmacandra, by Rao Bahadur K. P. Trivedi, B. A.

(4) Vyavahāramayūkha of Nīlakaṇṭha, by Professor P. V. Kane, M. A., LL. M.

---

## GOVERNMENT ORIENTAL (HINDU) SERIES.

*(i) Works in Press.*

(1) Sarvadarśanasaṁgraha of Sāyaṇa, with a new commentary by Mahāmahopādhyāya Vasudeo Shastri Abhyankar.

*(ii) Works undertaken.*

(1) Āpastamba Śulba-Sūtra by Prof. R. N. Apte, M.A., LL. B.
(2) Bṛhatsaṁhitā of Varāhamihira by Mr. R. V. Patwardhan, B. A., LL. B.
(3) Nighaṇṭu and Nirukta by Prof. V. K. Rajwade, M. A.
(4) R. G. Bhandarkar's Collected Writings, Vol. I, by Mr. N. B. Utgikar, M. A.
(5) R. G. Bhandarkar's Collected Writings, Vol. II, by Mr. N. B. Utgikar, M. A.
(6) R. G. Bhandarkar's Collected Writings, Vol. III, by Mr. N. B. Utgikar, M. A.
(7) R. G. Bhandarkar's Collected Writings, Vol. IV, by Mr. N. B. Utgikar, M. A.
(8) Śābarabhāṣya with Com., by Dr. Ganganath Jha, M. A.,
(9) Vyākarṇa-Mahābhāṣya, English Translation, by Prof. K. V. Abhyankar, M. A., and Mahāmahopādhyāya Vasudeo Shastri Abhyankar.
(10) Vyākaraṇa-Mahābhāṣya, Word-Index to—, by Shridhar Shastri Pathak and Siddeshwar Shastri Chitrao.
(11) Mīmāṅsānyāya-prakāśikā of Āpadeva, by Pandit Padmanabha Shastri.
(12) Taittirīya Saṁhitā, Word-Index to—, by Pandit Parashuram Shastri.
(13) Nyāyasūtras with Vatsyāyana's Bhāṣya, by Principal A. B. Dhruva, M. A., LL. B.
(14) Kāśikāvṛtti by Mahāmahopādhyāya Shivadatta Shastri.

## MISCELLANEOUS WORKS.

( *i* ) *In Press.*

(1) List of new Mss. added to the Government Manuscripts Library (1895-1915).

( *ii* ) *In Preparation.*

(1) Catalogue of Sir R. G. Bhandarkar's Private Library.

***The Annals of the Bhandarkar Oriental Research Institute, issued six-monthly. Annual Subscription Rs. 10.

| | | | | |
|---|---|---|---|---|
| Vol. I, Part I. | ... | ... | ... | July 1919. |
| Do. Part II. | ... | ... | ... | January 1920. |
| Vol. II, Part I. | ... | ... | ... | July 1920. |
| Do. Part II. | ... | ... | ... | January 1921. |